भगवताऽऽत्रेयपुनर्वसुनोपदिष्टा तच्छिष्येण महर्षिणाग्निवेशेन तन्त्रिता

चरकदृढबलाभ्यां प्रतिसंस्कृता

# चरकसंहिता

सान्वय-हिंदी-गुर्जर-आङ्ग्लेति भाषात्रयानुवादालङ्कृता विविधपाठान्तरैः संयोजिता




भारतवर्षान्तर्गतसौराष्ट्रप्रदेशे श्री जामनगरे

श्री गुलाबकुंवरबा आयुर्वेदिक् सोसायटी इत्याख्यया संस्थया

संपादिता प्रकाशिता च

## द्वितीयः खण्डः

शकाब्दः १८७१, खिस्ताब्दः १९४९, विक्रमाब्दः २००६

मूल्यम् १२५ रूप्यकाः

सुशोभितावृत्तिः

# THE CARAKA SAṂHITĀ

EXPOUNDED BY THE WORSHIPFUL ĀTRĒYA PUNARVASU
COMPILED BY THE GREAT SAGE AGNIVĒŚA
AND REDACTED BY CARAKA & DRIḌHABALA

## VOLUME II




EDITED AND PUBLISHED
IN
SIX VOLUMES
WITH TRANSLATIONS IN HINDI, GUJARATI AND ENGLISH
BY

SHREE GULABKUNVERBA AYURVEDIC SOCIETY
JAMNAGAR
INDIA

DE LUXE EDITION 1949 RUPEES 125/-

# चरकसंहिताया विषयानुक्रमणिका।

## ३ आरग्वधीयोऽध्यायः।



## ४ षड्विरेचनशतीयोऽध्यायः।

## ६ तस्याशितीयोऽध्यायः।



## ७ नवेगान्धारणीयोऽध्यायः।



## ८ इन्द्रियोपक्रमणीयोऽध्यायः।

### ९ खुड्डाकचतुष्पादोऽध्यायः ।



### १० महाचतुष्पादोऽध्यायः ।



### ११ तिस्रैषणीयोऽध्यायः ।

## १२ वातकलाकलीयोऽध्यायः।



इति निर्देशचतुष्कः।

## १३ स्नेहाध्यायः।

## १४ स्वेदाध्यायः ।

## १८ त्रिशोथीयोऽध्यायः ।

## १९ अष्टोदरीयोऽध्यायः ।



## २० महारोगाध्यायः।

इति रोगचतुष्कः ।

## २१ अष्टौनिन्दितीयोऽध्यायः ।



## २२ लङ्घनबृंहणीयोऽध्यायः ।

## २३ संतर्पणीयोऽध्यायः।



## २४ विधिशोणितीयोऽध्यायः।



इति योजनाचतुष्कः।

## २५ यज्जःपुरुषीयोऽध्यायः।

## २७ अन्नपानविध्यध्यायः ।



### १ शूकधान्यवर्गः ।



### २ शमीधान्यवर्गः ।



### ३ मांसवर्गः ।

### ४ शाकवर्गः ।

विषयः — पृष्ठाङ्कः

## २८ विविधाशितपीतीयोऽध्यायः।

इति सूत्रस्थानस्य विषयानुक्रमणिका ।

# २ निदानस्थानम् ।

## १ ज्वरनिदानम् ।



## २ रक्तपित्तनिदानम् ।



## ३ गुल्मनिदानम् ।

विषयः पृष्ठाङ्कः

## ७ उन्मादनिदानम् ।



## ८ अपस्मारनिदानम् ।



इति निदानस्थानानुक्रमणिका ।

## ३ विमानस्थानम् ।

### १ रसविमानम् ।

## २ त्रिविधकुक्षीयविमानम् ।



## जनपदोद्ध्वंसनीयविमानम् ।

## ४ त्रिविधरोगविशेषविज्ञानीयं विमानम् ।



## ५ स्रोतोविमानम् ।



## ६ रोगानीकं विमानम् ।

इति विमानस्थानस्य विषयानुक्रमणिका ।

# श्रीः
# चरकसंहिता
## सूत्रस्थानम् ।

| श्री | श्री | The |
|---|---|---|
| ચરકસંહિતા | चरकसंहिता | Carakasamhita |
| સૂત્રસ્થાન | सूत्रस्थान | SUTRASTHANA<br>*( The Section on General Principles )* |

### प्रथमोऽध्यायः

**પહેલો અધ્યાય    अध्याय प्रथम    Chapter I**

दीर्घञ्जीवितीयाध्यायोपक्रमः—

**अथातो दीर्घञ्जीवितीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

अथ अतः હવે અહીંથી अब आगे, दीर्घञ्जीवितीयम् 'દીર્ઘંજીવિતીય'નામના 'दीर्घञ्जीवितीय'नामके, अध्यायम् અધ્યાયનું अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

1. We shall now expound the chapter entitled "The Quest for Longevity."

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

2. Thus declared the worshipful Ātreya.

आयुर्वेदाध्ययनार्थं भरद्वाजस्येन्द्रसकाशे गमनम्—

**दीर्घं जीवितमन्विच्छन् भरद्वाज उपागमत् ।**
**इन्द्रमुग्रतपा बुद्ध्वा शरण्यममरेश्वरम् ॥ ३ ॥**

दीर्घम् દીર્ઘ दीर्घ, जीवितम् જીવનના જ્ઞાનને जीवनके ज्ञानको, अन्विच्छन् શોધતા खोजते हुए, उग्रतपाः ઉગ્રતપસ્વી उग्रतपस्वी, भरद्वाजः ભરદ્વાજ भरद्वाज मुनि, अमरेश्वरम् અમરેશ્વર—દેવોના રાજા अमरेश्वर–देवताओंके स्वामी, इन्द्रम् ઇન્દ્રને इन्द्रको, शरण्यम् શરણ જવા યોગ્ય शरण जाने योग्य, बुद्ध्वा જાણીને समझ कर, (तम्) उपागमत् તેની પાસે ગયા उनके पास पहुंचे ॥३॥

3. Bharadvaja, the mighty ascetic, in search of (the science of) longevity approached Indra, having deemed him, the lord of the immortals, worthy of suit.

---

१. दीर्घंजीवितीयम्–दीर्घजीवितीयम् (ड, ढ, त, भ.)

३. दीर्घञ्जीवितम्–दीर्घजीवितम् (ग,ड.)

**ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः ।**
**जग्राह निखिलेनादावश्विनौ तु पुनस्ततः ॥ ४ ॥**
**अश्विभ्यां भगवाञ्छक्रः प्रतिपेदे ह केवलम् ।**
**ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत् ॥ ५ ॥**

**आदौ हि** કારણકે આદિકાળમાં क्योंकि आदिकालमें, **ब्रह्मणा** બ્રહ્માએ ब्रह्माने, **यथाप्रोक्तम्** જે પ્રમાણે કહ્યા હતા તે જ પ્રમાણે जिस प्रकार कहा गया था ऐसे, **आयुर्वेदम्** આયુર્વેદને आयुर्वेदको, **प्रजापतिः** दक्ष प्रजापतिએ दक्ष प्रजापतिने, **निखिलेन** સંપૂર્ણ રીતે पूर्णतया **जग्राह** ગ્રહણ કર્યો ग्रहण किया, **ततस्तु पुनः** અને તે પછી પ્રજાપતિ પાસેથી और प्रजापतिसे फिर, **अश्विनौ** અશ્વિનીકુમારોએ अश्विनीकुमारोंने, (**जगृहतुः** પ્રાપ્ત કર્યો ग्रहण किया) **अश्विभ्याम्** અશ્વિનીકુમારો પાસેથી अश्विनीकुमारोंसे, **भगवान्** ભગવાન भगवान, **शक्रः** ઇન્દ્રે इन्द्रने, **केवलम्** સંપૂર્ણરીતે संपूर्ण, **तम्** તેને आयुर्वेदको, **प्रतिपेदे ह** પ્રાપ્ત જ કર્યો प्राप्त ही किया था, **तस्मात्** તે માટે इसलिये, **ऋषिप्रोक्तः** ઋષિઓએ મોકલેલા ऋषियोंसे भेजे गए, **भरद्वाजः** ભરદ્વાજ भरद्वाज, **शक्रम्** ઇન્દ્ર પાસે इन्द्रके पास, **उपागमत्** આયુર્વેદ શીખવા માટે ગયા पहुंचे ॥ ५-६ ॥

4-5. Daksha Prajapati (the progenitor) first obtained the science of Life in its entirety, as promulgated by Brahma (the Great one – the Creator) and from him, in turn, the Aswin twins obtained it. From the Aswin Twins the god sakra (Indra) acquired it. Therefore Bharadvaja bidden by the sages approached Sakra.

**विघ्नभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।**
**तपोपवासाध्ययनब्रह्मचर्यव्रतायुषाम् ॥ ६ ॥**
**तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः ।**
**समेताः पुण्यकर्माणः पार्श्वे हिमवतः शुभे ॥ ७ ॥**

**यदा** જ્યારે जब, **शरीरिणाम्** શરીરધારીઓનાં शरीरधारियोंके, **तप-** તપ तप, **उपवास-** ઉપવાસ उपवास, **अध्ययन-** અધ્યયન अध्ययन, **ब्रह्मचर्य-** બ્રહ્મચર્ય ब्रह्मचर्य, **व्रत-** વ્રત व्रत, **आयुषाम्** અને આયુષ્યના और आयुके लिए, **विघ्नभूताः** વિઘ્નરૂપ विघ्नरूप, **रोगाः** રોગો रोग, **प्रादुर्भूताः** ઉત્પન્ન થયા उत्पन्न हुए, **तदा** ત્યારે तब, **भूतेषु** પ્રાણીઓ પર प्राणियों पर, **अनुक्रोशम्** દયા दया, **पुरस्कृत्य** કરીને करके, **पुण्यकर्माणः** પુણ્ય કર્મવાળા पुण्यकर्म करनेवाले, **महर्षयः** મહર્ષિઓ महर्षि, **हिमवतः** હિમાલયના हिमालयके, **शुभे पार्श्वे** પવિત્ર પ્રદેશમાં पवित्र प्रदेशमें, **समेताः** એકત્રિત થયા एकत्रित हुए ॥ ६-७ ॥

6-7. When diseases arose like so many impediments to the austerity, fasting, study, continence and the vows of the embodied souls, then the great sages, the doers of good, keeping compassion for creatures foremost, met together on the sacred slopes of the Himalayas.

**अङ्गिरा जमदग्निश्च वसिष्ठः कश्यपो भृगुः ।**
**आत्रेयो गौतमः साङ्ख्यः पुलस्त्यो नारदोऽसितः ॥८॥**
**अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ ।**
**पारिक्षिर्भिक्षुरात्रेयो भरद्वाजः कपिञ्ज(ष्ठ)लः ॥ ९ ॥**
**विश्वामित्राश्मरथ्यौ च भार्गवश्च्यवनोऽभिजित् ।**
**गार्ग्यः शाण्डिल्यकौण्डिन्यौ (ल्यौ) वार्क्षिर्देवलगालवौ**
**साङ्कृत्यो वैजवापिश्च कुशिको बादरायणः ।**
**वडिशः शरलोमा च काप्यकात्यायनावुभौ ॥ ११ ॥**
**काङ्कायनः कैकशेयो धौम्यो मारीचकाश्यपौ ।**
**शर्कराक्षो हिरण्याक्षो लोकाक्षः पैङ्गिरेव च ॥ १२ ॥**

---

५ शक्रः—इन्द्रः; (ट)
६—१ तपः—तत्र (ट)
” २ व्रतायुषाम्—व्रताजुषाम् (द,ध,प.)

९ पारिक्षिः—परिक्षित (ख)
,, पारिक्षुत् (ट)
१० विश्वामित्राश्मरथ्यौ—विश्वामित्राश्वरथ्यौ (क,घ,छ.)
वार्क्षि—वलि (घ)
११ साङ्कृत्य—सांकृत्यः (ट)
,, कुशिकः—सुषिरः (ट)
१२ १ मारीच—मारीचि (ट.ड.)
३ पैङ्गिः—पिङ्गिः (ग)
२ लोकाक्षः—लोकाक्षिः (ट)
४ पैङ्गिरेव च—पैङ्गिकौशिकः (ट)

**शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः ।**
**वैखानसा वालखिल्यास्तथा चान्ये महर्षयः॥ १३॥**
**ब्रह्मज्ञानस्य निधयो द(य)मस्य नियमस्य च ।**
**तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ॥ १४ ॥**
**सुखोपविष्टास्ते तत्र पुण्यां चक्रुः कथामिमाम् ।**

**अङ्गिराः** અંગિરા अंगिरा, **जमदग्निः** જમદગ્નિ जमदग्नि, **वसिष्ठः** વસિષ્ઠ वसिष्ठ, **कश्यपः** કશ્યપ कश्यप, **भृगुः** ભૃગુ भृगु, **आत्रेयः** આત્રેય आत्रेय, **गौतमः** ગૌતમ गौतम, **सांख्यः** સાંખ્ય सांख्य, **पुलस्त्यः** પુલસ્ત્ય पुलस्त्य, **नारदः** નારદ नारद, **असितः च** અને અસિત और असित, **अगस्त्यः** અગસ્ત્ય अगस्त्य, **वामदेवः** વામદેવ वामदेव, **मार्कण्डेयाश्वलायनौ** માર્કંડેય અને આશ્વલાયન मार्कण्डेय और आश्वलायन, **पारिक्षिः** પારિક્ષિ पारिक्षि, **भिक्षुः आत्रेयः** ભિક્ષુ આત્રેય भिक्षु आत्रेय, **भरद्वाजः** ભરદ્વાજ भरद्वाज, **कपिलञ्जः-च** અને કપિંજલ और कपिञ्जल, **विश्वामित्राश्मरथ्यौ** વિશ્વામિત્ર અને આશ્મરથ્ય विश्वामित्र और आश्मरथ्य, **भार्गवः** ભાર્ગવ भार्गव, **च्यवनः** ચ્યવન च्यवन, **अभिजित्** અભિજિત્ अभिजित्, **गार्ग्यः** ગાર્ગ્ય गार्ग्य, **शाण्डिल्य—**શાણ્ડિલ્ય शाण्डिल्य, **कौण्डिन्यौ** અને કૌણ્ડિન્ય और कौण्डिन्य, **वार्क्षिः** વાર્ક્ષિ वार्क्षि, **देवल—गालवौ च** દેવલ અને ગાલવ देवल और गालव, **साङ्कृत्यः** સાંકૃત્ય साङ्कृत्य, **वैजवापिः च** અને વૈજવાપિ और वैजवापि, **कुशिकः** કુશિક कुशिक, **बादरायणः** બાદરાયણ बादरायण, **बडिशः** બડિશ बडिश, **शरलोमा** શરલોમા शरलोमा, **उभौ काप्यकात्यायनौ च** અને બન્ને કાપ્ય તથા કાત્યાયન और दोनों काप्य व कात्यायन, **काङ्कायनः** કાંકાયન काङ्कायन, **कैकशेयः** કૈકશેય कैकशेय, **धौम्यः** ધૌમ્ય धौम्य, **मारीच—काश्यपौ** મારીચ અને કાશ્યપ मारीच और काश्यप, **शर्कराक्षः** શર્કરાક્ષ शर्कराक्ष, **हिरण्याक्षः** હિરણ્યાક્ષ हिरण्याक्ष, **लोकाक्षः** લોકાક્ષ लोकाक्ष, **पैङ्गिः एव च** અને પૈંગિ પણ और पैङ्गि भी, **शौनकः** શૌનક शौनक, **शाकुनेयः च** અને શાકુનેય और शाकुनेय, **मैत्रेयः** મૈત્રેય मैत्रेय, **मैमतायनिः** મૈમતાયનિ मैमतायनि, **वैखानसाः** વૈખાનસ वैखानस, **वालखिल्याः** વાલખિલ્યો वालखिल्य, **तथा अन्ये महर्षयः च** અને બીજા મહર્ષિઓ एवं दूसरे महर्षिभी, **ब्रह्मज्ञानस्य** બ્રહ્મજ્ઞાન ब्रह्मज्ञान, **यमस्य** યમ (દમ) अहिंसा आदि यम, **नियमस्य च** અને નિયમના और शौच आदि नियमके, **निधयः** ભંડાર भण्डार, **तपसः तेजसा** તપના તેજથી तपके तेजसे, **हूयमानाः** પ્રજ્વલિત प्रज्वलित, **अग्नयः इव** હોમાગ્નિની પેઠે होमाग्निके समान, **दीप्ताः** દેદીપ્યમાન देदीप्यमान, **ते** તેઓ और, **तत्र** તહાં वहाँ, **सुखोपविष्टाः** સુખપૂર્વક બેસીને सुखपूर्वक बैठकर, **इमाम्** આ इस, **पुण्याम्** પવિત્ર पवित्र, **कथाम्** ચર્ચા चर्चाको, **चक्रुः** કરવા લાગ્યા करने लगे ॥ ८–१४½ ॥

8-14½. Angiras, Jamadagni, Vasistha, Kasyapa, Bhrigu, Atreya, Gautama, Sankhya, Pulastya, Narada, Asita. Agastya, Vamdeva, Markendeya, Asvalayana, Parikshi, Atreya the Mendicant, Bharadvaja, Kapinjala. Visvamitra, Asmarathya, Bhargava, Cyavana, Abhijit, Gargya, Sandilya, Kaundilya, Varkshi, Devala and Galava, Sankritya, Vaijavapi, Kusika, Badarayana, Badisa, Saraloma, and both Kapya and Katyayana, Kankayana, Kaikaseya, Dhaumya, Marica, Kasyapa, Sarkaraksha, Hiranyaksha, Lokaksha and Paingi; likewise, Saunaka, Sakuneya, Maitreya, Maimatayani, the forest-dwelling hermits, Valakhilyas, and likewise other great sages—all of them veritable mines of the Brahmic lore, and of restraint and discipline, and resplendent with the glow of austerities, like to fires fed with oblations—seated at ease there, initiated the following inquiry:—

**धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ॥ १५ ॥**
**रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ।**
**प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ॥ १६ ॥**
**कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः ।**

१४ तपसः—तपन्तः (घ)

१५. उत्तमम्—साधनम् (ट)

१६. अपहर्तारः—अपहन्तारः [द]

**धर्म - अर्थ - काम - मोक्षाणाम्** ધર્મ - અર્થ - કામ અને મોક્ષનું धर्म - अर्थ - काम और मोक्षका, **उत्तमम्** પ્રધાન प्रधान, **मूलम्** કારણ कारण, **आरोग्यम्** આરોગ્ય आरोग्य ( **अस्ति** છે है), **रोगाः** રોગો रोग, **तस्य** તેનો उस आरोग्यको, **श्रेयसः** શ્રેયનો श्रेयको, **जीवितस्य च** અને જીવનનો और जीवनको, **अपहर्तारः** ( **सन्ति** ) નાશ કરનારા છે नष्टकरनेवाले हैं, **अयम्** આ यह, **मनुष्याणाम्** મનુષ્યોને मनुष्योंके लिए, **महान्** મહાન महान, **अन्तरायः** વિઘ્ન विघ्न, **प्रादुर्भूतः** ઉત્પન્ન થયું છે उत्पन्न हुवा है, **तेषाम्** તે રોગોની उन रोगोंकी, **शमोपायः** શાન્તિનો ઉપાય शान्तिका उपाय, **कः स्यात्** શો હોઈ શકે क्या हो, **इति** એમ ऐसा, **उक्त्वा** કહીને कहकर, ( **ते मुनयः** તે મુનિઓ वे ऋषि ) **ध्यानम् आस्थिताः** ધ્યાનમગ્ન થયા ध्यानमग्न हो गये ॥ १५-१६½ ॥

15-16½. "Health is the supreme foundation of virtue, wealth and enjoyment and salvation. Now diseases are the destroyers of health, of the good of life, and even of life itself. Thus has arisen the great impediment to the progress of humanity. What shall be the means of remedying it ?" Having observed thus, they sat in meditation.

**अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ॥ १७ ॥**
**स वक्ष्यति शमोपायं यथावदमरप्रभुः ।**

**अथ** પછી और, **ते** તેઓએ उन्होंने, **ध्यानचक्षुषा** ધ્યાનચક્ષુથી ध्यानचक्षुसे, **शक्रम्** ઇન્દ્રને इन्द्रको, **शरणम्** રક્ષકરૂપે रक्षकरूपमें, **ददृशुः** જોયા देखा, **सः अमरप्रभुः** તે અમરેશ્વર वह अमरप्रभु, **शमोपायम्** શાન્તિનો ઉપાય शान्तिके उपायको, **यथावत्** યોગ્ય રીતે ठीक प्रकारसे, **वक्ष्यति** કહેશે એમ જાણ્યું कहेंगे ऐसा जाना ॥ १७-१७½ ॥

17-17½. Then they saw with the eye of understanding their refuge in Indra. "He, the lord of the immortals, shall tell us rightly the means of overcoming disease".

**कः सहस्राक्षभवनं गच्छेत् प्रष्टुं शचीपतिम् ॥ १८ ॥**
**अहमर्थे नियुज्येयमत्रेति प्रथमं वचः ।**
**भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः ॥ १९ ॥**

( **परन्तु** પણ परन्तु ) **शचीपतिम्** ઇન્દ્રને इन्द्रसे, **प्रष्टुम्** પૂછવા માટે पूछनेके लिए, **सहस्राक्ष-भवनम्** ઇન્દ્રના ભવન પ્રત્યે इन्द्रके भवनको, **कः** કોણ कौन, **गच्छेत्** જશે जायगा, **भरद्वाजः** ભરદ્વાજ મુનિએ भरद्वाज मुनिने, **प्रथमं वचः** સૌથી પ્રથમ વચન पहिले वचन, **अब्रवीत्** કહ્યું કે कहा कि, **अहम्** મને मैं, **अत्र अर्थे** આ કાર્યમાં इस कार्यमें, **नियुज्येयम् इति** નિયુક્ત કરો नियुक्त किया जाऊं, **तस्मात्** તેથી इसलिए, **ऋषिभिः** ઋષિઓએ ऋषिओंद्वारा, **सः** તેને वही, **नियोजितः** નિયુક્ત કર્યો नियुक्त किया गया ॥१८-१९ ।

18-19. Who will go to the abode of thousand-eyed Indra in order to inquire and learn from that lord of Saci (Indra). "I should be charged with this misson". The first to speak these words was Bharadvāja. Hence was he commissioned by the sages.

**स शक्रभवनं गत्वा सुरर्षिगणमध्यगम् ।**
**ददर्श बलहन्तारं दीप्यमानमिवानलम् ॥ २० ॥**

**सः** તે ભરદ્વાજ મુનિએ भरद्वाज मुनिने, **शक्रभवनम्** ઇન્દ્રના ભવન પર इन्द्रके भवन पर, **गत्वा** પહોંચીને पहुंच कर, **अनलम् इव** અગ્નિસમાન अग्निके समान, **दीप्यमानम्** દેદીપ્યમાન देदीप्यमान, **बलहन्तारम्** અને બલાસુરને મારનાર ભગવાન ઇન્દ્રને

१७. आस्थिताः—आश्रिताः (ट)

२०. भवनं—सदनं [ट]
मध्यगम्-सेवितम् [ग, घ, ट, ढ.]

और बलासुरको मारनेवाले भगवान इन्द्रको, **सुरर्षिगणमध्यगम्** દેવર્ષિઓની મધ્યમાં બિરાજમાન देवर्षियोंके बीचमें बैठे हुए, **ददर्श** જોયા देखा ॥ २० ॥

20. Having gone to the abode of Indra, he saw (him) that slayer of Bala, seated amidst celestial sages and shining like fire.

**सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ।**
**प्रोवाच विनयाद्धीमानृषीणां वाक्यमुत्तमम् ॥ २१ ॥**

**धीमान् सः** બુદ્ધિમાન ભરદ્વાજ મુનિએ बुद्धिमान भरद्वाज मुनिने, **अभिगम्य** સંમુખ ઉપસ્થિત થઇ संमुख उपस्थित होकर, **जयाशीर्भिः** 'જય હો' એવા આશીર્વાદથી 'जय हो' ऐसे आशीर्वचनोंसे, **सुरेश्वरम् अभिनन्द्य** ઈન્દ્રને અભિનંદન આપીને इन्द्रका अभिनन्दन करके, **ऋषीणाम्** ઋષિઓનું ऋषिओंके, **उत्तमं वाक्यम्** ઉત્તમ વાક્ય उत्तम वाक्यको **विनयात्** વિનયપૂર્વક विनयपूर्वक, **प्रोवाच** કહ્યું कहा ॥ २१ ॥

21. Having approached the chief of the gods, and saluting him with benedictory cries of 'Victory', he, the intelligent one, delivered, with humility, the excellent message of the sages.

**व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः ।**
**तद्ब्रूहि मे शमोपायं यथावदमरप्रभो ॥ २२ ॥**

**अमरप्रभो** હે અમરેશ્વર हे अमरप्रभो, **सर्वप्राणिभयङ्कराः** સર્વ પ્રાણીઓને ભય કરનાર सब-प्राणियोंके लिए भयङ्कर, **व्याधयः** વ્યાધિઓ व्याधियाँ, **समुत्पन्नाः** ઉત્પન્ન થયા છે उत्पन्न हो गई हैं, **तद्** તે માટે इस लिए, **शमोपायम्** શાન્તિનો ઉપાય निवारणके उपायको, **यथावत्** યથાવત્ भलीप्रकार, **मे** મને मुझे, **ब्रूहि** કહો बतलाइए ॥ २२ ॥

22. Diseases have arisen which are the terror of all human beings. Tell me, O Lord of the immortals, the appropriate means of remedying them.

इन्द्रेण कृत भरद्वाजाय आयुर्वेदस्य प्रवचनम्—

**तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः ।**
**पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥ २३ ॥**

**भगवान्** ભગવાન भगवान, **शतक्रतुः** ઇન્દ્રે इन्द्रने, **विपुलाम्** અતિશય तीव्र, **मतिम्** બુદ્ધિ बुद्धि, **बुद्ध्वा** સમજીને देखकर, **तस्मै** તે उस, **परमर्षये** મહર્ષિ ભરદ્વાજને महर्षि भरद्वाजको, **अल्पैः पदैः** સંક્ષેપમાં संक्षेपमें, **आयुर्वेदम्** (તેને) આયુર્વેદનો आयुर्वेदका, **प्रोवाच** ઉપદેશ કર્યો उपदेश दिया ॥ २३ ॥

23. Unto the sage-the great Lord Satakratu (Indra), knowing his wide understanding, propounded in a few words the science of Life.

**हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।**
**त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ॥ २४ ॥**

**हेतुलिङ्गौषधज्ञानम्** હેતુ-લિંગ અને ઔષધના જ્ઞાનરૂપ हेतु-लिङ्ग और औषधको बतानेवाले, **स्वस्थ—आतुर—परायणम्** તથા સ્વસ્થ અને આતુરને ઉત્તમ આશ્રયરૂપ स्वस्थ एवं आतुर दोनोंके लिए सहारा, **त्रिसूत्रम्** ત્રિસૂત્રરૂપ त्रिसूत्ररूप, **शाश्वतम्** નિત્ય नित्य, **पुण्यम्** અને પવિત્ર और पवित्र, **यम्** જે આયુર્વેદને जिस आयुर्वेदको, **पितामहः** બ્રહ્માએ ब्रह्माने, **बुबुधे** જાણ્યો હતો जाना था ॥ २४ ॥

24. He taught the science of causes, symptoms and medication, the supreme refuge of both the healthy and the ailing, the tripartite science, eternal and holy, which the Great Father (Brahma) knew.

---

२१ विनयात्-भगवान् [क, ख, घ, छ, झ, ठ, ड, द, ध]
विनयेनाभिगम्यैनं द्रष्टुकामो महायशाः । दृष्टैव च मुनिं प्राह भगवान् पाकशासनः ॥ स्वागतं चेति धर्मज्ञो मुनिस्तस्माद्य-श्चेप्सितम् । अर्चितश्च यथान्यायमुपविष्टः समागतः ॥ तत्रोपायं विकाराणां पप्रच्छ हरिवाहनम् । [ग,थ,ध] ब्रूहि नः प्रशमोपायं तेषाममरसत्तम ॥ श्रुत्वेति वचनं तस्य सर्वभूतहितावहम् । **तस्मै प्रोवाच** [ध]

**सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः ।**
**यथावदचिरात् सर्वं बुबुधे तन्मना मुनिः ॥ २५ ॥**

**महामतिः सः मुनिः** મહામતિ તે ભરદ્વાજે महामति उस मुनिने, **तन्मनाः** ( **सन्** ) તન્મય થઈને तन्मय होकर, **अनन्तपारम्** અતિ દુસ્તર अति दुस्तर, **त्रिस्कन्धम्** ત્રિસ્કન્ધરૂપ त्रिस्कन्धरूप, **सर्वम्** સઘળા संपूर्ण, **आयुर्वेदम्** આયુર્વેદને आयुर्वेदको, **अचिरात्** સત્વર शीघ्र ही, **यथावत्** યથાવત् भली प्रकार, **बुबुधे** સમજી લીધો समझ लिया ॥ २५ ॥

25. He, the sage of great understanding, soon learned correctly by single-minded devotion, the whole Science of Life, tri-based and extending without end.

**तेनायुरमितं लेभे भरद्वाजः सुखान्वितम् ।**
**ऋषिभ्योऽनधिकं तच्च शशंसानवशेषयन् ॥ २६ ॥**

**भरद्वाजः** ભરદ્વાજે भरद्वाजने, **तेन** તે આયુર્વેદના જ્ઞાનથી उस आयुर्वेदके ज्ञान द्वारा, **सुखान्वितम्** સુખયુક્ત सुखयुक्त, **अमितम्** દીર્ઘ दीर्घ, **आयुः** આયુષ્ય आयु, **लेभे** પ્રાપ્ત કર્યું प्राप्त की, **तत् च** અને તેનો और उस आयुर्वेदका, **ऋषिभ्यः** ઋષિઓને ऋषिओंको, **अनधिकम् अनवशेषयन्** કંઈપણ વધારો ઘટાડો કર્યા વિના न अधिक और न कम करते हुए, **शशंस** ઉપદેશ કર્યો उपदेश किया ॥ २६ ॥

26. Bharadvaja thereby acquired unmeasured life endowed with happiness, and (in his turn) taught it (the science) to the sages, without either adding or withholding any part.

आयुर्वेदस्य भूतले प्रवर्तनम्–

**ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् ।**
**दीर्घमायुश्चिकीर्षन्तो वेदं वर्धनमायुषः ॥ २७ ॥**

**आयुः** આયુષ્યને आयुको, **दीर्घम्** દીર્ઘ दीर्घ, **चिकीर्षन्तः** બનાવવાની ઇચ્છાવાળા बनानेकी इच्छा रखनेवाले, **ऋषयः च** મહર્ષિઓએ પણ ऋषियोंने भी, **प्रजाहितम्** લોકહિતકારી लोकहितकारी, **आयुषः वर्धनम्** અને આયુષ્યની વૃદ્ધિ કરનાર और आयुको बढानेवाले, **तम् वेदम्** તે આયુર્વેદને उस आयुर्वेदको, **भरद्वाजात्** ભરદ્વાજ પાસેથી भरद्वाज मुनिसे, **जगृहुः** ગ્રહણ કર્યો ग्रहण किया ॥ २७ ॥

27. And the sages, desiring longevity, received that science, beneficial to humanity and promotive of life, from Bharadvaja.

**महर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।**
**सामान्यं च विशेषं च गुणान् द्रव्याणि कर्म च ॥ २८ ॥**
**समवायं च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः ।**
**लेभिरे परमं शर्म जीवितं चाप्यनित्वरम् ॥ २९ ॥**

**ते महर्षयः** તે મહર્ષિઓએ उन महर्षियोंने, **ज्ञानचक्षुषा** જ્ઞાનરૂપી ચક્ષુથી ज्ञानरूपी चक्षुसे, **सामान्यं च** સામાન્યને અને सामान्य और, **विशेषं च** વિશેષને विशेषको, **गुणान् द्रव्याणि कर्म च** ગુણો–દ્રવ્યો અને કર્મોને गुण–द्रव्य और कर्मको, **समवायं च** અને સમવાયને और समवायको, **यथावत्** યથાવત્ भली प्रकारसे, **ददृशुः** જાણી લીધા जान लिया, **तत् ज्ञात्वा** તેને જાણીને उस सामान्य आदिको समझकर, **तन्त्रोक्तम्** આયુર્વેદોક્ત आयुर्वेदोक्त, **विधिम्** વિધિનો विधिका, **आस्थिताः**

---

२५ आयुर्वेदं महामतिः - आयुर्वेदमहोदधिम् [ख]
,, तन्मना - तन्महा [थ]
२५ श्लोकानन्तरम्
शब्दाक्षरपदन्यासच्छन्दोवृत्तस्वरक्रमैः ।
श्रुत्वा सहस्रवर्षाणामारोग्यार्थविनिश्चयम् ॥१॥ [ख,थ.]
शब्दाक्षरपदन्यासच्छन्दोवृत्तरसक्रमैः ।
श्रुत्वा सहस्रवर्षाणामारोग्यार्थविनिश्चयम् ॥ १ ॥ [ध.]
२६ अमितम्–अमृतम् (ट)
सुखान्वितम्–सुखान्वितः (ख, झ, ठ.)
तच्च–तं च (क, च, छ, ध)

२७ ऋषयश्च–ऋषयस्ते [ट]
२८ महर्षयस्ते–१ तेनर्षयस्ते (क, च, द.)
,, ३ ऋषयस्तेन (ट)
२ तेन ते ददृशुः सर्वे. (ग)
२९ अनित्वरम्–अनश्वरम् (ख,ग,च,झ,त,थ,ष.)
,, निर्गदम् (ड)

આશ્રય કરીને आश्रय लेकर, **परमं शर्म** પરમ સુખ परम सुख, **च** અને और, **अनित्वरम** અનશ્વર-દીર્ઘ अनश्वर-दीर्घ, **जीवितम** આયુષ્ય आयुष्य, **अपि** પણ भी, **लेभिरे** પ્રાપ્ત કર્યું प्राप्त किया ॥ २८-२९ ॥

These great sages perceived this science with the eye of discernment; the nature of the general and the particular; the substances, their qualities, action and inherent relation; and understanding it and then conforming to the rules laid down in the systems, they attained the highest happiness and enduring life.

**अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः ।**
**शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया ॥३०॥**

**अथ** તે પછી इसके पश्चात्, **मैत्रीपरः** સર્વ પ્રાણીઓના મિત્રભૂત सर्व प्राणियोंके मित्रभूत, **पुनर्वसुः** પુનર્વસુએ पुनर्वसुने, **सर्वभूत-अनुकम्पया** સર્વ પ્રાણી પર દયા કરીને सकल जीवोंपर दयाकी दृष्टिसे, **पुण्यम्** પવિત્ર पवित्र, **आयुर्वेदम्** આયુર્વેદ आयुर्वेदको, **षड्भ्यः शिष्येभ्यः** ૭ શિષ્યોને छह शिष्योंको, **दत्तवान्** આપ્યો प्रदान किया ॥ ३० ॥

30. Thereafter Punarvasu, the most benevolent, moved by compassion for all creatures, bestowed the science of life on his six disciples.

**अग्निवेशश्च भेल(ड)श्च जतूकर्णः पराशरः ।**
**हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥ ३१ ॥**

**अग्निवेशः च** અગ્નિવેશ અને अग्निवेश और, **भेलः (डः) च** ભેલ भेल, **जतूकर्णः** અને જતૂકર્ણ और जतूकर्ण, **पराशरः** પરાશર पराशर, **हारीतः** હારીત हारीत, **क्षारपाणिः च** અને ક્ષારપાણિએ तथा क्षारपाणिने, **मुनेः** મુનિનો मुनिके, **तद् वचः** તે ઉપદેશ उस उपदेशको, **जगृहुः** ગ્રહણ કર્યો ग्रहण किया ॥ ३१ ॥

३० षड्भ्यः—तेभ्यः (ग)
,, —सद्भ्यः (ट)
३१ जतूकर्णः पराशरः-जातूकर्णपराशरौ (ध)

31. Agnivesa, Bhela, Jatūkarna, Parasara, Harita, and Ksharapani received the teaching of the sage.

अग्निवेशस्य प्रथमं तन्त्रकर्तृत्वम्—

**बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः ।**
**तन्त्रस्य कर्ता प्रथममग्निवेशो यतोऽभवत् ॥ ३२ ॥**

**तत्र** અગ્નિવેશમાં अग्निवेशमें, **बुद्धेः** બુદ્ધિનું बुद्धिका, **विशेषः** આધિક્ય आधिक्य, **आसीत्** હતું था, **मुनेः** મુનિના ऋषिके, **उपदेशान्तरम्** ઉપદેશમાં ફેરફાર उपदेशमें अन्तर, **न** ન હતો नहीं था, **यतः** જેથી जिससे कि, **प्रथमम्** સૌ પહેલાં सबसे पहिले, **तन्त्रस्य** આયુર્વેદ તંત્રના आयुर्वेद तन्त्रका, **कर्ता** કર્તા बनानेवाला, **अग्निवेशः** અગ્નિવેશ अग्निवेश, **अभवत्** થયા हुआ ॥ ३२ ॥

32. It was the excellence of his own understanding and not any difference in instruction by the sage whereby Agnivesa became the foremost compiler of the Science.

**अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च ।**
**श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः ॥ ३३ ॥**

**अथ** પછી फिर तो, **भेलादयः** ભેલ વગેરેએ भेल आदिने भी, **स्वं स्वं** પોતપોતાનાં अपने अपने, **तन्त्रम्** તન્ત્રો तन्त्र, **चक्रुः** રચ્યાં बनाये, **कृतानि च** અને તેઓએ રચેલાં તન્ત્રો और रचित तन्त्रोंको, **सुमेधसः** ઉત્તમ બુદ્ધિવાળા તે અગ્નિવેશ આદિએ शोभनबुद्धिवाले अग्निवेश आदिने, **सर्षिसङ्घम्** ઋષિઓના સમૂહમાં બેઠેલા ऋषिसमूहमें बैठे हुए, **आत्रेयम्** આત્રેયને आत्रेयको, **श्रावयामासु :** સંભળાવ્યાં सुनाये ॥ ३३ ॥

33. Thereafter Bhela and the rest made each his own compilation of the science, and these talented ones read them out to Atreya and the assembly of the sages.

३२ तन्त्रस्य कर्ता—तन्त्रप्रणेता (ग)
३३ अथ - तथा (ट)
कृतानि - श्रुतानि (ट)
सर्षिसङ्घं - सर्षिसिंहम् (ग)

षट्सु तन्त्रेषु महर्षिणामनुमोदनम्—

**श्रुत्वा सूत्रणमर्थानामृषयः पुण्यकर्मणाम् ।**
**यथावत्सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे ॥ ३४ ॥**

**पुण्यकर्मणाम्** પુણ્યકર્મશાળી અગ્નિવેશ આદિના पुण्य कर्मशाली अग्निवेश आदिके, **अर्थानाम्** આયુર્વેદીય અર્થોનું आयुर्वेदीय अर्थोंकी, **सूत्रणम्** ગ્રથન रचना, **श्रुत्वा** સાંભળીને सुनकर, **ते ऋषयः** તે ઋષિઓ वे ऋषिलोग, **प्रहृष्टाः** પ્રસન્ન થઈને प्रसन्न होते हुए, **यथावत्** આપે યથાવત્ अच्छी, **सूत्रितम्** ગ્રથન કર્યું છે रचना की है, **इति** એમ ऐसी, **अनुमेनिरे** (કહીને તેનો) તેઓએ સ્વીકાર કર્યો अनुमति प्रकट की ॥ ३४ ॥

34. The sages, having listened to the presentation of the subject by these virtuous men, rejoiced, acclaiming that it (the science) had been truly presented.

**सर्वे एवास्तुवंस्तांश्च सर्वभूतहितैषिणः ।**
**साधु भूतेष्वनुक्रोश इत्युच्चैरब्रुवन् समम् ॥ ३५ ॥**

**सर्वभूत-हितैषिणः** સર્વ પ્રાણીઓનું હિત ચાહનારા सर्व प्राणियोंका हित चाहने वाले, **सर्वे एव** બધાય ઋષિઓએ सभी महर्षियोंने, **तान्** તેઓની उनकी, **अस्तुवन्** પ્રશંસા કરી प्रशंसा की, **भूतेषु** અને પ્રાણીઓ ઉપર और प्राणियों पर, **साधु** આપે સારી રીતે बड़ी, **अनुक्रोशः** દયા કરી दया की, **इति च** એમ ऐसा, **समम्** સર્વે એકી સાથે एकसाथ, **उच्चैः** ઉચ્ચ સ્વરથી उच्च स्वरसे, **अब्रुवन्** બોલ્યા कहा ॥ ३५ ॥

35. All of them, pursuant of the welfare of all creatures, extolled the authors, saying "Great is your compassion for creatures."

**तं पुण्यं शुश्रुवुः शब्दं दिवि देवर्षयः स्थिताः ।**
**सामराः परमर्षीणां श्रुत्वा मुमुदिरे परम् ॥ ३६ ॥**

**दिवि स्थिताः** આકાશમાં રહેલા आकाशमें स्थित, **सामराः** દેવો સહિત देवताओंके साथ, **देवर्षयः** દેવર્ષિઓએ देवर्षियोंने, **परमर्षीणाम्** તે ઋષિઓના महर्षियोंके, **तम्** તે इस, **पुण्यंशब्दम्** મંગલકારી શબ્દ पवित्र शब्दको, **शुश्रुवुः** સાંભળ્યો सुना, **श्रुत्वा** અને સાંભળીને और सुनकर, **परम्** અતિશય अति, **मुमुदिरे** આનંદ પામ્યા आनन्दित हुए ॥ ३६ ॥

36. The celestial sages, together with the immortals, stationed in Heaven, heard that auspicious cry of the great sages, and hearing, rejoiced greatly.

**अहो साध्विति निर्घोषो लोकांस्त्रीनन्ववा(ना)दयत् ।**
**नभसि स्निग्धगम्भीरो हर्षाद् भूतैरुदीरितः ॥ ३७ ॥**

**नभसि** આકાશમાં રહેલા आकाशमें, **भूतैः** દેવોએ देवताओंने, **हर्षात** હર્ષથી हर्षसे, **उदीरितः** ઉચ્ચારેલા उच्चारित, 'अहो साधु' અહો વાહ વાહ अहो साधु, **इति** એવા इस, **स्निग्ध-गम्भीरः** સ્નિગ્ધ અને ગંભીર स्निग्ध और गंभीर, **निर्घोषः** નાદે शब्दने, **त्रीन्** ત્રણે तीनों, **लोकान्** લોકને लोकोंको, **अन्ववादयत्** ગજવી મૂક્યા गुंजा दिया ॥ ३७ ॥

37. "O, well-done!"—that ovation, generous and profound, echoed with joy by all creatures in the sky, resounded throughout the three worlds.

**शिवो वायुर्ववौ सर्वा भाभिरुन्मीलिता दिशः ।**
**निपेतुः सजलाश्चैव दिव्याः कुसुमवृष्टयः ॥ ३८ ॥**

**शिवः** કલ્યાણકારી कल्याणकारी, **वायुः** વાયુ वायु, **ववौ** વાવા લાગ્યો बहने लगी, **सर्वाः दिशः** સર્વે દિશાઓ सब दिशाएँ, **भाभिः** તેજથી तेजसे, **उन्मीलिताः** પ્રકાશિત થઈ प्रकाशित होगई, **सजलाः** જલસહિત जलसहित, **दिव्याः** દિવ્ય दिव्य, **कुसुम-वृष्टयः** પુષ્પવૃષ્ટિ पुष्पवृष्टि, **च एव** પણ भी, **निपेतुः** પડી गिर पड़ी ॥ ३८ ॥

38. The winds blew salubriously, all the quarters expanded with radiance, and divine showers of blossoms, together with rain,—descended.

३४ सूत्रितम् - साधितम् (ट)
३५ साधु भूतेषु—सर्वभूतेषु (ह)
३७ निर्घोष:- घोषश्च (ट, द.)
३८ चैव - रम्या (ट)

**अथाग्निवेशप्रमुखान् विविशुर्ज्ञानदेवताः ।**
**बुद्धिः सिद्धिः स्मृतिर्मेधा धृतिः कीर्तिः क्षमा दया ॥३९॥**

**अथ** પછી पीछे, **अग्निवेशप्रमुखान्** અગ્નિવેશાદિ ઋષિઓમાં अग्निवेश आदि महर्षियोंमें, **बुद्धि** બુદ્ધિ बुद्धि, **सिद्धिः** સિદ્ધિ सिद्धि, **स्मृतिः** સ્મૃતિ स्मृति, **मेधा** મેધા मेधा, **धृतिः** ધૃતિ धृति, **कीर्तिः** કીર્તિ कीर्ति, **क्षमा** ક્ષમા क्षमा, **दया** અને દયા और दया, **ज्ञानदेवताः** એ જ્ઞાનદેવતાઓએ इन ज्ञानदेवताओंने, **विविशुः** પ્રવેશ કર્યો प्रवेश किया ॥ ३९ ॥

39. Thereafter the goddesses of Enlightenment, Understanding, Achievement, Memory, Genius, Resolution, Eloquence, Forgiveness and Compassion entered into Agnivesa and the rest.

**तानि चानुमतान्येषां तन्त्राणि परमर्षिभिः ।**
**भ(भा)वाय भूतसङ्घानां प्रतिष्ठां भुवि लेभिरे ॥४०॥**

**एषाम् च** તે અગ્નિવેશાદિનાં इन अग्निवेश आदिके, **परमर्षिभिः** પરમર્ષિઓએ परमर्षियोंसे, **अनुमतानि** સ્વીકારેલાં स्वीकृत, **तानि तन्त्राणि** તે તન્ત્રોએ वे तन्त्र, **भूतसङ्घानाम्** લોકસમૂહની लोकसमूहकी, **भवाय** સ્થિતિ માટે स्थितिके लिए, **भुवि** પૃથ્વી પર पृथ्वी पर, **प्रतिष्ठाम्** ખ્યાતિ संमानको, **लेभिरे** પ્રાપ્ત કરી प्राप्त हुए ॥ ४० ॥

40. The compilations of these (compilers) which were (thus) approved by the great sages obtained currency in the world for the well-being of the multitude of living beings.

आयुर्वेदस्य लक्षणम्—

**हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।**
**मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते ॥ ४१ ॥**

**हित - अहितम्** હિતમય - અહિતમય हितसंज्ञक - अहितसंज्ञक, **सुखम्** સુખમય सुखसंज्ञक, **दुःखम्** દુઃખમય दुःखसंज्ञक, **आयुः** આયુ आयु, **तस्य** તથા તે ચતુર્વિધ આયુષ્યનું उस आयुका, **हित - अहितम्** પથ્યાપથ્ય पथ्यापथ्य, **मानम् च** પ્રમાણ અને અપ્રમાણ प्रमाण एवं अप्रमाण, **तत् च** તથા આયુષ્યનું લક્ષણ तथा आयुका लक्षण, **यत्र** જેમાં जिसमें, **उक्तम्** કહેલ છે कहा गया है, **सः** તે वह, **आयुर्वेदः** આયુર્વેદ आयुर्वेद, **उच्यते** કહેવાય છે कहलाता है ॥ ४१ ॥

41. That is named the science of life wherein are laid down the good and the bad life, the happy and the unhappy life, and what is wholesome and what unwholesome in relation to life, as also the measure of life.

आयुषो लक्षणं पर्यायाश्च—

**शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम् ।**
**नित्यगश्चानुबन्धश्च पर्यायैरायुरुच्यते ॥ ४२ ॥**

**शरीरम्** શરીર शरीर, **इन्द्रियाणि** ઇન્દ્રિયો इन्द्रिय, **सत्त्वम्** મન सत्त्व, **आत्मा** અને આત્માના और आत्माके, **संयोगः** સંયોગને संयोगको, **आयुः** આયુષ્ય आयु, **धारि** ધારિ धारि, **जीवितम्** જીવિત जीवित, **नित्यगः च** નિત્યગ नित्यग, **अनुबन्धःच** અને અનુબન્ધ तथा अनुबन्ध, **पर्यायैः** એ પર્યાયોથી इन पर्यायोंसे, **उच्यते** કહેવામાં આવે છે कहा जाता है ॥४२॥

42. Life is spoken of by such synonyms as "the union of the body, the senses, the mind and the spirit", "the support", "animation", "the flux", and "the link" (between the past life and the future one).

अन्यवेदेभ्य आयुर्वेदस्य प्रकर्षः—

**तस्यायुषः पुण्यतमो वेदो वेदविदां मतः ।**
**वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितम् ॥ ४३ ॥**

**तस्य** તે उस, **आयुषः** આયુનો आयुका, **वेदः** વેદ वेद, **पुण्यतमः** સૌથી વધારે પવિત્ર છે सब वेदोंसे अधिक पवित्र है, **वेदविदाम्** એવો વેદવાદીઓનો ऐसा वेदज्ञोंका, **मतः** મત છે मत है, **यत्** કારણકે क्योंकि, **मनुष्याणाम्** મનુષ્યોનું मनुष्योंके, **उभयोः** બન્ને दोनों,

---

४१. च तच्च– तन्त्रे च (थ)

४३. वक्ष्यते– वर्ण्यते (ग)
,, यन्– तन् (ट)

लोकयोः લોકનું लोकोंका, हितम् હિત हित, वक्ष्यते કહેવામાં આવશે बतलाया जायेगा ॥ ४३ ॥

43. The science relating to life is regarded by the philosophers as the most meritorious (of all the sciences), because it teaches mankind what constitutes their good in both the worlds.

सामान्यविशेषयोर्लक्षणम्—

सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम् ।
ह्रासहेतुर्विशेषश्च, प्रवृत्तिरुभयस्य तु ॥ ४४ ॥

सामान्यम् સામાન્ય (સમાનતા) सामान्य, सर्वदा હમેશાં सदा, सर्वभावानाम् બધા પદાર્થોની सब पदार्थोंकी, वृद्धि-कारणम् વૃદ્ધિનું કારણ છે वृद्धिका कारण होता है, विशेषःच અને વિશેષ—વિભિન્નતા और विशेष, ह्रास-हेतुः સર્વ પદાર્થોના હ્રાસનું કારણ છે ह्रासका कारण है, उभयस्य બન્નેનો दोनोंका, प्रवृत्तिः तु શરીરની સાથે સંબંધ તો शरीरके साथ संबंध तो, (सर्वभावानां સર્વ પદાર્થોનાં सब पदार्थके, वृद्धिह्रासयोः વૃદ્ધિ તથા હ્રાસનું वृद्धि और ह्रासका, कारणम् કારણ છે कारण है ॥ ૪૪ ॥

44. The general (similar) is the cause of the increase of all things at all times and the particular (dissimilar) is the cause of the decrease, whereas the application of these principles in the treatment of the body leads to increase or decrease of body-elments.

सामान्यमेकत्वकरं, विशेषस्तु पृथक्त्वकृत् ।
तुल्यार्थता हि सामान्यं, विशेषस्तु विपर्ययः ॥ ४५ ॥

सामान्यम् સામાન્ય सामान्य, एकत्वकरम् ઐક્ય કરે છે ऐक्य करने वाला है, विशेषः तु વિશેષ તો विशेष तो, पृथक्त्वकृत् પૃથક્તા કરે છે पार्थक्य करनेवाला है, हि કારણકે क्योंकि, तुल्यार्थता તુલ્યાર્થતા એ समान धर्मका होना यह, सामान्यम् સામાન્ય છે सामान्य है, विपर्ययः तु અને તેથી વિપરીત હોય તો और विपरीत अर्थका होना, विशेषः વિશેષ છે विशेष है ॥ ૪૫ ॥

45. The general (similar) combines; the particular (dissimilar) differentiates; for the element of agreement is the general, while the particular is the reverse.

आयुर्वेदस्याधिकरणम्—

सत्त्वमात्मा शरीरं च त्रयमेतत्त्रिदण्डवत् ।
लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम् ॥ ४६ ॥

सत्त्वम् મન सत्त्व, आत्मा આત્મા आत्मा, शरीरम् च અને શરીર और शरीर, एतत् त्रयम् આ ત્રણ ये तीनों, त्रिदण्डवत् ત્રણ દંડા જેવાં છે तीन दण्डके समान हैं, लोकः આ લોક यह लोक, संयोगात् તેઓના પરસ્પર સંયોગથી उनके परस्पर संयोगसे, तिष्ठति અસ્તિત્વ ધરાવે છે ठहरते हैं, तत्र તે લોકમાં उस समुदायात्मक लोकमें, सर्वम् બધું सब कुछ, प्रतिष्ठितम् પ્રતિષ્ઠિત છે प्रतिष्ठित है ॥ ૪૬ ॥

46. The mind, the spirit and the body are together, as it were, the tripod; the world endures by reason of cohesion, and on that are all things established.

स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम् ।
वेदस्यास्य, तदर्थं हि वेदोऽयं संप्रकाशितः ॥ ४७ ॥

सः તે वह सत्त्वादि समुदाय, पुमान् પુરુષ કહેવાય છે पुरुष कहलाता है, तत् च અને તે और वह, चेतनम् ચેતન દ્રવ્ય છે चेतन द्रव्य है, तत् च અને તેને और उसको, अस्य वेदस्य આ આયુર્વેદનું इस आयुर्वेदका, अधिकरणम् અધિકરણ अधिकरण, स्मृतम् કહ્યું છે कहा है, तदर्थम् हि તેને માટે જ उसके लिए ही, अयम् वेदः આ આયુર્વેદ यह आयुर्वेद, प्रकाशितः પ્રકાશિત કરવામાં આવ્યો છે प्रकाशित किया गया है ॥ ૪૭ ॥

47. That (aggregate of the mind, spirit and body) is man; he is the conscious agent. He is regarded as the subject-matter of this science; and it is indeed for his sake that this science has been promulgated.

द्रव्यसंग्रहः, चेतनाचेतनभेदेन द्रव्यस्य द्वैविध्यम्—

**खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः ।**
**सेन्द्रियं चेतनं द्रव्यं, निरिन्द्रियमचेतनम् ॥ ४८ ॥**

खादीनि આકાશ આદિ પંચ મહાભૂત आकाश आदि पंच महाभूत, आत्मा આત્મા आत्मा, मनः મન मन, कालः दिशः च કાલ અને દિશાઓ काल और दिशाएँ, द्रव्यसंग्रहः આ નવ સંક્ષેપમાં દ્રવ્ય છે यह द्रव्योंका संग्रह है, सेन्द्रियम् द्रव्यम् ઇન્દ્રિયયુક્ત દ્રવ્ય इन्द्रियोंवाले द्रव्य, चेतनम् ચેતન છે चेतन हैं, निरिन्द्रियम् અને ઇન્દ્રિયરહિત દ્રવ્ય और इन्द्रियरहित द्रव्य, अचेतनम् અચેતન છે अचेतन हैं ॥ ४८ ॥

48. The five proto-elements, ether and the others, together with the spirit, mind, time and space, constitute the totality of substances. Possessed of the senses, a substance is animate; devoid of the senses, it is inanimate.

गुणाः कर्माणि च—

**सार्था गुर्वादयो बुद्धिः प्रयत्नान्ताः परादयः ।**
**गुणाः प्रोक्ताः**

सार्थाः ઇન્દ્રિયોના પાંચ વિષયો સહિત इन्द्रियोंके पांच विषयके साथ, गुर्वादयः ગુરુ લઘુ આદિ गुरु लघु आदि, बुद्धिः બુદ્ધિ बुद्धि, प्रयत्नान्ताः ઇચ્છાથી માંડી પ્રયત્ન પર્યન્ત इच्छासे लेकर प्रयत्न पर्यन्त, परादयः અને પર અપર આદિ पर अपर आदि अभ्यास पर्यन्त, गुणाः-प्रोक्ताः ગુણ કહ્યા છે गुण कहे गये हैं ॥ ४८½ ॥

48½. The sense-objects, (the qualities such as) heaviness etc., the intelligence, in the list ending with effort, and (the modes of understanding described as) the higher etc.—these are said to be the qualities.

**प्रयत्नादि कर्म चेष्टितमुच्यते ॥ ४९ ॥**

प्रयत्नादि प्रयत्नજનિત प्रयत्नजन्य, चेष्टितम् ચેષ્ટા चेष्टा, कर्म उच्यते કર્મ કહેવાય છે कर्म कहलाती है ॥ ४९ ॥

49. Behaviour such as effort etc., is said to be action.

समवायस्य लक्षणम्—

**समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः ।**
**स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ॥ ५० ॥**

भूम्यादीनां ભૂમિ આદિના પોતાના भूमि आदिके अपने, गुणैः ગુણોથી गुणोंसे, अपृथग्भावः અપૃથગ્ભાવને पृथक् न होना, समवायः સમવાય समवाय, मतः માન્યો છે कहलाता है, सः नित्यः તે નિત્ય છે वह समवाय नित्य है, हि કારણકે क्योंकि, यत्र જ્યાં जहां, द्रव्यम् દ્રવ્ય છે द्रव्य है, तत्र ત્યાં वहां, गुणः ગુણ गुण, अनियतः न નથી એમ નથી (સદા હોય છે) अनुपस्थित नहीं रहता ॥ ५० ॥

50. Samavaya (coexistence) is defined as that inseparable relationship which exists between earth and others and their qualities. This (relationship) is eternal; for, wherever the substance exists the coexistent quality is never absent.

द्रव्यस्य लक्षणम्—

**यत्राश्रिताः कर्मगुणाः कारणं समवायि यत् ।**
**तद्द्रव्यं**

यत्र જેમાં जिसमें, कर्मगुणाः કર્મ અને ગુણો कर्म और गुण, आश्रिताः આશ્રય કરીને રહ્યા છે आश्रित रहते हैं, यत् અને જે और जो, समवायि સમવાયી समवायी, कारणम् કારણ છે कारण है, तत् તે वह, द्रव्यम् દ્રવ્ય द्रव्य है ॥ ५०½ ॥

50½. That which is the substratum of action and qualities and coexistent cause is substance.

गुणस्य लक्षणम्—

**समवायी तु निश्चेष्टः कारणं गुणः ॥ ५१ ॥**

गुणः ગુણ गुण, समवायी સમવાયવાન્ द्रव्यमें समवाय संबंधसे रहनेवाला, निश्चेष्टः કર્મથી ભિન્ન અને

---

४८. निरिन्द्रियम्– अतीन्द्रियम् (ग. थ.)

५०. भूम्यादीनाम्– द्रव्यादीनाम् (ड. प. ख.)

કર્મરહિત कर्मसे भिन्न और कर्मशून्य, कारणम् तु અને કારણ છે और कारण है ॥५१॥

51. Quality is coexistent and inactive cause.

कर्मणः लक्षणम्—

**संयोगे च विभागे च कारणं द्रव्यमाश्रितम् ।**
**कर्तव्यस्य क्रिया कर्म कर्म नान्यदपेक्षते ॥ ५२ ॥**

(यत् જે जो,) संयोगे च સંયોગ संयोग, विभागे च અને વિભાગમાં और विभागमें, कारणम् કારણ છે कारण है, द्रव्यम् દ્રવ્યમાં द्रव्यमें, आश्रितम् આશ્રિત છે आश्रित है, अन्यत् અન્ય કોઈ अन्य किसी, कर्म કર્મની कर्मकी, न अपेक्षते અપેક્ષા રાખતું નથી अपेक्षा नहीं रखता, कर्तव्यस्य અને કર્તવ્ય કાર્યના और कर्तव्य कार्यका, क्रिया અનુષ્ઠાનરૂપ अनुष्ठानरूप , (तत् તે वह,) कर्म કર્મ છે कर्म है ॥५२॥

52. (Action which is) the cause of conjunction and disjunction resides in the substance. Action is the performance of what is to be done. It depends on nothing else.

**इत्युक्तं कारणम्,**

इति આ પ્રમાણે इस प्रकार, कारणम् સામાન્ય આદિને કારણ सामान्य आदिको कारण, उक्तम् કહ્યું છે कहा है.

Thus has been defined Cause.

आयुर्वेदस्य कार्यम्—

**कार्यं धातुसाम्यमिहोच्यते ।**
**धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥५३॥**

इह આ તન્ત્રમાં इस तन्त्रमें, धातुसाम्यम् ધાતુ-સામ્ય धातुसाम्यको, कार्यम् કાર્ય कार्य, उच्यते કહેવામાં આવે છે माना गया है, धातुसाम्यक्रिया च અને ધાતુ-સામ્યક્રિયા और धातुसाम्य करना, अस्य तन्त्रस्य આ તન્ત્રનું इस तन्त्रका, प्रयोजनम् પ્રયોજન प्रयोजन, उक्ता કહેલ છે बतलाया गया है ॥ ५३ ॥

५२. विभागे– वियोगे (ङ.)

५३. चोक्ता– प्रोक्ता (च.)

53. The effect is here (i. e. in medicine) said to be "the equilibrium of the body-elements", and the procedure of maintaining the equilibrium of the body-elements is the objective of this science.

व्याधीनां त्रिविधो हेतुसंग्रहः—

**कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च ।**
**द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥५४॥**

कालः કાલ काल, बुद्धिः બુદ્ધિ बुद्धि, इन्द्रियार्थानाम् ઇન્દ્રિયોના વિષયોના इन्द्रियोंके विषयोंका, मिथ्या મિથ્યાયોગ मिथ्यायोग, न च અયોગ अयोग, अति च અને અતિયોગ तथा अतियोग, द्वय-आश्रयाणाम् શારીરિક અને માનસિક शारीरिक और मानसिक, व्याधीनाम् રોગોના रोगोंका, त्रिविधः ત્રણ પ્રકારનો तीन प्रकारका, हेतुसंग्रहः હેતુસંગ્રહ છે हेतुसंग्रह है ॥ ५४ ॥

54. The complex of causes with reference to disease—psychic and somatic—is either erroneous, absence or excessive interaction of time, mind, senses and sense-objects.

व्याधीनां द्विविध आश्रय आरोग्यस्य हेतुश्च—

**शरीरं सत्त्वसंज्ञं च व्याधीनामाश्रयो मतः ।**
**तथा सुखानां, योगस्तु सुखानां कारणं समः ॥५५॥**

शरीरम् શરીર शरीर, सत्त्वसंज्ञम् च અને મન और मनको, व्याधीनाम् વ્યાધિઓ व्याधियों, तथा અને तथा, सुखानाम् આરોગ્યનું सुखोंका, आश्रयः આશ્રયસ્થાન आश्रय, मतः માનેલ છે माना गया है, सुखानाम् સર્વ પ્રકારનાં સુખોનું सुखोंका, कारणम् કારણ कारण, समः કાલ, બુદ્ધિ અને ઇન્દ્રિયાર્થોનો સમ્યક્ काल बुद्धि और इन्द्रियार्थोंका उचित, योग યોગ योग, तु તો तो, सुखानाम् સર્વ પ્રકારનાં આરોગ્યનું सब प्रकारके आरोग्यका, कारणम् કારણ છે कारण है ॥ ५५ ॥

55. The body and that which is

५४. द्वयाश्रयाणां– द्रव्याश्रयाणाम् (ख. प.)

५५. समः – मतः (ग. थ.)

called the mind are both considered to be the abodes of diseases, likewise of well-being; their concordance is the cause of well-being.

आत्मनो लक्षणम्—

**निर्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः ।**
**चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ॥५६॥**

**निर्विकारः** નિર્વિકાર निर्विकार, **परः** અને સૂક્ષ્મ और सूक्ष्म, **आत्मा तु** આત્મા તો आत्मा तो, **सत्त्व** મન मन, **भूतगुण**– શબ્દાદિગુણ शब्दादिगुण, **इन्द्रियैः** ઇંદ્રિયોવડે इन्द्रियोंद्वारा, **चैतन्ये** ચૈતન્યમાં चैतन्यमें, **कारणम्** કારણ છે कारण है, **नित्यः** તે નિત્ય वह नित्य, **द्रष्टा** સાક્ષી છે साक्षी है, **हि** કારણ કે તે क्योंकि वह, **क्रियाः** સર્વ ક્રિયાઓને सब क्रियाओंको, **पश्यति** જુએ છે देखता है ॥ ५६ ॥

56. The spirit, which is changeless and transcendental, becomes the cause of consciousness when united with the mind, the sense objects and the senses. It (the spirit) is the eternal witness observing actions.

त्रिविधः शारीरदोषसंग्रहः, द्विविधः मानसदोषसंग्रहश्च—

**वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः ।**
**मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥ ५७ ॥**

**वायुः** વાત वात, **पित्तम्** પિત્ત पित्त, **कफः च** અને કફ और कफ, **शारीरः** શારીરિક शारीरिक, **दोषसंग्रहः** દોષસંગ્રહ दोषोंका संग्रह, **उक्तः** કહ્યો છે कहा गया है, **मानसः** માનસિક દોષસંગ્રહ मानसिक दोषसंग्रह, **पुनः** તો तो, **रजःच** રજોગુણ रज, **तमः च** અને તમોગુણને और तमको, **उद्दिष्टः** કહ્યો છે बतलाया है ॥ ५७॥

57. Vata, pitta and kapha are said to be the complex of pathogenic factors in the body; passion and delusion are, again, considered the complex of pathogenic factors in the mind.

५६. क्रियाः – क्रियाम् (ग. च. प.)

दोषाणां प्रशमनोपायाः—

**प्रशाम्यत्यौषधैः पूर्वो दैवयुक्तिव्यपाश्रयैः ।**
**मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः ॥५८॥**

**पूर्वः** શારીરિક દોષ शारीरिक दोष, **दैव-युक्ति व्यपाश्रयैः** દૈવ-આશ્રય અને યુક્તિઆશ્રય दैविक और यौगिक, **औषधैः** ઔષધોથી ओषधियोंसे, **प्रशाम्यति** શાન્ત થાય છે शान्त होता है, **मानसः** અને માનસિક દોષ और मानसिक दोष, **ज्ञान**-અધ્યાત્મજ્ઞાન अध्यात्म-ज्ञान, **विज्ञान**-શાસ્ત્રીય જ્ઞાન शास्त्रीय ज्ञान, **धैर्य**-ધૈર્ય धैर्य, **स्मृति**-સ્મૃતિ स्मृति, **समाधिभिः** અને સમાધિથી और समाधिसे, **प्रशाम्यति** શાન્ત થાય છે मिट जाता है ॥ ५८॥

58. The former type of morbidity is quieted by medications, spiritual and physical; and the latter by religion, philosophy, fortitude, remembrance and concentration.

वायोर्गुणास्तत्प्रशमनानि च—

**रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः ।**
**विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ ५९ ॥**

**रूक्षः** રૂક્ષ रूक्ष, **शीतः** શીત शीत, **लघुः** લઘુ लघु, **सूक्ष्मः** સૂક્ષ્મ सूक्ष्म, **चलः** ચલ चल, **अथ विशदः** તથા વિશદ तथा विशद, **खरः** અને ખર એ વાયુના ગુણો છે और खर वायुके गुण है, **मारुतः** વાયુ वायु, **विपरीत-गुणैः** આ ગુણોથી વિપરીત ગુણોવાળાં इन गुणोंसे विपरीत धर्मवाले, **द्रव्यैः** દ્રવ્યોથી द्रव्योंसे, **संप्रशाम्यति** શીઘ્ર અને સમ્યક્ પ્રકારે શાન્ત થાય છે तुरंत और भली प्रकार शान्त हो जाता है ॥ ५९ ॥

59. Vata is dry, cold, light, subtle, unstable, clear and rough; it is quieted by substances of antagonistic qualities.

पित्तस्य गुणास्तत्प्रशमनानि च—

**सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु ।**
**विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥ ६० ॥**

५८. दैवयुक्ति– द्रव्ययुक्ति (ड.)

६०. द्रवमम्लं– विस्रमम्लं (प. ग.)

सस्नेहम् થોડું સ્નિગ્ધ ईषत् स्निग्ध, उष्णम् ઉષ્ણ उष्ण, तीक्ष्णम् તીક્ષ્ણ तीक्ष्ण, द्रवम् દ્રવ द्रव, अम्लम् અમ્લ अम्ल, सरम् સર सर, कटु च અને કટુ એ પિત્તના ગુણો છે. और कटु पित्तके गुण हैं, पित्तम् પિત્ત पित्त, विपरीतगुणैः આ ગુણોથી વિપરીત ગુણોવાળાં इन गुणोंसे विपरीत धर्मवाले, द्रव्यैः દ્રવ્યોથી द्रव्योंसे, आशु શીઘ્ર शीघ्र, प्रशाम्यति શાન્ત થાય છે शान्त होता है ॥ ६० ॥

60. Pitta is slightly unctuous, hot, acute, fluid, acid, mobile and pungent; it is readily quieted by substances of antagonistic qualities.

श्लेष्मणो गुणास्तत्प्रशमनानि च—

**गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ।**
**श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ ६१ ॥**

श्लेष्मणः કફના कफके, गुरु ગુરુ गुरु, शीत શીત शीत, मृदु મૃદુ मृदु, स्निग्ध સ્નિગ્ધ स्निग्ध, मधुर મધુર मधुर, स्थिर સ્થિર स्थिर, पिच्छिल અને પિચ્છિલ और पिच्छिल, गुणाः એ કફના ગુણો ये कफके गुण, विपरीतगुणैः લઘુ આદિ વિપરીત ગુણોથી लघु उष्णादि विपरीत गुणोंसे, प्रशमम् यान्ति શાન્ત થાય છે शान्त हो जाते हैं ॥ ६१ ॥

61. Kapha is heavy, cold, soft, unctuous, sweet, stable and viscid; it is quieted by substances of antagonistic qualities.

विकाराणां विनिवर्तने उपायाः—

**विपरीतगुणैर्देशमात्राकालोपपादितैः ।**
**भेषजैर्विनिवर्तन्ते विकाराः साध्यसंमताः ॥ ६२ ॥**
**साधनं न त्वसाध्यानां व्याधीनामुपदिश्यते ।**

देशः દેશ देश, मात्रा માત્રા मात्रा, कालः કાલ काल, उपपादितैः જોઈને યોજેલાં देखकर प्रयुक्त की हुई, विपरीतगुणैः વિપરીત ગુણોવાળાં विपरीत गुणवाली, भेषजैः ઔષધોથી औषधोंसे, साध्यसंमताः સાધ્ય ગણાયેલા साध्य माने हुए, विकाराः રોગો विकार, विनिवर्तन्ते મટે છે निवृत्त होते हैं, असाध्यानां અસાધ્ય असाध्य, व्याधीनाम् રોગોનું रोगोंकी, साधनम् तु ઔષધ તો औषध तो न उपदिश्यते કહેવામાં આવ્યું નથી नहीं बतलाई गई है ॥ ६२½ ॥

62–62½. The disorders classed as curable disappear when treated with therapeutic agents of antagonistic qualities with due consideration of climate, dosage and season.

The treatment of incurable diseases is, however, not instructed here.

**भूयश्चातो यथाद्रव्यं गुणकर्माणि वक्ष्यते ॥ ६३ ॥**

अतः भूयश्च હવે પછી ફરી અથવા વિસ્તારથી इसके बाद आगे भी फिरसे अथवा विस्तारसे, यथाद्रव्यम् એક એક દ્રવ્યનાં एक एक द्रव्यके, गुणकर्माणि ગુણો અને કર્મો गुणकर्मोंको, वक्ष्यते આચાર્ય કહેશે आचार्य बतलायेंगे ॥ ६३ ॥

63. Now a further description of qualities and action with reference to individual substances will be given.

रसस्य लक्षणं विशेषे प्रत्ययाश्च—

**रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा ।**
**निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥ ६४ ॥**

रसना-अर्थः रसनेन्द्रिय-જિહ્વાથી જે વિષય ગ્રહણ કરવામાં આવે છે તે रसनेन्द्रियसे ग्राह्य गुण, रसः રસ છે रस है, तस्य च અને તેની और उसकी, निर्वृत्तौ ઉત્પત્તિમાં उत्पत्तिमें, द्रव्यम् આધારકારણ आधारकारण, आपः જળ जल, तथा અને और, क्षितिः પૃથ્વી છે पृथ्वी है, विशेषे च तथा તેના મધુરાદિ ભેદોમાં तथा मधुरादि भेदोंमें, प्रत्ययाः નિમિત્તકારણ निमित्तकारण, त्रयः ત્રણ तीन, खादयः આકાશ વાયુ અને તેજ છે आकाश वायु और अग्नि हैं ॥ ६४ ॥

64. Taste is the sense-object of the tongue; and source-substances for its general manifestation are the two proto-elements, water and earth; its

६३. गुणकर्माणि– गुणकर्म (छ.)
,, वक्ष्यते– प्रवक्ष्यते (क. ग. च. छ. झ. द.)

variations ared efermined by the other three proto-elements, ether etc.

रसानां संग्रहः—

**स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च ।**
**कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः ॥६५॥**

**स्वादुः** સ્વાદુ मीठा, **अम्लः** અમ્લ खट्टा, **अथ लवणः** લવણ नमकीन, **कटुकः** કટુ चरपरा, **तिक्तः** તિક્ત तीता या कडवा, **एव च** અને और, **कषायः च** કષાય कसैला, **इति** એ પ્રમાણે इस प्रकार, **अयम्** આ यह, **षट्कः** ૭ના સમૂહને છ:के समूहको, **रसानाम्** રસોના रसोंका, **संग्रहः** સંક્ષેપ संक्षेप, **स्मृतः** કહો છે कहा है ॥६५॥

65. The groop of tastes is described as the hexad made up of sweet, acid, salt, pungent, bitter and astringent tastes.

दोषाणां प्रशमनाः प्रकोपकाश्च रसाः—

**स्वाद्वम्ललवणा वायुं, कषायस्वादुतिक्तकाः ।**
**जयन्ति पित्तं, श्लेष्माणं कषायकटुतिक्तकाः ॥६६॥**

**स्वादु-अम्ल-लवणाः** મધુર-અમ્લ અને લવણ રસ मधुर-अम्ल और लवण रस, **वायुम्** વાતને वातका, **कषाय-स्वादु-तिक्तकाः** કષાય-મધુર અને તિક્ત રસ कषाय-स्वादु और तिक्त रस, **पित्तम्** પિત્તને पित्तका, **कषाय-कटु-तिक्तकाः** કષાય-કટુ અને તિક્ત રસ कषाय-कटु और तिक्त रस, **श्लेष्माणम्** **जयन्ति** કફને જીતે છે कफका शमन करते हैं ॥ ६६ ॥

66. The sweet, acid and salt tastes subdue vata; the astringent, sweet and bitter tastes subdue pitta; the astringent, pungent and bitter tastes subdue kapha.

**( कट्वम्ललवणाः पित्तं, स्वाद्वम्ललवणाः कफम् ।**
**कटुतिक्तकषायाश्च कोपयन्ति समीरणम् ॥ १ ॥ )**

**कटु–अम्ल–लवणाः** કટુ, અમ્લ અને લવણ રસ कटु, अम्ल और लवण रस, **पित्तम्** પિત્તને पित्तको, **मधुर–अम्ल–लवणाः** મધુર, અમ્લ અને લવણ રસ मधुर, अम्ल और लवण रस, **कफम्** કફને कफको, **कटु-तिक्त-कषायाः च** કટુ, તિક્ત તથા કષાય રસ कटु, तिक्त और कषाय रस, **समीरणम्** વાતને वायुको, **कोपयन्ति** કોપાવે છે कुपित करते हैं. ( १ )

66. (1) (The pungent, acid and salt tastes provoke pitta; the sweet, acid and salt provoke kapha; and pungent, bitter and astringent tastes provoke vata.)

प्रभावभेदेन द्रव्यभेदः--

**किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम् ।**
**स्वस्थवृत्तौ मतं किंचित्त्रिविधं द्रव्यमुच्यते ॥ ६७॥**

**किंचित्** કેટલાંક દ્રવ્યો कुछ द्रव्य, **दोषप्रशमनम्** દોષો તથા ધાતુઓને શાન્ત કરે છે दोषों तथा धातुओंको शान्त करनेवाले हैं, **किंचित्** કેટલાંક कुछ द्रव्य, **धातुप्रदूषणम्** ધાતુઓ તથા દોષોને દૂષિત કરે છે धातुओं तथा दोषोंको दूषित करनेवाले हैं, **किंचित्** અને કેટલાંક कुछ द्रव्य, **स्वस्थवृत्तौ** સ્વાસ્થ્યપાલનમાં स्वस्थ बने रहनेमें, **मतम्** હિતકારી છે हितकारी हैं, ( **इति** આ પ્રમાણે इस प्रकार ), **द्रव्यम्** દ્રવ્યો द्रव्य, **त्रिविधम्** ત્રણ પ્રકારનાં तीन प्रकारके, **उच्यते** કહ્યાં છે कहे हैं ॥ ६७ ॥

67. Substances are classified in three groups:—(1) some rectify the discordance of body-elements, (2) some vitiate the body-elements, and (3) some are considered to be conducive to the maintenance of good health.

उत्पत्तिभेदेन द्रव्यभेदः—

**तत् पुनस्त्रिविधं प्रोक्तं जङ्गमौद्भिदपार्थिवम् ।**

**तत् पुनः** વળી તે દ્રવ્ય वह द्रव्य फिर, **जङ्गम-** જંગમ जङ्गम, **औद्भिद-** ઔદ્ભિદ औद्भिद, **पार्थिवम्** અને પાર્થિવ और पार्थिव, **इति** એમ इस प्रकार, **त्रिविधम्** ત્રણ પ્રકારનું तीन तरहका, **प्रोक्त** કહેલ છે बतलाया गया है. ॥ ६७½ ॥

---

६७. मतं– हितम् (घ. ङ.)

६७½. प्रोक्तम्– ज्ञेयम् (च. झ. द.)

,, जङ्गमौद्भिद– जाङ्गमौद्भिद(ख.)

ter entitled the "Seeds of Rough Chaff".

2. Thus declared the worshipful Atreya.

शिरोविरेचनद्रव्याणि—

**अपामार्गस्य बीजानि पिप्पलीर्मरिचानि च ।**
**विडङ्गान्यथ शिग्रूणि सर्षपांस्तुम्बुरूणि च ॥ ३ ॥**
**अजाजीं चाजगन्धां च पीलून्येलां हरेणुकाम् ।**
**पृथ्वीकां सुरसां श्वेतां कुठेरकफणिज्झकौ ॥ ४ ॥**
**शिरीषबीजं लशुनं हरिद्रे लवणद्वयम् ।**
**ज्योतिष्मतीं नागरं च दद्याच्छीर्षविरेचने ॥ ५ ॥**
**गौरवे शिरसः शूले पीनसेऽर्धावभेदके ।**
**क्रिमिव्याधावपस्मारे घ्राणनाशे प्रमोहके ॥ ६ ॥**

**अपामार्गस्य** અઘેડાનાં अपामार्गके, **बीजानि** બીજ बीज, **पिप्पलीः** પીપર पिप्पली, **मरिचानि च** મરી मरिच, **विडङ्गानि** વાવડીંગ विडंग, **अथ शिग्रूणि** સરગવો शोमाञ्जन, **सर्षपान्** સરસવ सरसों, **तुम्बुरूणि च** તેજફળ तेजवलका फल, **अजाजीम् च** જીરૂં जीरा, **अजगन्धाम् च** બાફળી तिलवन, **पीलूनि** પીલુ पीलु, **एलाम्** એલચી छोटी इलायची, **हरेणुकाम्** રેણુકબીજ रेणुकाबीज, **पृथ्वीकाम्** કલોંજી જીરૂં कलौंजी, **सुरसाम्** તુલસી तुलसी, **श्वेताम्** ધોળી ગરણી श्वेतकोयल, **कुठेरक** કુઠેરક कुठेरक, **फणिज्झकौ** મરવો मरवा, **शिरीष बीजम्** કાળીઆ સરસનાં બીજ शिरीषके बीज, **लशुनम्** લસણ लहशुन, **हरिद्रे** હળદર તથા દારૂહળદર दोनों हल्दी, **लवणद्वयम्** સિંધાલૂણ તથા સંચળ सैन्धव और संचल लवण, **ज्योतिष्मतीम्** માલકાંગણી मालकांगनी, **नागरम् च** સૂંઠ અને એઓને और सूंठ इनको, **शिरसः** માથાના शिरके, **गौरवे** ભારીપણામાં भारीपनमें, **शूले** માથાના શૂલમાં शिरके दर्दमें, **पीनसे** સળેખમમાં पीनसमें, **अर्धावभेदके** આધાશીશીમાં आधासीसीमें, **क्रिमिव्याधौ** ક્રિમિરોગમાં क्रिमिरोगमें, **अपस्मारे** અપસ્મારમાં अपस्मारमें, **घ्राण नाशे** ઘ્રાણની શક્તિના નાશમાં घ्राण शक्तिके नाश होनेमें, **प्रमोहके** અને મૂર્ચ્છામાં और मूर्च्छामें, **शिरोविरेचने** શિરોવિરેચન (નસ્ય) તરીકે शिरो विरेचनके रूपमें, **दद्यात्** દેવાં જોઈએ देना चाहिये ॥ ३–६ ॥

3-6. The seeds of rough chaff, long pepper, black pepper, embelia, drumstick, rape-seed Indian toothache, cumin, wild carrot, toothbrush, cardamom, fragrant piper, black cumin, holy basil, white mussel shell creeper, kuthèraka, sweet marjoran, seeds of siris, garlic, turmeric and Indian berberry, rock-salt, black salt, staff and dry ginger:— these should be given as errhines in conditions of heaviness of the head, headache, rhinitis, hemicrania, parasitic infections of the head, epilepsy, anosmia and fainting.

वमनद्रव्याणि—

**मदनं मधुकं निम्बं जीमूतं कृतवेधनम् ।**
**पिप्पलीकुटजेक्ष्वाकूण्येलां धामार्गवाणि च ॥ ७ ॥**
**उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये ।**
**वमनार्थं प्रयुञ्जीत भिषग्देहमदूषयन् ॥ ८ ॥**

**मदनम्** મીંઢોળ मैनफल, **मधुकम्** જેઠીમધ मुलेहठी, **निम्बम्** લીમડો नीम, **जीमूतम्** કુકડવેલાં कुकडवेल, **कृतवेधनम्** કડવાં તુરિયાં कडुआ तुम्बा, **पिप्पली** લીંડીપીપર पिप्पली, **कुटज** કડો कुटज, **इक्ष्वाकूणि** કડવી તુંબડી कडुवी तुम्बी, **एलाम्** એલચી इलायची, **धामार्गवाणि च** અને કડવાં ગલકાં એઓને और कडुवी तोरी इनका, **श्लेष्मपित्ते** કફ અને પિત્ત कफ और पित्तके, **उपस्थिते** વમનોન્મુખ થયા હોય ત્યારે वमनोन्मुख होने पर, **व्याधौ** રોગ रोगके, **आमाशयाश्रये** આમાશયમાં રહેલો હોય ત્યારે **आमाशयमें** आश्रित होने पर, **भिषक्** વૈદ્ય वैद्य, **देहम्** દેહને शरीरको, **अदूषयन्** હાનિ કર્યા વગર हानि किए बिना, **वमनार्थम्** વમન માટે वमनके लिये, **प्रयुञ्जीत** પ્રયોજવાં प्रयोग करे ॥७-८॥

7-8. Emetic nut, liquorice, neem, bristly luffa, bitter luffa, long pepper, kurchi, bottle-gourd, cardamom and sponge-gourd:– these drugs should be used as emetics by the physician, in a way not harmful to the body, in gastro-

४. अजगन्धाम्– अजमोदाम् (ख. च. ध.)
५. शीर्षविरेचने– मूर्धविरेचने (ग.)

genic disorders characterised by morbid accumulations of kapha and pitta.

विरेचनद्रव्याणि—

**त्रिवृतां त्रिफलां दन्तीं नीलिनीं सप्तलां वचाम् ।**
**कम्पिल्लकं गवाक्षीं च क्षीरिणीमुदकीर्यकाम् ॥ ९ ॥**
**पीलून्यारग्वधं द्राक्षां द्रवन्तीं निचुलानि च ।**
**पक्वाशयगते दोषे विरेकार्थं प्रयोजयेत् ॥ १० ॥**

दोषे દોષ દોષके, **पक्वाशयगते** જ્યારે પક્વાશયમાં ગયેલો હોય ત્યારે पक्वाशयमें होनेपर, **त्रिवृताम्** નસોતર निसोथ, **त्रिफलाम्** ત્રિફલા त्रिफला, **दन्तीम्** દાંતી जमालगोटा, **नीलिनीम्** ગળી नील, **सप्तलाम्** ચીકાખાઈ शिकाकाई, **वचाम्** વજ वच, **कम्पिल्लकम्** કંપીલો कमीला, **गवाक्षीम्** ઇંદ્રામણું इन्द्रायण, **क्षीरिणीम्** દૂધેલી (દારૂહળદર) क्षीरिणी, **उदकीर्यकाम् च** વાંકેરીનાં મૂળ वाकेरीका मूल, **पीलूनि** પીલુ पीलु, **आरग्वधम्** ગરમાળો अमलतास, **द्राक्षाम्** દ્રાક્ષ द्राक्ष, **द्रवन्तीम्** રેતનજોત बड़ा जमालगोटा, **निचुलानि च** અને સમુદ્રફળ એઓને और बैंत इनको, **विरेकार्थम्** વિરેચન માટે विरेचनके लिए, **प्रयोजयेत्** પ્રયોજવાં प्रयोग करना चाहिए ॥ ९-१० ॥

9-10. Turpeth, the three myrobalans red physic-nut, indigo, soap-pod, sweet-flag, kamala, colocynth, hirtiz, prickly brazil wood, toothbrush, purging cassia, grapes, physic-nut, and hijjal–these should be prescribed for purgation when the morbid humours have accumulated in the colon.

आस्थापनद्रव्याणि—

**पाटलां चाग्निमन्थं च बिल्वं श्योनाकमेव च ।**
**काश्मर्यं शालपर्णीं च पृश्निपर्णीं निदिग्धिकाम् ॥ ११ ॥**
**बलां श्वदंष्ट्रां बृहतीमेरण्डं सपुनर्नवम् ।**
**यवान् कुलत्थान् कोलानि गुडूचीं मदनानि च १२**
**पलाशं कत्तृणं चैव स्नेहांश्च लवणानि च ।**
**उदावर्ते विबन्धेषु युञ्ज्यादास्थापनेषु च ॥ १३ ॥**

**उदावर्ते** ઉદાવર્ત उदावर्त, **विबन्धेषु** [illegible], **आस्थापनेषु च** અને આસ્થાપનોમાં और आस्थापनमें, **पाटलाम् च** પાટલા पाडल, **अग्निमन्थम्** અરણી अरणी, **बिल्वम्** બીલી बिल्व, **श्योनाकम् च** एव [illegible], **काश्मर्यम्** શીવણ गम्भारी, **शालपर्णीम् च** [illegible] पर्णी, **पृश्निपर्णीम्** પીઠવણ पृश्नपर्णी, **निदिग्धिकाम्** [illegible] भोरीगणी कटेरी, **बलाम्** બળબીજ खरैंटी, **श्वदंष्ट्राम्** [illegible] गोखरू, **बृहतीम्** ઉભી ભોરીંગણી बड़ी कटेरी, **सपुनर्नवम्** રાતા ફૂલની સાટોડી पुनर्नवा, **एरण्डम** એરંડો एरण्ड, **यवान्** જવ जौ, **कुलत्थान** કળથી कुल्थी, **कोलानि** બોર झाड़ी बेर, **गुडूचीम्** ગળો गिलोय, **मदनानि च** મીંઢળ मेनफल, **पलाशम्** ખાખરો पलाश, **कत्तृणम् च एव** રોહિષઘાસ रोहिषघास, **स्नेहान् च** સ્નેહો सब स्नेह, **लवणानि च** અને લવણો और सब लवण, **युञ्ज्यात्** યોજવાં इन द्रव्योंको बरतना चाहिए ॥ ११-१३ ॥

11-12-13. Trumpet-flower, wind-killer, bael, Indian calosanthes, white teak, tick trefoil, painted-leaved uraria, yellow-berried night-shade, heartleaved sida, small caltrops, Indian night-shade, hog's weed, castor-oil plant, barley, horse-gram, Indian jujube, guduchi, emetic nut, palas, ginger grass, unctuous substances and salts should be used in misperistalsis, and constipation and as corrective enemata.

अनुवासनद्रव्याणामास्थापनद्रव्येष्वतिदेशः—

**अत एवौषधगणात् संकल्प्यमनुवासनम् ।**
**मारुतघ्नमिति प्रोक्तः संग्रहः पाञ्चकर्मिकः ॥ १४ ॥**

**अतः** આજ इन्हीं, **औषधगणात्** ઔષધસમૂહમાંથી औषधसमूहोंसे, **एव** જ ही, **मारुतघ्नम्** વાતનાશક वातनाशक, **अनुवासनम्** અનુવાસન अनुवासन, **संकल्प्यम्** બનાવવું જોઇએ बनाने चाहियें, **इति** આ પ્રમાણે इस

९. कम्पिल्लकं– कम्पिल्वकं (ङ.)

११. पाटलाम्– पाटलिम् (ख.त.ध.)

१२. यवान् कुलत्थान् कोलानि–यवकोलकुलत्थानाम् (ग)

१२. यवान् कुलत्थान्– बिल्वं कुलत्थम् (प.घ.)

१३. उदावर्ते विबन्धेषु– उदावर्तविबन्धेषु (च.छ.)

” युञ्ज्यादास्थापनेषु च–कुर्यादास्थापनं सदा (ख.घ.ङ.)

प्रकाग्ने, **पाञ्चकर्मिकः** પચકર્મસંબંધી ઔષધોનો पञ्चकर्म संबन्धी औषधियोंका, **संग्रहः** સંગ્રહ संक्षेप. **प्रोक्तः** કહ્યો है कह दिया है ॥ १४ ॥

14. Out of these groups of drugs one should prepare unctuous enemata curative of Vata. This is the compendium of the drugs required for the five purificatory procedures.

पञ्चकर्मतः प्राक्कर्तव्यम्—

**तान्युपस्थितदोषाणां स्नेहस्वेदोपपादनैः ।**
**पञ्च कर्माणि कुर्वीत मात्राकालौ विचारयन् ॥ १५॥**

उपस्थित પ્રવૃત્તિ કરવા તૈયાર થયેલા प्रवृत्त होनेके लिए तैयार, **दोषाणाम्** દોષોવાળાઓને दोषवालोंको, **स्नेह** સ્નેહન स्नेहन, **स्वेद** સ્વેદન स्वेदन, **उपपादनैः** કરાવીને कराके, **मात्राकालौ** માત્રા તથા કાલનો मात्रा एवं समयको, **विचारयन्** વિચાર કરીને विचार करके, **तानि** તે इन, **पञ्च कर्माणि** પંચકર્મો पंचकर्मको, **कुर्वीत** કરવાં જોઈએ करना चाहिए ॥ १५ ॥

15. When the morbid humours have been aroused by the preliminary preparations of the subject with oleation and sudation procedures, these five modes of purification should be carried out with due consideration of dose and time.

युक्तिज्ञानस्य गुणाः —

**मात्राकालाश्रया युक्तिः, सिद्धिर्युक्तौ प्रतिष्ठिता ।**
**तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा ॥ १६ ॥**

युक्तिः યુક્તિ युक्ति, **मात्रा** માત્રા मात्रा, **काल** અને કાળના एवं कालके, **आश्रया** આધાર પર રહી છે ऊपर निर्भर रहती है, **सिद्धिः** સિદ્ધિ सिद्धि, **युक्तौ** યુક્તિમાં युक्तिमें, **प्रतिष्ठिता** સ્થિત થયેલી છે स्थित है, **युक्तिज्ञः** યુક્તિ જાણનારો युक्तिको जाननेवाला, **द्रव्यज्ञानवताम्** દ્રવ્યજ્ઞાનવાળા કરતાં द्रव्यको जाननेवालोंके, **सदा** હમેશાં सदा, **उपरि** ચઢિયાતો ऊपर, **तिष्ठति** છે रहता है ॥१६॥

16. The art of prescription depends on the knowledge of dosage and time, and on this art, in turn, depends success; hence the skilful physician stands ever superior to those possessing merely a theoretical knowledge of drugs.

अष्टाविंशतिर्यवाग्वः —

**अत ऊर्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः ।**
**विविधानां विकाराणां तत्साध्यानां निवृत्तये ॥१७॥**

**अतः** અહીંથી इसके, **ऊर्ध्वम्** આગળ आगे, **विविधौषधाः** વિવિધ ઔષધવાળી नाना प्रकारकी औषधियोंसे सिद्ध, **यवागूः** યવાગૂઓ यवागूओंको, **तत्साध्यानाम्** યવાગૂઓથી સાધ્ય इनसे साध्य, **विविधानाम्** વિવિધ પ્રકારના नाना प्रकारके, **विकाराणाम्** રોગો रोगोंकी, **निवृत्तये** મટાડવા માટે शान्तिके लिए, **प्रवक्ष्यामि** હું કહીશ कहूँगा ॥ १७॥

17. Henceforth we shall expound the subject of various medicated (yavagu) gruels used for the relief of the various disorders of the curable type.

**पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।**
**यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता ॥१८॥**

**पिप्पली** પીપર पिप्पली, **पिप्पलीमूल** પીપરીમૂળ पिप्पलीमूल, **चव्य** ચવક चव्य, **चित्रक** ચિત્રો चित्रक, **नागरैः** અને સૂંઠથી और सोंठसे, **उपसाधिता** સિદ્ધ કરેલી बनाई, **यवागूः** યવાગૂ यवागू, **दीपनीया** અગ્નિદીપક अग्निदीपक, **शूलघ्नी च** અને શૂલનાશક और शूलनाशक, **स्यात्** છે है ॥ १८ ॥

18. Gruel prepared with long pepper, piper root, piper chaba, white flowered leadwort and dry ginger is a digestive-stimulant and pain-killer.

---

१५. ताम्युपस्थित—तान्युपहृत (ख.)
,, विचारयन्—विचारयेत् (ग.)

१७. विविधौषधाः—विविधौषधीः (च. प.)

१८. शूलघ्नी—शूलघ्ना (त.)
,, उपसाधिता—उपपादिता (त.)

**दधित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता ।**
**पाचनी ग्राहिणी, पेया सवाते पाञ्चमूलिकी॥ १९ ॥**

**दधित्थ**-કોઠ कैथ, **बिल्व**-બીલું बेलगिरी, **चाङ्गेरी**-ખાટી ચાંગેરી तिपतिया, **तक्र**-છાશ तक्र, **दाडिम**-અને દાડમથી और अनारसे, **साधिता** તૈયાર કરેલી सिद्ध की, **पेया** પેયા पेया, **पाचनी** પાચક पाचक, **ग्राहिणी** અને ગ્રાહી છે और संग्राही है, **पाञ्चमूलिकी** પંચમૂળની પેયા पंचमूली पेया, **सवाते** વાતપ્રધાન અતિસારમાં યોજવી જોઇએ वातजनित अतिसारमें बरतनी चाहिए ॥ १९ ॥

19. Gruel prepared with wood apple, bael, yellow wood–sorrel, butter-milk and pomegranate is digestive and astringent. The gruel prepared with penta–radices should be given in diarrhea of the vata type.

**शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ।**
**दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥२०॥**

**शालपर्णी**-સાલવણ सरिवन, **बला**-બળબીજ खरैटी, **बिल्वैः** બીલાં बेलगिरी, **पृश्निपर्ण्या च** અને પીઠવણથી और पिठवनसे, **साधिता** તૈયાર કરેલ बनाई, **दाडिमाम्ला** દાડમથી ખાટી બનાવેલ तथा अनारदानेसे खट्टी की, **पेया** પેયા पेया, **पित्त–श्लेष्म**-પિત્ત અને કફના पित्त–कफ-जनित, **अतिसारिणाम्** અતિસારવાળાઓને अतिसारवालोंके लिए, **हिता** હિતકર છે हितकारी है ॥ २० ॥

20. Gruel prepared with tick trefoil, heart-leaved sida, bael, painted-leaved uraria and soured with pomegranate-juice is beneficial in diarrhea of the pitta or kapha type.

**पयस्यर्धोदके छागे ह्रीवेरोत्पलनागरैः ।**
**पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ॥२१॥**

**अर्धोदके** અરધું પાણી નાખેલ आधा पानी मिलाकर, **छागे** બકરીના बकरीके, **पयसि** દૂધમાં दूधमें, **ह्रीवेर**-સુગંધી વાળો सुगन्धवाला, **उत्पल**-**नीलकमल** नीलोफर, **नागरैः** સૂંઠ सोंठ, **पृश्निपर्ण्या च** તથા પીઠવણથી तथा पिठवनसे, **साधिता** તૈયાર કરેલ सिद्ध की हुई, **पेया** પેયા पेया, **रक्तातिसारघ्नी** રક્તાતિસારનો નાશ કરનારી છે रक्तातिसारनाशक है ॥ २१ ॥

21. Gruel prepared with semi-diluted goat's milk, fragrant sticky mallow, blue water lily, dry ginger and painted-leaved uraria is anti-dysenteric.

**दद्यात् सातिविषां पेयां सामे साम्लां सनागराम् ।**
**श्वदंष्ट्राकण्टकारीभ्यां मूत्रकृच्छ्रे सफाणिताम् ॥२२॥**

**सामे** આમયુક્ત અતિસારમાં आमातिसारमें, **सातिविषाम्** અતિવિષ સહિત अतीस, **साम्लाम्** ખાટા દાડમના દાણાના રસ खट्टे अनारदानेके रस, **सनागराम्** અને સૂંઠ સહિત और सोंठ सहित, **पेयाम्** પેયા पेया, **मूत्रकृच्छ्रे** મૂત્રકૃચ્છ્રમાં मूत्रकृच्छ्रमें, **श्वदंष्ट्रा** ગોખરુ तथा गोखरु तथा, **कण्टकारीभ्याम्** બેઠી ભોરિંગણી સાથે સિદ્ધ કરી छोटी कटेरीसे सिद्ध करके, **सफाणिताम्** ફાણિત સાથે रावके साथ, **दद्यात्** આપવી જોઇએ देनी चाहिए ॥२२॥

22. Gruel, prepared with atis, dry ginger and soured, should be used in dysentery, accompanied with undigested matter in the stools. Gruel prepared with small caltrops and yellow-berried night-shade is given with liquid gur in dysuria.

**विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च ।**
**तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका ॥२३॥**

**विडङ्ग**-વાવડિંગ वायविडंग, **पिप्पलीमूल**-પીપરીમૂળ पिप्पलीमूल, **शिग्रुभिः** સરગવો शोभाञ्जन, **मरिचेन च** અને મરી વડે और मरिच इनसे, **तक्रसिद्धा** છાશમાં સિદ્ધ કરેલી तक्रमें सिद्ध की, **यवागूः** યવાગૂ यवागू, **ससुवर्चिका** સાજીખાર સહિત લેવાથી साजीखार मिलाकर लेनेसे, **क्रिमिघ्नी** ક્રિમિનાશક क्रिमिनाशक, **स्यात्** થાય છે होती है ॥ २३ ॥

१९. दधित्थ–कपित्थ (ड.)

,, पाञ्चमूलिकी–पांचमूल्कि (झ. ड.)

२२. पेयां सामे–पेयामामे (ग.च.ष.)

२३. तक्रसिद्धा यवागूः–तक्रादाना यवागूः (घ.ज.प.)

23. Gruel of embelia, piper root, drumstick, black pepper and sal-soda prepared in buttermilk is anthelmintic.

**मृद्वीकासारिवालाजपिप्पलीमधुनागरैः ।**
**पिपासाघ्नी, विषघ्नी च सोमराजीविपाचिता ॥ २४ ॥**

**मृद्वीका**- द्राक्ष मुनक्का, **सारिवा**- सारिवा सारिवा, **लाज**- डांगरनी धाणी लाजा, **पिप्पली**- पीपर पिप्पली, **मधु**- मध मधु, **नागरैः** अने सूंठ और सोंठ, **विपाचिता** एओथी सिद्ध करेली यवागू इनसे सिद्ध यवागू, **पिपासाघ्नी** तृषा मटाडनार छे पिपासानाशक है, **सोमराजी-विपाचिता च** अने बाकुचीथी पकावेली यवागू और बावचीसे बनाई यवागू, **विषघ्नी** विषनाशक थाय छे विष-नाशक होती है ॥ २४ ॥

24. Gruel prepared with grapes, Indian sarsaparilla, fried paddy, long pepper, honey and dry ginger is adipsous; gruel prepared with babchi seeds is curative of toxicosis.

**सिद्धा वराहनिर्यूहे यवागूर्बृंहणी मता ।**
**गवेधुकानां भृष्टानां कर्शनीया समाक्षिका ॥ २५ ॥**

**वराहनिर्यूहे** वराहना मांसरसमां सुअरके मांस-रससे, **सिद्धा** सिद्ध करेल बनाई, **यवागूः** यवागू यवागू, **बृंहणी** बृंहण करनार बृंहण करनेवाली, **मता** मानेल छे मानी गई है, **भृष्टानाम्** अने शेकेल भूने, **गवेधुकानाम्** कसईथी बनावेली यवागू कसईसे बनाई यवागू, **समाक्षिका** मध साथे लेवाथी मधु मिलाकर लेनेसे, **कर्शनीया** कृशता करनार छे कृशता करनेवाली है ॥ २५ ॥

25. Gruel prepared with pork-juice is considered roborant and that prepared with roasted job's tears and mixed with honey is reductive.

**सर्पिष्मती बहुतिला स्नेहनी लवणान्विता ।**
**कुशामलकनिर्यूहे श्यामाकानां विरूक्षणी ॥ २६ ॥**

**सर्पिष्मती** घीवाळी घृतवाली, **बहुतिला** अने बहु तलवाळी तिलबहुल, **लवणान्विता** अने लवणयुक्त यवागू एवं लवणमिश्रित यवागू, **स्नेहनी** स्नेहन करनार छे स्निग्धता करनेवाली है, **कुश**- नानो दर्भ कुश, **आमलक**- तथा आमळांना एवं आवलेके, **निर्यूहे** कवाथमां क्काथमें, **सिद्धा** सिध्ध करेल बनाई, **श्यामाकानाम्** सामानी सांवककी, **यवागू** यवागू यवागू, **विरूक्षणी** रुक्षण करनार छे रूक्षताकारक है ॥ २६ ॥

26. Gruel prepared with ghee, salt and plenty of til, increases the unctuous quality of the body; and that prepared with decoction of small sacrificial grass and emblic myrobalan, in decoction of sanwa millet, diminishes the unctuous quality.

**दशमूलीशृता कासहिक्काश्वासकफापहा ।**
**यमके मदिरासिद्धा पक्काशयरुजापहा ॥ २७ ॥**

**दशमूलीशृता** दशमूळमां सिद्ध करेली यवागू दशमूलके काथमें सिद्ध यवागू, **कास**- कास कास, **हिक्का-श्वास**- हेडकी-श्वास हिक्का-श्वास, **कफ**- तथा कफनो एवं कफ, **अपहा** नाश करनार छे नाशक है, **यमके** घी तथा तेलमां घृत और तैलमें, **मदिरा**- मदिराथी मदिरासे, **सिद्धा** सिद्ध करेली यवागू सिद्ध यवागू, **पक्काशयरुजा** पकवाशयनी पीडा पक्काशयकी पीडाको, **अपहा** मटाडनार छे शान्त करती है॥२७॥

27. Gruel prepared with deca-radices is curative of cough, hiccough, dyspnea and the disorders arising from kapha; gruel prepared with the unctuous dyad (ghee and oil) and Madira wine is curative of intestinal colic.

**शाकैर्मांसैस्तिलैर्माषैः सिद्धा वर्चो निरस्यति ।**
**जम्ब्वाम्रास्थिदधित्थाम्लबिल्वैः साङ्ग्राहिकी मता २८**

**शाकैः** शाकथी शाकसे, **मांसैः** मांसथी मांससे, **तिलैः** तलथी तिलसे, **माषैः** अने अडदथी और उड़दोंसे, **सिद्धा** सिद्ध करेल यवागू सिद्ध यवागू, **वर्चः** मळने मलको, **निरस्यति** बहार काढे छे बहार निकालती है, **जम्बु-आम्र-**

२४. लाज-लाजा (त.)
२६. कुशामलकनिर्यूहे-कृष्णामलकनिर्यूहे (च.प.)
२७. कफापहा-रुजापहा (ग.थ.प.)

**अस्थि** જાંબુના ઠળિયા, આંબાની ગોટલી जामुनकी गुठली– आमकी गुठली, **दधित्थाम्ल** ખાટાં કોઠ खट्टे कैथ, **बिल्वैः** અને બીલાંથી और बेलगिरीसे, **सिद्धा** સિદ્ધ કરેલી યવાગૂ सिद्ध यवागू, **साङ्ग्राहिकी** સંગ્રાહક संग्राहक, **मता** માનેલી છે मानी है ॥ २८ ॥

28. Gruel prepared with vegetables, flesh, til and black-gram helps to eliminate feces; gruel prepared with the seeds of the jambul and mango, sour wood apple and bael fruit, is considered to be astringent in action.

**क्षारचित्रकहिङ्ग्वम्लवेतसैर्भेदिनी मता ।**
**अभयापिप्पलीमूलविश्वैर्वातानुलोमनी ॥ २९ ॥**

**क्षार** જવખાર यवक्षार, **चित्रक** ચિત્રો चित्रक, **हिङ्गु** હિંગ हींग, **अम्लवेतसैः** અને અમ્લવેતસથી और अम्लवेतससे, **सिद्धा** સિધ્ધ કરેલ યવાગૂ सिद्ध यवागू, **भेदिनी** મલનું ભેદન કરનાર मलभेदक, **मता** માનેલ છે मानी है, **अभया** હરડે हरड़, **पिप्पलीमूल** પીપરીમૂળ पिप्पलीमूल, **विश्वैः** અને સૂંઠથી સિધ્ધ કરેલ યવાગૂ और सोंठसे बनी यवागू, **वातानुलोमनी,** વાતનું અનુલોમન કરનાર છે वातका अनुलोमन करती है ॥ २९ ॥

29. Gruel prepared with alkali, white-flowered leadwort, asafetida and amlavetas is considered laxative. Gruel prepared with chebulic myrobalan, piper root and dry ginger induces normal (downward) peristaltic movement of Vata.

**तक्रसिद्धा यवागूः स्याद्घृतव्यापत्तिनाशिनी ।**
**तैलव्यापदि शस्ता स्यात्तक्रपिण्याकसाधिता ॥३०॥**

**तक्रसिद्धा** છાશથી સિદ્ધ કરેલ तक्रसे सिद्ध, **यवागूः** યવાગૂ यवागू, **घृत-व्यापत्ति** ઘૃતની વ્યાપદનો घृतसेवन-जन्य रोगोंका, **नाशिनी** નાશ કરનાર [illegible] करनेवाली, स्यात थाय छे होती है, तक्र पिण्याक- [illegible] तक्र[illegible] [illegible], नाशिनी [illegible] यवागू सिद्ध यवागू, तैल व्यापदि तेलनी व्यापदनो [illegible] तैलसेवन-जन्य रोगोंमें, **शस्ता** प्रशस्त [illegible], स्यात् [illegible] है ॥३०॥

30. Gruel prepared with butter-milk is curative of complications caused by the wrongful use of ghee: that prepared with butter-milk and til oil-cake is recommended in complications caused by the wrongful use of oil.

**गव्यमांसरसैः साम्ला विषमज्वरनाशिनी ।**
**कण्ठ्या यवानां यमके पिप्पल्यामलकैः शृता ॥३१॥**

**साम्ला** દાડમના રસથી ખાટી કરેલી અનારકે रससे खट्टी की हुई, **गव्यमांसरसैः** ગાયના માંસરસથી गोमांस-रससे, ( **सिद्धा** સિદ્ધ કરેલ યવાગૂ सिद्ध यवागू ) **विषमज्वर** વિષમ જ્વરનો विषम ज्वरकी, **नाशिनी** નાશ કરનાર છે नाशक है, **यमके** અને ઘી તથા તેલમાં और घृत तथा तैलमें, **पिप्पल्यामलकैः** પીપર અને આમળાંથી पिप्पली और आंवलेसे, **शृता** સિદ્ધ કરેલી बनाई, **यवानाम्** જવની जौकी, ( **यवागूः** યવાગૂ यवागू ) **कण्ठ्या** કંઠને હિતકર છે कण्ठके लिए उत्तम है ॥ ३१ ॥

31. Gruel prepared with beef-juice and mixed with acid is curative of irregular fever; gruel of barley prepared in the unctuous dyad, long pepper and emblic myrobalan is a throat-tonic.

**ताम्रचूडरसे सिद्धा रेतोमार्गरुजापहा ।**
**समाषविदला वृष्या घृतक्षीरोपसाधिता ॥ ३२ ॥**

**ताम्रचूडरसे** કૂકડાના માંસના રસમાં कुक्कुटके मांसरसमें, **सिद्धा** સિધ્ધ કરેલ યવાગૂ सिद्ध यवागू, **रेतोमार्गरुजा** વીર્યમાર્ગની પીડાને वीर्यमार्गकी पीड़ाको, **अपहा** દૂર કરનાર છે शान्त करती है, **समाषविदला** અને અડદની દાળ સહિત और उड़दकी दालके साथ,

२९. विश्वैः–बिल्वैः (ग.च.)

३०. व्यापत्तिनाशिनी–व्यापद्विनाशिनी (ज.प.)

,, शस्ता स्यात्–शस्ता तु (द.)

१. गव्यमांसरसैः–गव्यमांसरसे (ग.थ.)

घृत- क्षीर ધી તથા દૂધમાં घृत एवं दूधसे, उपसाधिता સાધેલી યવાગૂ બનાઈ यवागू, वृष्या વૃષ્ય છે वृष्य है ॥३२॥

32. Gruel prepared with the meat-juice of the cock is curative of diseases of the seminal passages; gruel prepared with dal of black gram in ghee and milk is aphrodisiac.

**उपोदिकादधिभ्यां तु सिद्धा मदविनाशिनी ।**
**क्षुधं हन्यादपामार्गक्षीरगोधारसैः शृता ॥ ३३ ॥**

उपोदिका પોઈ पोथी, दधिभ्याम् તથા દહીંથી तथा दहीसे, सिद्धा સિદ્ધ કરેલી યવાગૂ बनाई यवागू, तु તો तो, मदविनाशिनी મદનો નાશ કરનાર છે मदनाशक है, अपामार्ग- અઘેડાનાં બીજ चिरचिटा, क्षीर- દૂધ दूध, गोधारसैः અને ઘોના માંસરસથી और गोधा-मांसरससे, शृता સિદ્ધ કરેલી યવાગૂ बनाई यवागू, क्षुधम् ભૂખનો क्षुधाका, हन्यात् નાશ કરે છે नाश करती है ॥ ३३ ॥

33. Gruel prepared of Indian spinach with curds is curative of intoxication; and gruel of rough chaff prepared with milk and iguana flesh juice kills the appetite.

अध्यायार्थसंग्रहः —

**तत्र श्लोकः —**

**अष्टाविंशतिरित्येता यवाग्वः परिकीर्तिताः ।**
**पञ्च कर्माणि चाश्रित्य प्रोक्तो भैषज्यसंग्रहः ॥ ३४ ॥**

तत्र श्लोकः તે બાબતમાં શ્લોક છે કે उस विषयमें श्लोक है कि, इति આ પ્રમાણે इस प्रकारसे, एताः આ ये, अष्टाविंशतिः અઠ્ઠાવીસ अट्ठाईस, यवाग्वः યવાગૂઓ यवागू, परिकीर्तिताः કહી कह दी हैं, पञ्च कर्माणि च અને પંચકર્મ और पंचकर्मको, आश्रित्य સંબંધી लक्ष्य करके, भैषज्यसंग्रहः ઔષધસંગ્રહ પણ भैषज्य-समूह भी, प्रोक्तः કહ્યો છે कह दिया है ॥ ३४॥

३४. श्लोकः—श्लोकाः (घ.ज.द.)
,, तत्र श्लोकः—तत्र श्लोकः (संक्षेपश्लोकः) (च.त.)
,, परिकीर्तिताः—परिकल्पिताः (त.)

Here is a recapitulatory verse:—

34. Thus we have described the twentyeight gruels and the group of drugs pertaining to the quinary purificatory procedures.

**पूर्वं मूलफलज्ञानहेतोरुक्तं यदौषधम् ।**
**पञ्चकर्माश्रयज्ञानहेतोस्तत् कीर्तितं पुनः ॥ ३५ ॥**

मूल-फल- મૂલ અને ફલના मूल और फलके, ज्ञान-हेतोः જ્ઞાનને માટે ज्ञानके लिए, यत् જે जो, औषधम् ઔષધ औषध, पूर्वम् પ્રથમ प्रथम अध्यायमें, उक्तम् કહ્યું છે कही हैं, तत् તે इनको, पञ्चकर्म- પંચકર્મ पंच कर्मोंके, आश्रयज्ञान- સંબંધી જ્ઞાનને ज्ञानके, हेतोः માટે कारण, पुनः ફરીને पुनः, कीर्तितम् અહીં કહ્યું છે इस अध्यायमें कहा है ॥ ३५ ॥

35. The drugs that were described before with the object of imparting the knowledge of Rooters and Fruiters are again mentioned here with the object of imparting the knowledge of drugs required in the five purificatory procedures.

चिकित्सार्हो वैद्यः—

**स्मृतिमान् हेतुयुक्तिज्ञो जितात्मा प्रतिपत्तिमान् ।**
**भिषगौषधसंयोगैश्चिकित्सां कर्तुमर्हति ॥ ३६ ॥**

स्मृतिमान् સ્મૃતિવાળો स्मृतिशाली, हेतुयुक्तिज्ञः હેતુ અને યુક્તિ જાણનાર हेतु और युक्तिको जाननेवाला, जितात्मा જિતેન્દ્રિય जितात्मा, प्रतिपत्तिमान् તાત્કાલિક ઉપચાર જાણનાર उत्तम सूझवाला, भिषक् વૈદ્ય वैद्य, औषधसंयोगैः ઔષધોના સંયોગોથી औषधियोंके मिश्रणसे, चिकित्साम् ચિકિત્સા चिकित्सा, कर्तुम् કરવાને करनेमें, अर्हति યોગ્ય થાય છે योग्य होता है ॥ ३६ ॥

36. The physician with good memory, well versed in diagnosis and the application of therapeutic agents, self-controlled and prompt in taking

३६. प्रतिपत्तिमान्—मतिमान् भिषक् (ग.)

right decisions is entitled to undertake treatment by prescribing these drugs.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः ॥ २ ॥**

इति આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **श्लोकस्थाने** સૂત્રસ્થાન વિષે सूत्रस्थानमें, **अपामार्गतण्डुलीयः** 'અપામાર્ગતંડુલીય' 'अपामार्गतण्डुलीय,' **नाम** નામનો नामका, **द्वितीयः** બીજો दूसरा, **अध्यायः** અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ २ ॥

II. Thus in the section on General Principles of the treatise compiled by Agnivesa and revised by Caraka, the second chapter entitled "The Seeds of Rough Chaff" is completed.

## तृतीयोऽध्यायः ।

## ત્રીજો અધ્યાય अध्याय तीसरा Chapter III

आरग्वधीयाध्यायोपक्रमः—

**अथात आरग्वधीयमध्यायं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**अथ अतः** હવે અહીંથી अब आगे, **आरग्वधीयम्** 'આરગ્વધીય' નામના 'आरग्वधीय नामके', **अध्यायम्** અધ્યાયનું अध्यायका, **व्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, **आत्रेयः** આત્રેયે आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, **आह स्म** કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "Purging Cassia".

2. Thus declared the worshipful Atreya.

पञ्चदश कुष्ठघ्नाः प्रदेहाः—

**आरग्वधः सैडगजः करञ्जो**
**वासा गुडूची मदनं हरिद्रे ।**
**श्याह्वः सुराह्वः खदिरो धवश्च**
**निम्बो विडङ्गं करवीरकत्वक् ॥३॥**

**सैडगजः** કુંવાડીઆ સહિત पनवाड सहित, **आरग्वधः** ગરમાળો अमलतास, **करञ्जः** કરંજ करंज, **वासा** અરડુસી वासा, **गुडूची** ગળો गिलोय, **मदनम्** મીંઢળ मैनफल, **हरिद्रे** હળદર-દારૂહળદર हल्दी-दारुहल्दी, **श्याह्वः** ગંધબિરોજા गंधबिरोजा, **सुराह्वः** દેવદાર देवदार, **खदिरः** ખેર खैर, **धवः** ધાવડો धावन, **निम्बः** લીમડો नीम, **विडङ्गम्** વાવડિંગ वायविडंग, **करवीरकत्वक्** કરેણની છાલ कनेरकी छाल ॥ ३ ॥

3. (1) Purging cassia with fœtid cassia, Indian beech, vasaka, guduchi, emetic nut, turmeric and Indian berberry; (2) pine-resin, deodar, catechu, crane tree, neem, embelia and Indian oleander bark;

**ग्रन्थिश्च भौर्जो लशुनः शिरीषः**
**सलोमशो गुग्गुलुकृष्णगन्धे ।**
**फणिज्झको वत्सकसप्तपर्णौ**
**पीलूनि कुष्ठं सुमनःप्रवालाः ॥ ४ ॥**

**भौर्जः** ભોજપત્રની भूर्जपत्रकी, **ग्रन्थिः** ગાંઠ ग्रन्थि, **लशुनः** લસણ लहसुन, **सलोमशः** કાસીસ સહિત कासीस सहित, **शिरीषः** સરસડો शिरस, **गुग्गुलुकृष्णगन्धे च** ગૂગળ તથા સરગવો गुग्गुलु और सहजन, **फणिज्झकः** મરવો मरवा, **वत्सक-** કડો कूड़ा, **सप्तपर्णौ** સાતવિન सतवन, **पीलूनि** પીલુ पीलु, **कुष्ठम्** કઠ कूठ, **सुमनःप्रवालाः** અને જૂઈનાં પલ્લવ और चमेलीके पत्ते ॥ ४ ॥

4. (3) node of birch tree, garlic, siris, green vitriol, gum guggul and drumstick; (4) sweet marjoran, kurchi, dita bark, Indian tooth brush, costus and sprouts of spanish jasmine;

१. करवीरकत्वक्–करवीरकश्च (म.)

वचा हरेणुस्त्रिवृता निकुम्भो
भल्लातकं गैरिकमञ्जनं च ।
मनःशिलाले गृहधूम एला
काशीसलोध्रार्जुनमुस्तसर्जाः ॥ ५ ॥

वचा વજ वच, हरेणुः રેણુકબીજ हरेणु, त्रिवृता નસોતર निशोथ, निकुम्भः દંતી दन्ती, भल्लातकम् ભિલામો भिलावा, गैरिकम् સોનાગેરુ गेरु, अञ्जनम् च અને રસાંજન और सुरमा, मनःशिलाले મનઃશિલ-હરતાલ मैनसिल–हरताल, गृहधूमः ઘરની મેશ घरका धुँवासा, एला એલચી छोटी इलायची, काशीस-लोध्र-કાસીસ-લોધ્ર कासीस–लोध, अर्जुन-मुस्त- અર્જુન-મોથ अर्जुन-नागरमोथ, सर्जाः અને રાળ और राल ॥५॥

5. (5) sweet-flag, fragrant piper, turpeth, red physic nut, marking nut, red chalk and black antimony; (6) red and yellow arsenics, kitchen soot, cardamom, green vitriol, lodh, arjuna, nut grass and sarj saul;

इत्यर्धरूपैर्विहिताः षडेते
गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ता-
श्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥ ६ ॥

इति આ પ્રમાણે इस तरह, अर्धरूपैः અર્ધા અર્ધા શ્લોકથી आधे आधे श्लोकमें, विहिताः કહેલાં कहे, गोपित्त-पीताः ગાયના પિત્તથી પીળાં થયેલાં गायके पित्तसे पीले बनाये, पुनः एव અને વળી पुनः, पिष्टाः પીસેલાં पीसकर, परं सिद्धाः શ્રેષ્ઠ રીતે સિધ્ધ કરેલાં એવાં सिद्ध किये हुए, सर्षपतैलयुक्ताः તથા સરસવના તેલ સાથે મેળવેલાં और सरसोंके तैलसे युक्त, एते षट् આ છ इन छ, चूर्ण-प्रदेहाः ચૂર્ણ અને લેપનો चूर्ण और प्रदेहका, भिषजा વૈદ્યે वैद्यको, प्रयोज्याः પ્રયોગ કરવો प्रयोग करना चाहिए ॥६॥

6. These six groups of drugs mentioned in each of the six distichs, when soaked in ox-bile and pounded again, have proved very efficacious. These powders should be prescribed by the physician to be used as external applications mixed with rape-seed oil.

कुष्ठानि कृच्छ्राणि नवं किलासं
सुरेशलुप्तं किटिभं सदद्रु ।
भगन्दराशांस्यपचीं सपामां
हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥ ७ ॥

प्रयुक्ताः પ્રયોજેલા આ લેપો प्रयोग किये हुए ये प्रदेह, नराणाम् મનુષ્યોનાં मनुष्यके, कृच्छ्राणि કષ્ટસાધ્ય कष्ट-साध्य, कुष्ठानि ચામડીનાં દરદો त्वक् रोगोंको, नवम् किलासम् નવું કિલાસ नूतन किलास, सुरेशलुप्तम् ઇન્દ્રલુપ્ત इन्द्रलुप्त, सदद्रु દાદર સહિત दद्रुसहित, किटि-भम् કિટિભ किटिभ, भगन्दर- ભગંદર भगन्दर, अर्शांसि અર્શ अर्श, सपामाम् अपचीम् અને ખસ સહિત અપચીનો पामासहित अपचीको, अचिरात् તરતમાં शीघ्र, हन्युः નાશ કરે છે नष्ट कर देते हैं ॥७॥

7. These when administered soon cure persons of obstinate skin diseases, recent leprous lesions, alopecia, keloids, ringworm, fistula-in-ano, piles, scrofula and papules.

कुष्ठं हरिद्रे सुरसं पटोलं
निम्बाश्वगन्धे सुरदारुशिग्रू ।
ससर्षपं तुम्बुरुधान्यवन्यं
चण्डां च चूर्णानि समानि कुर्यात् ॥ ८ ॥

कुष्ठम् કઠ कूठ, हरिद्रे હળદર, દારુહળદર हल्दी, दारुहल्दी, सुरसम् તુલસી तुलसी, पटोलम् પરવળ परवल, निम्ब-अश्वगन्धे લીમડો, આસન नीम, अश्व-गन्धा, सुरदारु- દેવદાર देवदारु, शिग्रू સરગવો सहजन,

५. त्रिवृता–त्रिफला (च.)
,, गृहधूम एला–गृहधूम पांशु (प.)
,, एला–भानु (ग.)
,, अर्जुन–अञ्जन (ग.)

७. सुरेशलुप्तं–सुरेन्द्रलुप्तम् (क.घ.झ.त.द.)
,, किटिभं–किटिमम् (च.छ.)
८. सुरसं–सुरसा (ग.)
,, शिग्रू–शिग्रूः (ख.द.)
,, तुम्बुरुधान्यवन्यम्–तुम्बुरुधान्यवह्निम् (क.प.)

ससर्षपम् સરસવ સહિત सरसों सहित, तुम्बुरुधान्य- તેજફળ-ધાણા तेजफल-धनिया, वन्यम् કેવડીમોથ केवडीमोथ, चण्डाम् च અને ચોરક એઓનું और चोरक इनको, समानि સમપ્રમાણમાં इनको समान मात्रामें लेकर, चूर्णानि ચૂર્ણ चूर्ण, कुर्यात् કરવું करना चाहिए ॥८॥

8. Costus, turmeric and Indian berberry, holy basil, wild snake gourd, neem, winter cherry, deodar, drumstick, rape-seeds, Indian toothache, coriander, rush nut and angelica—the powders of these should be taken in equal quantity.

तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ।
दद्रुः सकण्डूः किटिभानि पामा
विचर्चिका चैव तथैति शान्तिम् ॥ ११ ॥

तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्तयितुं यतेत ।
तेनास्य कण्डूः पिडकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ९ ॥

प्रथमम् પ્રથમ प्रथम, तैलाक्तम् તેલ ચોળી तैल लगाकर, शरीरम् શરીરે शरीरपर, तक्रपिष्टैः છાશની સાથે પીસેલાં तक्रके साथ पीसकर, तैः દ્રવ્યોથી उन द्रव्योंसे, उद्वर्तयितुम् ઉદ્વર્તન કરવાનો उबटन करनेका, यतेत યત્ન કરવો यत्न करे, तेन अस्य તેથી એની इससे मनुष्यकी, कण्डूः ખંજવાળ खुजली, सकोठाः पिडकाः કોઠ સહિત ફોડકીઓ कोठ सहित पिडकायें, कुष्ठानि કુષ્ઠ कुष्ठ, शोफाः च અને શોફ और शोफ, शमम् व्रजन्ति શાન્ત થાય છે शान्त होते हैं ॥ ९ ॥

9. They should be made into paste with butter-milk and rubbed over the body which has been previously smeared with oil; this gives relief in pruritus, pimples, wheals, dermatosis and edema.

कुष्ठामृतासङ्गकटङ्कटेरी-
कासीसकम्पिल्लकमुस्तलोध्राः ।
सौगन्धिकं सर्जरसो विडङ्गं
मनःशिलाले करवीरकत्वक् ॥ १० ॥

कुष्ठ- કઠ कूठ, अमृतासङ्ग- મોરથુથુ नीलाथोथा, कटङ्कटेरी- દારુહળદર दारु हल्दी, कासीस- કાસીસ कासीस, कम्पिल्लक- કપીલો कमीला, मुस्तलोध्रा મોથ, લોધર मोथा-लोध, सौगन्धिकम् ગંધક गन्धक, सर्जरसः રાળ राल, विडङ्गम् વાવડિંગ वायविडंग, मनःशिलाले મનઃશિલ, હરતાલ मैनसिल, हरताल, करवीरकत्वक् અને કરેણની છાલ और कनेरकी छाल ॥ १० ॥

10. Costus, blue vitriol, Indian berberry, green vitriol, kamala, nut grass, lodh, sulphur, yellow resin, embelia, red and yellow arsenics and oleander bark;

एतानि એઓનું इनके, चूर्णानि ચૂર્ણ चूर्ण, कृतानि કરી करके, तैलाक्तगात्रस्य તેલ ચોળેલ શરીરવાળાને शरीर पर तैल लगाकर, अवचूर्णनार्थम् શરીરે ભભરાવવા માટે छिड़कने के लिए, दद्यात् આપવું देना चाहिए, सकण्डूः ખંજવાળ સહિત कण्डू सहित, दद्रुः દાદર दद्रू, किटिभानि કિટિભ किटिभ, पामा ખસ पामा, विचर्चिका વિચર્ચિકા और विचर्चिका, तथा च एव તે પ્રમાણે કરવાથી इसी तरह करनेसे, शान्तिम् एति શાન્ત થાય છે शान्त होती हैं ॥ ११ ॥

11. These should be pulverised and used as dusting powders over the parts previously anointed with oil. It relieves ringworm, pruritus, keloids, papules and bulbous eruptions.

मनःशिलाले मरिचानि तैल-
मार्कं पयः कुष्ठहरः प्रदेहः ।
तुत्थं विडङ्गं मरिचानि कुष्ठं
लोध्रं च तद्वत् समनःशिलं स्यात् ॥ १२ ॥

मनःशिल-आले મનઃશિલ, હરતાલ मैनसिल—हरताल, मरिचानि મરી मरिच, तैलम् તેલ सरसोंका तेल,

९. तक्रपिष्टैः—तक्रयुक्तैः (ग. घ. ड. थ.)
१०. मुस्तलोध्रा—मुस्तलोध्रम् (क. च. छ.)
,, करवीरकत्वक्—करवीरकं च (प.)

११. चैव तथैति शान्तिम्—चेति शमं व्रजन्ति (ग.)
,, किटिभानि—किटिमानि (च. झ. ड.)

आर्कम् पयः આકડાનું દૂધ आकका दूध, प्रदेहः એઓનો લેપ इनका लेप, कुष्ठहरः કુષ્ઠનાશક છે कुष्ठनाशक है, तुत्थम् મોરથૂથુ नीलाथोथा, विडङ्गम् વાવડિંગ वायविडङ्ग, मरिचानि મરી काली मरिच, कुष्ठम् , કઠ कूठ, समनः शिलम् અને મનઃશિલ સહિત और मैनसिल सहित, लोध्रम् च લોધ્ર लोध्र, तद्वत् स्यात् તે પ્રમાણે કુષ્ઠનાશક છે उसी प्रकार कुष्ठनाशक है ॥ १२ ॥

12. Red and yellow arsenic, black pepper, til oil, and milk of mudar make a good application in dermatosis. Blue vitriol, embelia, black pepper, costus, lodh and red arsenic act similarly.

रसाञ्जनं सप्रपुनाडबीजं
युक्तं कपित्थस्य रसेन लेपः ।
करञ्जबीजैडगजं सकुष्ठं
गोमूत्रपिष्टं च परः प्रदेहः ॥ १३ ॥

सप्रपुनाडबीजम् કુવાડિયાનાં બીજ સહિત पनवाड़के बीज सहित, रसाञ्जनम् રસાંજનને रसौंतको, कपित्थस्य કોઠના कैथके, रसेन રસથી रसमें, युक्तम् યુક્ત मिलाकर, लेपः કરેલો લેપ કુષ્ઠનાશક છે किया लेप कुष्ठनाशक है, सकुष्ठम् કઠ સહિત कुष्ठ सहित, करञ्जबीज-एडगजम् કરંજનાં બી તથા કુવાડિયો करंज बीज और पनवाड़के बीज, गोमूत्रपिष्टम् च એઓને ગોમૂત્રમાં વાટીને इनको गोमूत्रमें पीसनेसे, परः શ્રેષ્ઠ उत्तम, प्रदेहः લેપ બને છે प्रदेह बनता है ॥ १३ ॥

13. The unguent, prepared of extract of Indian berberry and the seeds of fetid cassia in the juice of wood-apple, is another good application; the seeds of Indian beech, fetid cassia and costus pounded in cow's urine make an excellent ointment.

उभे हरिद्रे कुटजस्य बीजं
करञ्जबीजं सुमनःप्रवालान् ।
त्वचं समध्यां हयमारकस्य
लेपं तिलक्षारयुतं विदध्यात् ॥ १४ ॥

उभे हरिद्रे બન્ને હળદર दोनों हल्दी, कुटजस्य बीजम् ઈંદ્રજવ इन्द्रजौ, करञ्जबीजम् કરંજનાં બીજ करंजके बीज, सुमनः प्रवालान् જૂઈનાં પાન चमेलीके पत्ते; हयमारकस्य અને કરેણની और कनेरकी, समध्याम् વચલાં કાષ્ઠ સહિત बीचकी लकड़ी सहित, त्वचं છાલ छाल, तिलक्षारयुतम् એઓનો તિલક્ષાર સહિત इनको तिलक्षारके साथ मिलाकर, लेपम् લેપ लेप, विदध्यात् કરવો જોઈએ करना चाहिए ॥ १४ ॥

14. The unguent of turmeric and Indian berberry, seeds of kurchi, seeds of Indian beech, sprouts of Spanish jasmine, bark and pith of oleander, should be used with til alkali.

मनःशिला त्वक् कुटजात् सकुष्ठात्
सलोमशः सैडगजः करञ्जः ।
ग्रन्थिश्च भौर्जः करवीरमूलं
चूर्णानि साध्यानि तुषोदकेन ॥ १५ ॥

मनःशिला મનઃશિલ मैनसिल, सकुष्ठात् કઠ સહિત कूठ सहित, कुटजात् त्वक् કડાછાલ कुड़ेकी छाल, सलोमशः કાસીસ સહિત कासीस सहित, सैडगजः કુવાડિયા સહિત पनवाड़ सहित, करञ्ज કરંજ करंज, भौर्जः ભોજ વૃક્ષની भूर्जपत्रकी, ग्रन्थि ગાંઠ ग्रन्थि, करवीरमूलं અને કરેણનું મૂળ और कनेरकी जड़, चूर्णानि એઓનું ચૂર્ણ इनके चूर्णको, तुषोदकेन તુષોદકથી तुषोदक (धान्याम्ल-कांजी) से, साध्यानि સિદ્ધ કરવું सिद्ध करना चाहिए ॥ १५ ॥

15. Red arsenic, bark of kurchi, costus, green vitriol, fetid cassia, Indian beech, nodes of birch-tree, Indian

१३. सप्रपुनाड बीजं—सप्रपुटाल बीजं (प.)
,, युक्तं—युक्तः (च. ठ.)
,, सकुष्ठं —सकुष्ठो (ग.)
,, गोमूत्रपिष्टं च —गोमूत्रपिष्टश्च (ख. ग.)

१४. प्रवालान्—प्रवालाः
१५. मनः शिलात्वक् कुटजात् सकुष्ठात्—मनः शिलाले कुटजं सकुष्ठम् (प.)
,, सकुष्ठात्—सकुष्ठः (च. त.)

oleander root: powder of the measure of one tola of each of these drugs should be taken.

पलाशनिर्दाहरसेन चापि
कर्षोद्धृतान्याढकसंमितेन ।
दर्वीप्रलेपं प्रवदन्ति लेपमेतं
परं कुष्ठनिसूदनाय ॥ १६ ॥

कर्ष–उद्धृतानि એક તોલા જેટલું પ્રત્યેકનું ચૂર્ણ લઈ તેને प्रत्येकका एक तोला चूर्ण लेकर उसको, आढकसंमितेन ચારપ્રસ્થ–૨૫૬ તોલા दो सो छप्पन तोलाको जलाकर बनाये, पलाशनिर्दाह- ખાખરાના ढाकके, रसेन च अपि ચૂવાથી પકાવવું रससे पकाना, दर्वीप्रलेपम् સિદ્ધ કરેલા અને કડછીએ ચોટે તેવા सिद्ध किये हुए एवं कड़छीके साथ चिपकने लगे ऐसा, एतम् लेपम् આ લેપને इस लेपको, कुष्ठनिसूदनाय કુષ્ઠનો નાશ કરવા માટે कुष्ठके नाश करनेके लिए, परम् શ્રેષ્ઠ अतिशय उत्तम, प्रवदन्ति કહે છે कहते हैं ॥ १६ ॥

16. These should be boiled in 256 tolas of exudation juice of palas roots to a semi-solid consistency. This ointment is said to be most beneficial in the eradication of skin diseases.

पर्णानि पिष्ट्वा चतुरङ्गुलस्य
तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठा-
न्युद्वर्तयेदश्वहनच्छदैश्च ॥ १७ ॥

चतुरङ्गुलस्य ગરમાળાનાં अमलतासके, पर्णानि પાન पत्ते, अथ काकमाच्याः અને પીલુડીનાં मकोयके, पर्णानि પાન पत्ते, अश्वहनच्छदैः કરેણનાં પાન સાથે और कनेरके पत्तोंको, तक्रेण च તથા છાશની સાથે छाछ के साथ, पिष्ट्वा વાટીને તેનું पीसकर इसका, तैलाक्तगात्रस्य શરીરે તેલ ચોળ્યું હોય તેવા शरीर पर तेल मालीश करके, नरस्य માણસના मनुष्यके, कुष्ठानि કુષ્ઠ પર कुष्ठ पर, उद्वर्तयेत ઉદ્વર્તન કરવું उद्वर्तन करना चाहिए ॥ १७ ॥

17. The ointment, prepared of the leaves of purging cassia, or black night-shade, or Indian oleander with butter-milk, should be rubbed over the skin lesions of the person who has been previously anointed with oil.

वातहराः पञ्च प्रदेहाः–

कोलं कुलत्थाः सुरदारुरास्ना-
माषातसीतैलफलानि कुष्ठम् ।
वचा शताह्वा यवचूर्णमम्ल-
मुष्णानि वातामयिनां प्रदेहः ॥ १८ ॥

कोलम् બોર आर्द्रीके बेर, कुलत्थाः કળથી कुलत्थी, सुरदारु- દેવદાર देवदारु, रास्ना- રાસ્ના रास्ना, माष- અડદ उड़द, अतसी- અળસી अलसी, तैलफलानि તેલી બીઆં तेल वाले बीज, कुष्ठम् કઠ कूठ, वचा વજ वच, शताह्वा સુવા सोया, यवचूर्णम् અને જવનું ચૂર્ણ એઓને એકત્ર કરી और जौका आटा इनको एकत्र कर, अम्लम् કાંજી વગેરેથી અમ્લ કરીને कांजी आदि अम्ल द्रव्योंमें मिलाकर, उष्णानि તથા ઊનાં કરીને गरम करके, वातामयिनाम् વાત રોગીઓનાં શરીર પર वातरोगियोंके शरीरपर, प्रदेहः લેપ કરવો જોઈએ लेप करना चाहिए ॥ १८ ॥

18. Indian jujube, horse gram, deodar, Indian groundsel, black gram, linseed, oily seeds, costus, sweet flag, dill and barley flour—these acidified and warmed make a good application for those afflicted with vata disorders.

आनूपमत्स्यामिषवेसवारै-
रुष्णैः प्रदेहः पवनापहः स्यात् ।
स्नेहैश्चतुर्भिर्दशमूलमिश्रै-
र्गन्धौषधैश्चानिलहः प्रदेहः ॥ १९ ॥

१६. पलाशनिर्दाह–पलाशनिर्यूह (ढ. प.)
,, चापि–वापि (क. च. छ.)
,, प्रवदन्ति–प्रविदन्ति (ज.)

१८. माषातसी–माषा उमा (ग.)
१९. मिश्रैः–सिद्धैः (ग. प.)
,, अनिलहः–अनिलहृत् (क.)
,, ,, –अनिलजित् (घ.)

**उष्णैः** ઊના ઊના गरम किए हुए, **आनूप-मत्स्य-** આનૂપ પશુપંખીઓ અને મત્સ્યના आनूपदेशीय पशु-पक्षियोंके एवं मछलियोंके, **आमिष-** માંસના मांससे बनाये, **वेसवारैः** વેસવારથી वेसवारका, **प्रदेहः** લેપ प्रदेह, **पवनापहः** વાતનાશક वातनाशक, **स्यात्** છે है, **दशमूलमिश्रैः** દશમૂળથી મિશ્રિત दशमूलके साथ, **चतुर्भिः स्नेहैः** ચાર સ્નેહો વડે चारों स्नेह-घृत तैल वसा और मज्जासे, **गन्धौषधैः च** તથા ગન્ધૌષધથી સિધ્ધ एवं गन्धद्रव्योंसे मिलाकर बनाया, **प्रदेहः** લેપ प्रदेह, **अनिलहः** વાતનાશક છે वातनाशक है ॥ १९ ॥

19. The warm application of the minced and prepared flesh of wet-land animals and fishes will cure vata disorders; the application of decaradices and drugs of the fragrant group prepared in the tetrad of unctuous substances cures vata disorders.

**तक्रेण युक्तं यवचूर्णमुष्णं**
**सक्षारमर्तिं जठरे निहन्यात् ।**
**कुष्ठं शताह्वां सवचां यवानां**
**चूर्णं सतैलाम्लमुशन्ति वाते ॥२०॥**

**तक्रेण** છાશથી छाछमें, **युक्तम्** યુક્ત मिलाकर, **सक्षारम्** જવખાર સાથે यवक्षारके साथ, **यवचूर्णम्** જવના લોટને जौके आटेको, **उष्णम्** ઊનો કરવામાં આવતાં તે गरम करके लगाने पर वह, **जठरे** જઠરમાંના उदरकी, **अर्तिम्** વ્યાધિને पीड़ाको, **निहन्यात्** મટાડે છે शान्त करता है, **कुष्ठम्** કઠ कूठ, **सवचाम्** વજ સહિત वच सहित, **शताह्वाम्** સુવા सौंफ, **यवानाम्** તથા જવનો और जौका, **चूर्णम्** લોટ એઓનો आटा इनको, **सतैलाम्लम्** તેલ તથા અમ્લ દ્રવ્ય સાથે तैल और कांजीमें मिलाकर, **वाते** વાતરોગમાં લેપ કરવો જોઇએ वातरोगमें इनका लेप करना चाहिए, **उशन्ति** એમ કહે છે ऐसा कहते हैं ॥ २० ॥

20. Barley powder and alkali mixed with butter-milk, administered warm, relieves pain in the stomach; costus, dill, sweet flag, barley flour, mixed with oil and acid, are prescribed in vata disorders.

वातरक्तहरास्त्रयः प्रदेहाः—

**उभे शताह्वे मधुकं मधूकं**
**बलां प्रियालं च कशेरुकं च ।**
**घृतं विदारीं च सितोपलां च**
**कुर्यात् प्रदेहं पवने सरक्ते ॥२१॥**

**उभे शताह्वे** સુવા અને વરિયાળી सौंफ और सोया, **मधुकम्** જેઠીમધ मुलैहठी, **मधूकम्** મહુડાં महुवा, **बलाम्** બળબીજ खरैटी, **प्रियालम् च** ચારોળી पियाल, **कशेरुकम् च** કસેલાં कसेरु, **घृतम्** ઘી घी, **विदारीम् च** વિદારીકંદ विदारीकन्द, **सितोपलाम् च** અને ખડી સાકરનો और मिश्रीका, **सरक्ते पवने** વાતરક્તમાં वातरक्तमें, **प्रदेहम्** લેપ लेप, **कुर्यात्** કરવો જોઇએ करना चाहिए ॥२१॥

21. Dill and fennel, liquorice, mahwa heart-leaved sida, buchanan's mango, tiger nut, ghee, white yam and sugar candy—these should be used as an application in rheumatic conditions.

**रास्ना गुडूची मधुकं बले द्वे**
**सजीवकं सर्षभकं पयश्च ।**
**घृतं च सिद्धं मधुशेषयुक्तं**
**रक्तानिलार्तिं प्रणुदेत् प्रदेहः ॥ २२ ॥**

**रास्ना** રાસ્ના रास्ना, **गुडूची** ગળો गिलोय, **मधुकम्** જેઠીમધ मुलैहठी, **द्वे बले** બળબીજ અને ખપાટ बला-अतिबला, **सजीवकम्** જીવક સહિત जीवकके साथ, **सर्षभकम्** ઋષભક સહિત ऋषभकके साथ, **च** અને और, **सिद्धम्** સિદ્ધ કરેલ सिद्ध किए, **मधुशेषयुक्तम्** મીણથી યુક્ત मोमसे युक्त, **पयः** દૂધ दूध, **घृतम् च** અને ઘી और घी, **प्रदेहः** એઓનો લેપ इनका लेप, **रक्तानिलार्तिम्** વાતરક્તના વ્યાધિને वातरक्तजन्य पीड़ाको, **प्रणुदेत्** દૂર કરે છે नाश करता है ॥२२॥

22. The ointment prepared from Indian groundsel, guduchi, liquorice,

२०. सक्षारमर्तिम्—सक्षारमार्त्तिम् (ङ.)

२२. सजीवकम्—सजीरकम् (प.)

heart-leaved sida, country mallow, Jivaka, Rishabhaka and milk, prepared in ghee mixed with bees'-wax, relieves the pain in rheumatic conditions, when used as an external application.

शिरोरुजाहरौ द्वौ प्रदेहौ—

**वाते सरक्ते सघृतं प्रदेहो**
**गोधूमचूर्णं छगलीपयश्च ।**
**नतोत्पलं चन्दनकुष्ठयुक्तं**
**शिरोरुजायां सघृतं प्रदेहः ॥ २३ ॥**

सरक्ते वाते વાતરક્તમાં वातरक्तमें, सघृतम् ઘી સહિત घीमें मिलाकर, गोधूमचूर्णम् ઘઉંનો લોટ गेहूंके चूर्ण, छगलीपयः च અને બકરીના દૂધનો और बकरीके दूधका, प्रदेहः લેપ કરવો જોઈએ लेप करना चाहिए, शिरोरुजायाम् શિરોવ્યાધિમાં शिरदर्दमें, चन्दनकुष्ठयुक्तम् શ્વેત ચંદન અને કઠથી યુક્ત चन्दन और कुष्ठसे युक्त, नत-उत्पलम् તગર અને ઉત્પલનો तगर और नीलोफरका, सघृतम् ઘી સહિત घीके साथ, प्रदेहः લેપ કરનો જોઈએ लेप करना चाहिए ॥ २३ ॥

23. The application of wheat-flour mixed with goat's milk and ghee is also used in rheumatic conditions. The unguent of Indian valerian, blue water-lily, sandalwood and costus, prepared in ghee, cures headache.

**प्रपौण्डरीकं सुरदारु कुष्ठं**
**यष्ट्याह्वमेला कमलोत्पले च ।**
**शिरोरुजायां सघृतः प्रदेहो**
**लोहैरकापद्मकचोरकैश्च ॥ २४ ॥**

शिरोरुजायाम् શિરોરોગમાં शिरदर्दमें, प्रपौण्डरीकम् પ્રપૌંડરીક-પુંડરીકકાષ્ઠ प्रपौंडरीक (पुण्रीककाष्ठ), सुरदारु દેવદાર देवदारु, कुष्ठम् કઠ कूठ, यष्ट्याह्वम् જેઠીમધ मुलैहठी, एला એલચી छोटी इलायची, कमल-उत्पले च કમલ અને નીલ કમલ એઓથી कमल और नीलोफर इनसे, लोह તથા અગુરુ एवं अगरु, एरका ધાબાજરિયું होगला, पद्मक પદ્મકાષ્ઠ पद्माख, चोरकैः च અને ચોરકથી और चोरकसे, सघृतः ઘી સહિત घी मिलाकर, प्रदेहः લેપ કરવો જોઈએ लेप करना चाहिए ॥२४॥

24. The unguent of root-stocks of white lotus, deodar. costus, liquorice cardamom, lotus, blue water-lily, eagle-wood elephant grass, Himalayan cherry and angelica, preared in ghee, is a good application in headache.

पार्श्वरुजाहर एकः प्रदेहः—

**रास्ना हरिद्रे नलदं शताह्वे**
**द्वे देवदारूणि सितोपला च ।**
**जीवन्तिमूलं सघृतं सतैल-**
**मालेपनं पार्श्वरुजासु कोष्णम् ॥ २५ ॥**

रास्ना રાસ્ના रास्ना, हरिद्रे બેઉ હળદર हल्दी और दारुहल्दी, नलदम् જટામાંસી जटामांसी, द्वे शताह्वे સુવા અને વરિયાળી सौंफ और सोया, देवदारूणि દેવદાર देवदारु, सितोपला च અને ખડી સાકર मिश्री, सघृतम् તથા ઘી સહિત और घी सहित, सतैलम् અને તેલ સહિત તથા तैल सहित, जीवन्तिमूलम् ડોડીનું મૂળ એ जीवन्तीमूल यह, पार्श्वरुजासु પડખાંના વ્યાધિમાં पार्श्वशूलमें, कोष्णम् નવશેકું गरम करके सुहाता हुआ, आलेपनम् આલેપન છે आलेपन है ॥ २५ ॥

25. The unguent of Indian ground-sel, turmeric and Indian berberry, nardus, dill and fennel, deodar, sugar-candy and cork swallow-wort root, prepared in ghee and oil, and applied lukewarm, relieves pleurodynia.

निर्वापणौ द्वौ प्रदेहौ—

**शैवालपद्मोत्पलवेत्रतुङ्ग-**
**प्रपौण्डरीकाण्यमृणाललोध्रम् ।**
**प्रियङ्गुकालेयकचन्दनानि**
**निर्वापणः स्यात् सघृतः प्रदेहः ॥ २६ ॥**

२३. कुष्ठयुक्तम्—कुष्ठमुष्णम् (प.)
,, सघृतम्—सघृत: (क.ग.घ.त.द.)

२५. देवदारूणि—वै सुराह्वे (ग.)
,, पार्श्वरुजासु कोष्णम्—पार्श्वरुजीषदुष्णम् (ख.)
२६. वेत्रतुङ्ग—वेत्रतुङ्गम् (ख.)

**शैवाल** શેવાલ सरवाल, **पद्म** પદ્મ कमल, **उत्पल** ઉત્પલ नीलोफर, **वेत्र** વાળુંજ बेंत, **तुङ्ग** લાલ નાગકેસર नागकेसर, **प्रपौण्डरीकाणि** પ્રપૌંડરીક प्रपौण्डरीक, **अमृणाल** વીરણનો વાળો खस, **लोध्रम्** લોધર लोध्र, **प्रियङ्गु** ઘઉંલા प्रियङ्गु **कालेयक** પીળું ચંદન पीलाचन्दन, **चन्दनानि** અને સફેદ ચંદન और सफेद चन्दन, **सघृतः** એઓનો ઘી સાથે इनका घीमें मिलाकर बनाया, **प्रदेहः** લેપ प्रदेह, **निर्वापणः** દાહશામક दाहशामक, **स्यात्** છે होता है ॥२६॥

26. Moss, lotus, blue water-lily, country willow, fragrant poon, root-stocks of white lotus, cuscus grass, lodh, perfumed cherry, yellow sandal-wood, sandalwood: the unguent of these prepared in ghee is refrigerant.

**सिताලतावेतसपद्मकानि**
**यष्ट्याह्वमैन्द्री नलिनानि दूर्वा ।**
**यवासमूलं कुशकाशयोश्च**
**निर्वापणः स्याज्जलमेरका च ॥ २७ ॥**

**सिता** ખડી સાકર मिश्री, **लता** મજીઠ मंजीठ, **वेतस** વાળુંજ अम्लवेतस, **पद्मकानि** પદ્મકાષ્ઠ पद्‌माख **यष्ट्याह्वम्** જેઠીમધ मुलैहठी, **ऐन्द्री** ઐન્દ્રી ऐन्द्री, **नलिनानि** કમળ नलिन, **दूर्वा** ધ્રો दूब, **यवासमूलम्** જવાસાનું મૂળ धमासेकी जड़, **कुशकाशयोः च** કુશ તથા કાસડાનું મૂળ कुश और काशकी जड़, **जलम्** સુગંધી વાળો सुगन्धबाला, **एरका च** અને ધાબાજરીઉં और होगला, **निर्वापणम्** દાહશામક दाहशामक, **स्यात्** છે हैं ॥ २७ ॥

27. The salve prepared of sugar, madder, country willow, Himalayan cherry, liquorice, Aindri, Nalin lotus, scutch grass, camel thorn root, small sacrificial grass, thatch grass, fragrant sticky mallow and elephant grass, is refrigerant.

एकः विषहरः प्रदेहः—

**शैलेयमेलागुरुणी सकुष्ठे**
**चण्डा नतं त्वक् सुरदारु रास्ना ।**
**शीतं निहन्यादचिरात् प्रदेहो**
**विषं शिरीषस्तु ससिन्धुवारः ॥ २८ ॥**

**शैलेय** દગડફૂલ छडीला, **सकुष्ठे** કઠ સહિત कुठसहित, **एलागुरुणी** એલચી અને અગુરુ इलायची और अगरु, **चण्डा** ચોરક चोरक, **नतम्** તગર तगर, **त्वक्** તજ दालचीनी, **सुरदारु** દેવદાર देवदारु, **रास्ना** અને રાસ્નાનો और रास्नाका, **प्रदेहः** લેપ लेप, **शीतम्** શીતને शीतको, **अचिरात्** તરતમાં शीघ्र, **निहन्यात्** મટાડે છે नष्ट करता है, **ससिन्धुवारः** તથા નગોડ સહિત एवं सिन्धुवारके साथ, **शिरीषः** શિરીષનો લેપ शिरीषका लेप, **तु** તો तो, **विषम्** વિષનો विषको, **निहन्यात्** નાશ કરે છે नष्ट करता है, ) ॥ २८ ॥

28. The application of lichen, card-amom, eagle-wood, costus, angelica, Indian valerian, cinnamon, deodar, and Indian groundsel will soon relieve the condition of algidity. The application of siris with chaste tree will counter-act the effects of toxicosis.

त्वग्दोषसंस्वेदहरः प्रघर्षः शरीरदौर्गन्ध्यहरः प्रदेहश्च—

**शिरीषलामज्जकहेमलोध्रै-**
**स्त्वग्दोषसंस्वेदहरः प्रघर्षः ।**
**पत्राम्बुलोध्राभयचन्दनानि**
**शरीरदौर्गन्ध्यहरः प्रदेहः ॥ २९ ॥**

**शिरीष** શિરીષ शिरस, **लामज्जक** પીળો વાળો लामजक, **हेम** લાલ નાગકેસર नागकेसर, **लोध्रैः** અને લોધરનું और लोधका, **प्रघर्षः** ઉદ્વર્તન उद्वर्तन, **त्वग्दोष** ચામડીના દોષો त्वक्‌दोष, **संस्वेद** તથા પરસેવાને और पसीनेको, **हरः** મટાડનાર છે नष्ट करता है, **पत्र** અને તેજપત્ર तेजपत्र, **अम्बु** સુગંધી વાળો सुगन्धवाला, **लोध्र** લોધર लोध, **अभय** વીરણનો વાળો खस, **चन्दनानि**

२८. शैलेयमेलागुरुणीसकुष्ठे—शैलेयकैलागुरुधान्यकुष्ठम् (ग.प.)
,, ,, चाथकुष्ठम् (घ.)
,, ,, ,, कुष्ठे (ज्ञ.)
२९. लोध्र—लोह (ग.प.)

અને સફેદ ચન્દનનો और चन्दनका, प्रदेहः લેપ प्रदेह, शरीरदौर्गन्ध्य- શરીરની દુર્ગન્ધ शरीरकी दुर्गन्धताको, हरः હરનાર છે नष्ट करता है ॥ २९ ॥

29. Rubbing the body well with the powder of siris, geranium grass, fragrant poon and lodh, cures morbidity of skin and hyperhydrosis; the salve of cinnamon leaves, fragrant sticky mallow, lodh, cuscus grass, and sandalwood removes body fetor.

अध्यायार्थसंग्रहः—

तत्र श्लोकः—

> इहात्रिजः सिद्धतमानुवाच
> द्वात्रिंशतं सिद्धमहर्षिपूज्यः ।
> चूर्णप्रदेहान् विविधामयघ्ना-
> नारग्वधीये जगतो हितार्थम् ॥ ३० ॥

तत्र श्लोकः તે વિષયમાં ઉપસંહારનો શ્લોક છે કે उस विषयमें उपसंहारका श्लोक है कि, सिद्ध- સિદ્ધ सिद्ध, महर्षि- તથા મહર્ષિઓને महर्षियोंसे, पूज्यः પૂજ્ય पूजनीय, अत्रिजः ભગવાન આત્રેયે अत्रिपुत्र ऋषिने, जगतः જગતના जगतके, हितार्थम् હિત માટે हितके लिए, इह આ इस, आरग्वधीये આરગ્વધીય અધ્યાયમાં आरग्वधीय अध्यायमें, विविध- વિવિધ नाना, आमयघ्नान् રોગનાશક रोगोंको नाश करनेवाले, द्वात्रिंशतम् બત્રીસ बत्तीस, सिद्धतमान् અત્યંત સિદ્ધ अत्यन्त सिद्ध, चूर्णप्रदेहान् ચૂર્ણ અને લેપો चूर्ण और प्रदेह, उवाच કહ્યાં છે कहे हैं ॥३०॥

Here is a recapitulatory verse:-

30. Here in this chapter entitled "The Purging Cassia", the son of Atri, revered of the great sages of attainment, has described for the good of the world, the thirty-two most efficacious powders and unguents that are dispellers of manifold diseases.

३०. सिद्धतमानुवाच—सिद्धतमा उवाच (ध.)

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने आरग्वधीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, श्लोकस्थाने સૂત્રસ્થાન વિષે सूत्रस्थानमें, आरग्वधीयः 'આરગ્વધીય' 'आरग्वधीय,' नाम નામનો नामका, तृतीयः ત્રીજો तीसरा, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ३ ॥

3. Thus in the Section on General Principles in the treatise compiled by Agnivesa and revised by Caraka, the third chapter entitled 'Purging Cassia,' is completed.

# चतुर्थोऽध्यायः ।

## ચોથો અધ્યાય अध्याय चौथा Chapter IV

षड्विरेचनशतीयाध्यायोपक्रमः—

अथातः षड्विरेचनशताश्रितीयमध्यायं व्याख्यास्यामः ॥ १ ॥

इति ह स्माह भगवानात्रेयः ॥ २ ॥

अथ अतः હવે અહીંથી अब आगे, षड्विरेचनशताश्रितीयम् 'ષડ્વિરેચનશતાશ્રિતીય' નામના 'षड्विरेचनशताश्रितीय' नामके, अध्यायम् અધ્યાયનું अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "Six hundred purgative preparations."

2. Thus declared the worshipful Atreya.

१. षड्विरेचनशताश्रितीयम्—षड्विरेचनशतीयम् (ध.)

**क्षुद्वेगनिग्रहात्** ક્ષુધાના વેગને રોકવાથી भूखके वेगको रोकनेसे, **कार्श्य-** કૃશતા कृशता, **दौर्बल्य-** દુર્બળતા दुर्बलता, **वैवर्ण्यम्** વિવર્ણતા विवर्णता, **अङ्गमर्दः** અંગમર્દ अङ्गोमें पीडा, **अरुचिः** અરુચિ अरुचि, **श्रमः** અને શ્રમ થાય છે और श्रम होते हैं, **तत्र** તેમાં इसमें, **स्निग्ध-** સ્નિગ્ધ स्निग्ध, **उष्णम्** ઉષ્ણ उष्ण, **लघु** અને હલકું और हलका, **भोजनम्** ભોજન કરાવવું भोजन कराना चाहिए ॥ २० ॥

20. Emaciation, weakness, discoloration, body-ache, anorexia and giddiness result from the suppression of the urge of hunger. Unctuous, hot and light diet is recommended in this condition.

पिपासानिग्रहे दोषास्तच्चिकित्सा च—

**कण्ठास्यशोषो बाधिर्यं श्रमः सादो हृदि व्यथा ।**
**पिपासानिग्रहात्तत्र शीतं तर्पणमिष्यते ॥ २१ ॥**

**पिपासा-** તરસના વેગને प्यासके वेगको, **निग्रहात्** રોકવાથી रोकनेसे, **कण्ठ-** કંઠ कण्ठ **आस्य-** તથા મોઢાનો तथा मुखका, **शोषः** શોષ सूखना, **बाधिर्यम्** બહેરાપણું बधिरता, **श्रमः** શ્રમ थकावट, **सादः** અંગોની શિથિલતા अंगोकी शिथिलता, **हृदि व्यथा** અને હૃદયમાં પીડા થાય છે और हृदयदेशमें पीडा होती है, **तत्र** તેમાં इसमें, **शीतम्** શીત शीत, **तर्पणम्** તૃપ્તિકારક અન્નપાન तृप्तिकारक अन्नपान, **इष्यते** હિતકર છે हितकर है ॥ २१ ॥

21. Parching of the throat and the mouth, deafness, fatigue, depression and cardiac pain result from the suppression of the urge of thirst. In this condition cooling and demulcent drinks are recommended.

२१. बाधिर्यं श्रमः सादो–बाधिर्यं भ्रमः श्वासो (प.)
,, श्रमः–भ्रमः (ग.)
,, सादो–श्वासो (घ. ध.)

बाष्पनिग्रहे दोषास्तच्चिकित्सा च—

**प्रतिश्यायोऽक्षिरोगश्च हृद्रोगश्चारुचिर्भ्रमः ।**
**बाष्पनिग्रहणात्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥२२॥**

**बाष्प-** આંસુના વેગને आंसुओंके वेगको, **निग्रहणात्** રોકવાથી रोकनेसे, **प्रतिश्यायः** સળેખમ प्रतिश्याय, **अक्षिरोगः च** અને નેત્રરોગ और नेत्ररोग, **हृद्रोगः** હૃદ્રોગ हृदयके रोग, **अरुचिः** અરુચિ अरुचि, **भ्रमः च** અને ભ્રમ થાય છે और भ्रम होता है, **तत्र** તેમાં इसमें, **स्वप्नः** નિદ્રા निद्रा, **मद्यम्** મદ્ય मद्य, **प्रियाः** અને પ્રિય और प्रिय, **कथाः** કથા હિતકર છે कथा हितकर है ॥ २२ ॥

22. Coryza, eye diseases, cardiac disorders, anorexia and giddiness result from the suppression of the urge for lachrymation. Sleep, wine and pleasing conversation are recommended in this condition.

निद्राविधारणे दोषास्तच्चिकित्सा च—

**जृम्भाऽङ्गमर्दस्तन्द्रा च शिरोरोगोऽक्षिगौरवम् ।**
**निद्राविधारणात्तत्र स्वप्नः संवाहनानि च ॥ २३ ॥**

**निद्रा-** નિદ્રાના વેગને निद्राके वेगको, **विधारणात्** રોકવાથી रोकनेसे, **जृम्भा** બગાસાં जम्भाई, **अङ्गमर्दः** અંગમાં પીડા अंगोमें पीडा, **तन्द्रा** તંદ્રા तन्द्रा, **शिरोरोगः** શિરોરોગ शिरोरोग, **अक्षिगौरवम् च** અને આંખોનું ભારેપણું થાય છે और आंखोका भारीपन होता है, **तत्र** તેમાં इनके निवारणके लिए, **स्वप्नः** નિદ્રા सोना, **संवाहनानि च** અને ચંપી હિતકર છે और हाथ पांव आदिका दबाना हितकर है ॥ २३ ॥

23. Yawning, body-ache, torpor, disease of the head and heaviness of the eyes result from the suppression of the urge for sleep. In this condition sleep and massage are recommended.

२२. बाष्पनिग्रहणात्तत्र–बाष्पस्य निग्रहात्तत्र (च. ध.)
२३. शिरोरोगोऽक्षिगौरवम्–शिरोगात्राक्षिगौरवम् (ध. प.)
,, रोगोऽक्षि–रोगाक्षि (त.)

श्रमनिःश्वासधारणे दोषास्तच्चिकित्सा च—

**गुल्महृद्रोगसंमोहाः श्रमनिःश्वासधारणात् ।**
**जायन्ते तत्र विश्रामो वातघ्न्यश्च क्रिया हिताः ॥२४॥**

श्रम- श्रमजन्य थकावटसे उत्पन्न, निःश्वास- निःश्वासना वेगने श्वासके वेगको, धारणात् रोकवाथी रोकनेसे, गुल्म- गुल्म गुल्म, हृद्रोग हृद्रोग हृद्रोग, संमोहा अने मूर्च्छा और मूर्च्छा, जायन्ते थाय छे उत्पन्न होजाते हैं, तत्र तेमां उनके निवारणके लिए, विश्रामः पूर्ण विश्राम पूर्ण विश्राम, वातघ्न्यः च अने वातनाशक और वातनाशक, क्रियाः चिकित्साओ चिकित्साएँ, हिताः हितकर छे हितकर हैं ॥२४॥

24. Gulma, cardiac disorder and stupefaction result from the suppression of the urge for deep breathing after exertion. In this condition rest and measures alleviative of vata are recommended.

पूर्वोक्तवेगधारणनिषेधः —

**वेगनिग्रहजा रोगा य एते परिकीर्तिताः ।**
**इच्छंस्तेषामनुत्पत्तिं वेगानेतान्न धारयेत् ॥२५॥**

वेग- वेग वेगोंको, निग्रहजाः रोकवाथी थता रोकनेसे उत्पन्न होनेवाले, ये एते जे आ जो ये, रोगाः रोगो रोग, परिकीर्तिताः गणाव्या छे गिने गये हैं, तेषाम् तेनी उनकी, अनुत्पत्तिम् उत्पत्ति न थाय उत्पत्ति न हो, इच्छन् एम इच्छनारे ऐसी इच्छा रखने- वालोंके लिए, एतान् आ इन, वेगान् वेगोने वेगोंको, न नहि नहीं, धारयेत् रोकवा रोकना चाहिए ॥२५॥

25. So, one who wishes to avoid the above-mentioned diseases resulting from the suppression of natural urges should not suppress these urges.

येषां वेगाः सर्वथा धारणीयाः —

**इमांस्तु धारयेद्वेगान् हितार्थी प्रेत्य चेह च ।**
**साहसानामशस्तानां मनोवाक्कायकर्मणाम् ॥२६॥**

इह च आ जन्ममां इस जन्ममें, प्रेत्य च अने जन्मान्तरमां और जन्मान्तरमें, हितार्थी कल्याण चाहनारे अपना कल्याण चाहनेवाले मनुष्यको, अशस्तानाम् अनिष्ट कुळाथी निषिद्ध, साहसानाम् साहसोना साहस, मनः- अने मन एवं मन, वाक्- वचन वचन, काय- अने कायानां और शरीरके, कर्मणाम् कर्मोना कर्मोंके, इमान् नीचे कहेला निम्न कहे हुए, वेगान् वेगोने वेगोंको, तु तो तो, धारयेत् रोकवा जोईए रोकना चाहिए ॥२६॥

26. Those who are desirous of their welfare both in this and the next world should on the other hand, suppress the rash and evil impulses of the mind, speech and body.

**लोभशोकभयक्रोधमानवेगान् विधारयेत् ।**
**नैर्लज्ज्येर्ष्यातिरागाणामभिध्यायाश्च बुद्धिमान् ॥२७॥**

बुद्धिमान् बुद्धिमान पुरुषे बुद्धिमान पुरुषको, लोभ- लोभ लोभ, शोक- शोक शोक, भय- भय भय, क्रोध- क्रोध क्रोध, मान तथा अहंकारना तथा अहंकारके, वेगान् वेगोने वेगोंको, नैर्लज्ज्य- अने निर्लज्जता निर्लज्जता, ईर्ष्या- ईर्ष्या ईर्ष्या, अतिरागाणाम् अतिप्रीति अतिप्रीति, अभिध्यायाः च तथा परद्रव्यनी स्पृहाना वेगोने और पर द्रव्यकी स्पृहाके वेगोंको, विधारयेत् रोकवा जोईए रोकना चाहिए ॥२७॥

27. The wise man should control the impulses of greed, grief, fear, anger, vanity, impudence, jealousy, excessive attachment and malice.

**परुषस्यातिमात्रस्य सूचकस्यानृतस्य च ।**
**वाक्यस्याकालयुक्तस्य धारयेद्वेगमुत्थितम् ॥२८॥**

अतिमात्रस्य अत्यंत अत्यन्त, परुषस्य कठोर कठोर, सूचकस्य चाडीचुगलीवाळा चुगली खानेवाले, अनृतस्य जूठा झूठे, अकालयुक्तस्य अने समय वगर कहेवा धारेला और समयको न देखकर कहे जानेवाले, वाक्यस्य वचनना वचनके, उत्थितम् उत्पन्न थयेला उत्पन्न हुए, वेगम् वेगने वेगको, धारयेत् रोकवो जोईए रोकना चाहिए ॥२८॥

28. One should control the impulse for speech that is harsh, extravagant, insinuating, untrue and untimely.

२६. हितार्थी—हितैषी (ग. घ. च. छ. द. ध.)

२७. विधारयेत्—निवारयेत् (ङ.)

**देहप्रवृत्तिर्या काचिद्विद्यते परपीडया ।**
**स्त्रीभोगस्तेयहिंसाद्या तस्या वेगान्विधारयेत् ॥२९॥**

**स्त्रीभोग-** પરસ્ત્રીસંભોગ परस्त्रीसंभोग, **स्तेय-** ચોરી चोरी, **हिंसाद्या** હિંસા વગેરે हिंसा आदिकी, **या** જે जो, **काचित्** કોઈ कोई, **देहप्रवृत्तिः** શરીરની પ્રવૃત્તિ शरीरकी प्रवृत्ति, **परपीडया** બીજાની પીડા માટે दूसरेकी पीडाके लिए, **विद्यते** હોય हो तो, **तस्याः** તેના उसके, **वेगान्** વેગને वेगोंको, **विधारयेत्** રોકવા रोकना चाहिए ॥ २९ ॥

29. One should control the impulses for all such activities of the body as are injurious to others, *i. e.* adultery, theft, inflicting pain etc.

साहसादीनां वेगधारणे गुणाः—

**पुण्यशब्दो विपापत्वान्मनोवाक्कायकर्मणाम् ।**
**धर्मार्थकामान् पुरुषः सुखी भुङ्क्ते चिनोति च ॥३०॥**

**मनो-** મન मन, **वाक्-** વચન वचन, **काय-** અને કાયાના और शरीरके, **कर्मणाम्** વ્યાપારોના कर्मोंका, **विपापत्वात्** નિષ્પાપપણાથી पापरहित होनेसे, **पुरुषः** પુરુષ पुरुष, **पुण्यशब्दः** પવિત્ર કીર્તિવાળો पवित्र कीर्तिवाला होता है, **सुखी** તે સુખી થઈ सुखी होकर, **धर्म-** ધર્મ धर्म, **अर्थ-** અર્થ अर्थ, **कामान्** તથા કામનો एवं कामका, **भुङ्क्ते** ઉપભોગ કરે છે उपभोग करता है, **चिनोति च** અને એઓનો સંચય કરે છે और इनका सञ्चय करता है ॥ ३० ॥

30. Being free from the sins relating to the activities of the mind, speech and body, the happy man of righteous nature enjoys and acquires spiritual merit, wealth and sense-pleasures.

व्यायामस्य लक्षणम्

**शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्धिनी ।**
**देहव्यायामसंख्याता मात्रया तां समाचरेत् ॥३१॥**

**देहव्यायाम–** શારીરિક વ્યાયામ शारीरिक व्यायाम, **संख्याता** નામની नामकी, **या** જે जो, **इष्टा** અભીષ્ટ अभीष्ट, **शरीर-** શરીરની शरीरकी, **चेष्टा** ચેષ્ટા चेष्टा, **स्थैर्यार्था** શરીરની સ્થિરતા માટે शरीरकी स्थिरताके लिए हो, **बलवर्धिनी** તથા બલ વધારવા માટે હોય तथा बल बढानेके लिए हो, **ताम्** તે उसको, **मात्रया** પ્રમાણસર मात्रापूर्वक, **समाचरेत्** કરવી જોઈએ सेवन करना चाहिए ॥ ३१ ॥

31. That activity of the body, which is meant to increase its firmness and strength is regarded as physical exercise; it should be practised in the right measure.

व्यायामस्य गुणाः —

**लाघवं कर्मसामर्थ्यं स्थैर्यं दुःखसहिष्णुता ।**
**दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ ३२ ॥**

**लाघवम्** શરીરમાં લઘુતા शरीरमें लघुता, **कर्मसामर्थ्यम्** કાર્ય કરવાની શક્તિ कार्य करनेकी शक्ति, **स्थैर्यम्** સ્થિરતા स्थिरता, **दुःखसहिष्णुता** દુઃખ સહન કરવાની શક્તિ दुःखोंको सहन करनेकी शक्ति, **दोषक्षयः** દોષોનો ક્ષય दोषोंका क्षय, **अग्निवृद्धिः च** અને અગ્નિની વૃદ્ધિ और अग्निकी वृद्धि, **व्यायामात्** વ્યાયામથી व्यायामसे, **उपजायते** થાય છે उत्पन्न होती है ॥ ३२ ॥

२९. विद्यते—वर्तते (ग. ब. च. झ. थ. प.)
३० एतच्छ्लोकानन्तरम्—
स्याच्छिलालकुटाकर्षाद् धनुराकर्षणादपि ।
व्यायामाद्बहुधाङ्गानां व्यायाम इति शब्दितः ॥
गात्रेष्वायम्यमानेषु तेषु रक्तं विधावति ।
तद्गात्रेषु विमक्तं हि मांसीभवति मर्दनात् ॥
स्रोतः शुद्धो वायुर्यः स चापि प्रतिसार्यते ।
मारुते प्रगुणीभूते सुखं गात्रेषु जायते ॥
कान्तवर्णत्वमङ्गानां सुविभक्तत्वमेव च ।
प्रबुद्धश्वासनिःश्वासचेष्टत्वमशने रुचिः ॥
इत्यधिकः पाठः (ग. थ. प.) पुस्तकेषु

३१. स्थैर्यार्था—स्थैर्यात्मा (प.)
३२. दुःख°—क्लेश° (ब. च. झ. ड. ढ.)
,, एतच्छ्लोकानन्तरम्—
क्रमवृद्ध्या सदारोग्यशरीरबलपुष्टिदः ।
आरोग्यबलपुष्टिघ्नः स एवाक्रमसेवितः ॥
इत्यधिकः पाठः (थ. प.) पुस्तकयोः

32. Lightness, capacity for work, firmness, tolerance to hardship, subsidence of humoral discordance and stimulation of the gastric fire accrue from exercise.

अतिव्यायामे दोषाः—

**श्रमः क्लमः क्षयस्तृष्णा रक्तपित्तं प्रतामकः ।**
**अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ ३३ ॥**

अति અતિશય अतिशय, व्यायामतः વ્યાયામથી व्यायामसे, श्रमः શ્રમ थकावट, क्लमः કંટાળો क्लम, क्षयः ધાતુક્ષય धातुओंका क्षय, तृष्णा તરસ तृष्णा, रक्तपित्तम् રક્તપિત્ત रक्तपित्त, प्रतामकः પ્રતમક શ્વાસ प्रतमक श्वास, कासः ખાંસી खांसी, ज्वरः તાવ ज्वर, छर्दिः च અને ઉલટી और वमन, जायते થાય છે होती है ॥ ३३ ॥

33. Fatigue, exhaustion, wasting, thirst, hemothermia. dyspnea (asthma), cough, fever and vomiting result from over-exercise.

**( स्वेदागमः श्वासवृद्धिर्गात्राणां लाघवं तथा ।**
**हृदयाद्युपरोधश्च इति व्यायामलक्षणम् ॥ १ ॥ )**

स्वेद- પરસેવાનું पसीनेका, आगमः આવવું आना, श्वासवृद्धिः શ્વાસનું વધવું श्वासका बढना, तथा गात्राणाम् ગાત્રોની शरीरका. लाघवम् લઘુતા हलकापन, हृदयादि- અને હૃદય વગેરેનો और हृदय आदिका, उपरोधः च ઉપરોધ. उपरोध. इति આ યે, व्यायाम- વ્યાયામનું व्यायामके, लक्षणम् લક્ષણ છે लक्षण हैं ॥ १ ॥

33-(1). The appearance of perspiration, increased respiration, lightness of limbs and a feeling of oppression in the cardiac region indicate the full measure of physical exercise.

अन्यानपि यानतिमात्रं न सेवेत—

**व्यायामहास्यभाष्याध्वग्राम्यधर्मप्रजागरान् ।**
**नोचितानपि सेवेत बुद्धिमानतिमात्रया ॥ ३४ ॥**

व्यायाम- વ્યાયામ व्यायाम, हास्य- હાસ્ય हंसना, भाष्य- બહુ બોલવું अधिक बोलना, अध्व- પગે મુસાફરી કરવી पैदल मुसाफरी, ग्राम्यधर्म- મૈથુન मैथुन, प्रजागरान् तथा ઉજાગરાનો तथा रात्रिजागरणका, उचितान् અભ્યાસ હોય अभ्यास होने पर, अपि તો પણ भी, बुद्धिमान् બુદ્ધિમાન માણસે તેઓનું बुद्धिमान पुरुष उनका, अति- અતિશય अधिक, मात्रया પ્રમાણમાં मात्रामें, न सेवत સેવન ન કરવું જોઈએ सेवन न करे ॥ ३४ ॥

34. The wise man should not indulge in an excess of physical exercise, laughter, speaking, walking, sex-act and waking at night, even if he is accustomed to such practices.

तेषामतिमात्रसेवने दोषाः—

**एतानेवंविधांश्चान्यान् योऽतिमात्रं निषेवते ।**
**गजं सिंह इवाकर्षन् सहसा स विनश्यति ॥ ३५ ॥**

---

३३. एतच्छ्लोकानन्तरम्—

अरोगो जीर्णभक्तश्च नरो व्यायाममाचरेत् ।
नातिपीडाकरो देहे बलवान् श्लेष्मके गदे ॥
व्यायामोष्णशरीरत्वात् स्वेदाच्च प्रविलायिते ।
श्लेष्माणे श्लेष्मका रोगा न भवन्ति शरीरिणः ॥
अजीर्णिनस्त्वामरसो व्यायामेनाकुलीकृतः ।
देहे विसर्पञ्जनयेत् रक्तपित्तामयान् गदान् ॥
इत्यधिकः पाठः (ग. थ. प.) पुस्तकेषु

एतच्छ्लोकत्रयादनन्तरं च—

अतिव्यायामभाराध्वकर्मभिश्चातिकर्षिताः ।
क्रोधशोकभयायासैः क्रान्ता ये चापि मानवाः ॥
बालवृद्धप्रवाताश्च येचोच्चैर्बहुभाषकाः ।
ते वर्जयेयुर्व्यायामं तृषिताः क्षुधिताश्च ये ॥
इत्यधिकः पाठः (प.) पुस्तके

येऽतिव्यायामतो रोगा मानवानां भवन्ति हि ।
घृतमांसरसक्षीरवस्तिभिस्तानुपाचरेत् ॥
इत्यधिकः पाठः (ग. थ. प.) पुस्तकेषु

(१) लाघवं तथा—चाति लाघवम् (ग. प.)
,, हृदयाद्युपरोधश्च—हृदयानुपरोधश्च (ग.)

**एतान्** આ इन्हें, **एवंविधान्** અને એવી જાતનાં और इस प्रकारके, **अन्यान् च** બીજાં કાર્યોને अन्य कार्योंको, **यः** જે जो, **अतिमात्रम्** અતિમાત્રામાં अतिमात्रामें, **निषेवते** સેવે છે सेवन करता है, **सः** તે वह, **गजम्** હાથીને हाथीको, **आकर्षन्** ખેંચતા खींचते हुए, **सिंहः इव** સિંહની પેઠે सिंहकी तरह, **सहसा** તરત જ तुरन्त, **विनश्यति** નાશ પામે છે नष्ट हो जाता है ॥३५॥

35. The person, who indulges in such and similar other activities to an excess, comes by a violent end, like a lion trying to drag the body of an elephant.

व्यायामानर्हाः—

**(अतिव्यवायभाराध्वकर्मभिश्चातिकर्शिताः ।**
**क्रोधशोकभयायासैः क्रान्ता ये चापि मानवाः ॥१॥**
**बालवृद्धप्रवाताश्च ये चोच्चैर्बहुभाषकाः ।**
**ते वर्जयेयुर्व्यायामं क्षुधितास्तृषिताश्च ये ॥ २ ॥)**

**ये च अपि** જે जो, **मानवाः** માણસો मनुष्य, **अति-** અતિ अति, **व्यवाय-** મૈથુન मैथुन, **भार-** ભારહરણ भार उठाना, **अध्व-** અને પંથ કરવો और पैदल चलना, **कर्मभिः च** એ કર્મોથી इन कर्मोंसे, **अतिकर्शिताः** અત્યંત કૃશ થઈ ગયેલા હોય अधिक कृश हो गये हों, ( **ये च अपि** જે और जो, **मानवाः** માણસો मनुष्य,) **क्रोध-** ક્રોધ क्रोध, **शोक-** શોક शोक, **भय-** ભય અને भय, **आयासैः** તથા શ્રમથી तथा श्रमसे, **क्रान्ताः** પીડિત થયેલા હોય पीडित हो गये हों, **ये च** અને જે और जो, **बाल-** બાળક बाल, **वृद्ध-** વૃદ્ધ वृद्ध, **प्रवाताः च** પ્રબળ વાતયુક્ત હોય और जो प्रबल वातयुक्त हों, **(ये) च उच्चैः** અને જેઓ ઊંચે અવાજે और जो उच्च स्वरसे, **बहुभाषकाः** ઘણું ભાષણ કરનારા હોય बहुत भाषण करते हों, **ये च** અને જેઓ और जो, **क्षुधिताः** ભૂખ્યા भूखे, **तृषिताः च** અને તરસ્યા હોય और प्याससे पीडित हों, **ते** તેઓએ उनको, **व्यायामम्** વ્યાયામ व्यायाम, **वर्जयेयुः** છોડી દેવો छोड देना चाहिए ॥ १-२ ॥

35-(1-2). Those who are emaciated by excessive indulgence in sex-act, load-carrying and way-faring, those who are afflicted with anger, grief, fear and toil, those who are of tender age or advanced in age or of vata habitus and those who are given to loud and much talk as well as those afflicted with hunger and thirst should avoid physical exercise.

हिताहितसेवनवर्जनक्रमः—

**उचितादहिताद्धीमान् क्रमशो विरमेन्नरः ।**
**हितं क्रमेण सेवेत क्रमश्चात्रोपदिश्यते ॥ ३६ ॥**

**धीमान्** બુદ્ધિમાન बुद्धिमान, **नरः** માણસે पुरुषको चाहिए कि, **उचितात्** અભ્યસ્ત–ઘણીવાર સેવેલી अभ्यास कियेहुए, **अहितात्** અહિતકર વસ્તુનો अहितकरनेवाले आहार विहार आदिको, **क्रमशः** ક્રમથી क्रमशः, **विरमेत** પરિત્યાગ કરવો छोड दे, **हितम् च** અને હિતકારી વસ્તુનું और हितकरनेवाले आहार विहार आदिका, **क्रमेण** ક્રમશઃ क्रमपूर्वक, **सेवेत** સેવન કરવું सेवन करे, **अत्र** અહીં यहां, **क्रमः** ક્રમનો क्रमका, **उपदिश्यते** ઉપદેશ કરવામાં આવે છે उपदेश किया जाता है ॥ ३६ ॥

36. By degrees, the wise man should free himself from unwholesome habits; also, by degrees, he should develop wholesome habits. This process of gradual change will now be described.

**प्रक्षेपापचये ताभ्यां क्रमः पादांशिको भवेत् ।**
**एकान्तरं ततश्चोर्ध्वं द्व्यन्तरं त्र्यन्तरं तथा ॥ ३७ ॥**

**ताभ्याम्** હિત તથા અહિત પદાર્થોમાંથી हित और अहित पदार्थोंमेंसे, **प्रक्षेप-** હિતપદાર્થના સેવનમાં हित-पदार्थके सेवनमें, **अपचये** અને અહિત પદાર્થના ત્યાગમાં और अहित पदार्थके त्यागमें, **पादांशिकः** ચતુર્થાંશનો चतुर्थांशका, **क्रमः** ક્રમ क्रम, **भवेत्** વિહિત છે कहा गया है, **एकान्तरम्** તેની સાથે એક દિવસના અંતરનો ક્રમ उसके साथ एक दिनके अंतरका क्रम, **ततः ऊर्ध्वम् च** ત્યાર પછી उसके बाद, **द्व्यन्तरम्** બે દિવસના અંતરનો ક્રમ दो दिनके अंतरका क्रम, **तथा** અને ત્યાર પછી और उसके बाद, **त्र्यन्तरम्** ત્રણ દિવસના અંતરનો

क्रम तीन दिनके अंतरका क्रम, (भवेत् विहित छे होता है) ॥ ३७ ॥

37. The acquisition of the new good habits and the giving-up of the old bad ones should be achieved by regular quarter-steps of decrease (as regards the bad habits) and increase (as regards the good habits) at orderly intervals of one, two and three days.

क्रमेण हितसेवनाहितत्यागे गुणाः—

**क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ।**
**सन्तो यान्त्यपुनर्भावमप्रकम्प्या भवन्ति च ॥३८॥**

दोषाः दोषो दोष, क्रमेण क्रमथी क्रमपूर्वक, अपचिताः क्षीण क्षीण, सन्तः थतां होते हुए, अपुनर्भावम् यान्ति फरीथी उत्पन्न थता नथी फिर उत्पन्न नहीं होते, गुणाः च अने गुणो और गुण, क्रमेण क्रमसेवनथी क्रमसेवनसे, उपचिताः वृद्धि पामेला बढे, (सन्तः थतां हुए), अप्रकम्प्याः स्थिर स्थिर, भवन्ति थाय छे होते हैं ॥३८॥

38. By gradual withdrawal, addictions do not revert and wholesome habits gradually acquired become firmly implanted.

सदातुरा अनातुराश्च मानवाः—

**समपित्तानिलकफाः केचिद्गर्भादि मानवाः ।**
**दृश्यन्ते वातलाः केचित्पित्तलाः श्लेष्मलास्तथा ॥३९॥**

केचित् केटलाक कई, मानवाः मनुष्यो मनुष्य, गर्भादि गर्भावस्थामांथीज गर्भावस्थासे ही, सम-पित्त-अनिल-कफाः समान वात, पित्त अने कफ प्रकृतिवाळा समान वात, पित्त और कफ प्रकृतिवाले होते हैं, (केचित् केटलाक कई), पित्तलाः पित्ताधिक पित्तबहुल, तथा तथा तथा, (केचित् केटलाक कई), श्लेष्मलाः कफाधिक कफबहुल, दृश्यन्ते देखाय छे दीखते हैं ॥ ३९ ॥

39. From the moment of conception some men are equibalanced as regards the three humors–vata, pitta and kapha; some have a predominance of vata, some of pitta and some of kapha.

देहप्रकृतेर्लक्षणम्—

**तेषामनातुराः पूर्वे वातलाद्याः सदातुराः ।**
**दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते ॥ ४० ॥**

तेषाम् तेओमांथी इनमें, पूर्वे प्रथम कहेला प्रथम कहे गये, अनातुराः सर्वदा नीरोगी रहे छे सदा नीरोग रहते हैं, वातलाद्याः अने वातबहुलादि प्रकृतिवाळा इनमें वातबहुलादि प्रकृतिवाले, सदा सदा सदा, आतुराः रोगी रहे छे रोगी रहते हैं, हि कारण के क्योंकि, एषाम् तेओनुं उनके. देहप्रकृतिः देहनुं स्वास्थ्य देहका स्वास्थ्य, दोष- वात वगेरेना वातादि दोषोंके, अनुशयिता संस्कार-वाळुं संस्कारवाला, उच्यते कहेवाय छे कहा जाता है ॥४०॥

40. Of them the first alone enjoy perfect health while the rest are ever liable to disease. Their body-habitus is named according to the continual predominance of a particular humor in the body.

स्वस्थस्य समसर्वरसं सात्म्यं प्रशस्तम्—

**विपरीतगुणस्तेषां स्वस्थवृत्तेर्विधिर्हितः ।**
**समसर्वरसं सात्म्यं समधातोः प्रशस्यते ॥ ४१ ॥**

तेषाम् ते वातादि प्रकृतिवाळा पुरुषोनी इन वातादि प्रकृतिवाले पुरुषोंके, स्वस्थवृत्तेः स्वस्थ प्रकृतिने माटे स्वास्थ्यके लिए, विपरीत- विपरीत विपरीत, गुणः गुणवाळा गुणवाले, विधिः आहार विहारनुं सेवन आहार विहारका सेवन, हितः हितकर छे हितकर है, समधातोः समदोष-वाळाने समान दोषवालोंके लिए, सम-सर्व-रसम् सघळा रसोनो योग्य प्रमाणमां उपयोग सब रसोंका योग्य परिमाणमें उपयोग, सात्म्यम् सात्म्य सात्म्य, प्रशस्यते कहेवाय छे कहा जाता है ॥ ४१ ॥

३८. प्रकम्प्या—प्रकंपा (त.)

४०. देहप्रकृतिः—देहे प्रकृतिः (ग.)

41. Having regard to the rules of healthful living in the case of those who are characterised by the predominance of one humor, the use of things antagonistic in quality to that particular humor is beneficial; while in the case of persons with equibalanced humors, the balanced use of the articles of all tastes is recommended as being homologous to them.

मलायनानि—

**द्वे अधः सप्त शिरसि खानि स्वेदमुखानि च ।**
**मलायनानि बाध्यन्ते दुष्टैर्मात्राधिकैर्मलैः ॥ ४२ ॥**

अधः નીચે नीचे, द्वे બે दो, शिरसि માથામાં शिरमें, सप्त સાત सात, खानि છિદ્રો छिद्र, स्वेदमुखानि च અને રુવાડાંનાં છિદ્રો और रोमकूप, मलायनानि આ મલમાર્ગો ये मलस्थान, दुष्टैः કુપિત दूषित, मात्रा- અને પ્રમાણમાં एवं मात्रामें, अधिकैः વધેલા अधिक, मलैः મળોથી मलोंसे, बाध्यन्ते પીડા પામે છે दूषित होते हैं ॥४२॥

42. There are two excretory orifices in the lower part of the trunk; there are seven cavities in the head and innumerable openings of sweat-glands all over the body; the emunctories are impaired by morbid or excessive formation of excretory products.

मलानां क्षयवृद्ध्योर्लक्षणम्—

**मलवृद्धिं गुरुतया लाघवान्मलसंक्षयम् ।**
**मलायनानां बुध्येत सङ्गोत्सर्गादतीव च ॥४३॥**

मलायनानाम् મલમાર્ગોના मलमार्गोंके, गुरुतया ભારેપણાથી गुरु होनेसे, मलवृद्धिम् મલની વૃદ્ધિ मलवृद्धिको, लाघवात् અને લઘુપણાથી और लघु होनेसे, मलसंक्षयम् મલનો ક્ષય मलक्षयको, बुध्येत સમજવો जानना चाहिए, अतीव તેમજ अति एवं अति, सङ्ग- અપ્રવૃત્તિથી મલની વૃદ્ધિ अप्रवृत्तिसे मलवृद्धि, उत्सर्गात् च તથા અતિ ઉત્સર્ગથી મલનો ક્ષય સમજવો और मलके अति उत्सर्गसे मलक्षय जानना चाहिए ॥ ४३ ॥

43. The excessive or scanty formation of the excretory products is known by the enlargement or contraction of the emunctory concerned, as also by excessive discharge or suppression of the excrement.

तज्जानां व्याधीनां क्रियाक्रमः—

**तान् दोषलिङ्गैरादिश्य व्याधीन् साध्यानुपाचरेत् ।**
**व्याधिहेतुप्रतिद्वन्द्वैर्मात्राकालौ विचारयन् ॥ ४४ ॥**

तान् મલવૃદ્ધિ અને મલક્ષયથી ઉત્પન્ન થયેલા તે मलवृद्धि और मलक्षयसे उत्पन्न हुए उन, व्याधीन् રોગોને रोगोंको, दोषलिङ्गैः વાતાદિ લક્ષણોથી वातादि लक्षणोंसे, आदिश्य ઓળખીને जानकर, साध्यान् સાધ્ય રોગોને साध्य रोगोंकी, मात्रा- માત્રા मात्रा, कालौ અને કાળને और कालका, विचारयन् વિચાર કરીને विचार करके, व्याधि- વ્યાધિ व्याधि, हेतु- અને હેતુથી एवं हेतुसे, प्रतिद्वन्द्वैः વિપરીત ફલ લાવનારાં ઔષધોથી विपरीत फल लानेवाली औषधियोंसे, उपाचरेत् ઉપચાર કરવો चिकित्सा करे ॥ ४४ ॥

44. Diagnosing these disorders by their characteristic signs and morbidity, the physician should treat the curable diseases by remedies which are antagonistic to the diseases and their causative factors with due consideration of dose and time.

स्वस्थवृत्तसेवने हेतुः—

**विषमस्वस्थवृत्तानामेते रोगास्तथाऽपरे ।**
**जायन्तेऽनातुरस्तस्मात् स्वस्थवृत्तपरो भवेत् ॥४५॥**

विषम-स्वस्थ-वृत्तानाम् સ્વસ્થવૃત્તના નિયમોને અનુસરી નહિ ચાલનારાઓને स्वस्थवृत्तके नियमोंके अनुसार नहीं चलनेवालोंको, एते આ રોગો ये रोग, तथा अपरे તથા બીજા तथा अन्य, रोगाः स्थौल्यादि રોગો

४२. स्वेदमुखानि—स्वेदवहानि (घ. च.)
४३. गुरुतया—गुरुत्वेन (घ. च. झ. त.)

स्थौल्यादि रोग, जायन्ते ઉત્પન્ન થાય છે उत्पन्न होते हैं, तस्मात् તેથી इस लिए, अनातुरः રોગ થયા પહેલાંજ रोग होनेसे पूर्व ही, स्वस्थवृत्त- સ્વસ્થવૃત્તનું स्वस्थवृत्तका, परः પાલન કરવામાં તત્પર पालन करनेमें तत्पर, भवेत् થવું જોઈએ रहना चाहिए ॥ ४५ ॥

45. These and other diseases occur in those who do not observe the rules of healthful living. Hence the healthy man should be diligent in the observance of the rules of healthful living.

निजविकाराणामनुत्पत्तौ विधिः—

**माधवप्रथमे मासि नभस्यप्रथमे पुनः ।**
**सहस्यप्रथमे चैव हारयेद्दोषसंचयम् ॥ ४६ ॥**

माधव- વૈશાખની वैशाखके, प्रथमे પહેલાના पहले, मासि ચૈત્ર માસમાં કફને चैत्र मासमें कफको, पुनः વળી फिर, नभस्य- ભાદરવાની પહેલાંના भाद्रपदसे, प्रथमे શ્રાવણ માસમાં વાયુને पहले श्रावण मासमें वायुको, सहस्य અને પોષની પહેલાના और पौषसे, प्रथमे च एव માગશર માસમાં પિત્તને पहले मार्गशीर्ष मासमें पित्तको, दोषसंचयम् આવી રીતે દોષોના સંચયને इस तरह दोषसंचयको, हारयेत् દૂર કરવો बाहर करना चाहिए ॥ ४६ ॥

46. One should eliminate the accumalated morbid matter in the months of Chaitra, Sravana and Margaseersha.

**स्निग्धस्विन्नशरीराणामूर्ध्वं चाधश्च नित्यशः ।**
**बस्तिकर्म ततः कुर्यान्नस्यकर्म च बुद्धिमान् ॥४७॥**

बुद्धिमान् બુદ્ધિમાન વૈદ્ય बुद्धिमान वैद्य, नित्यशः કાલાનુસાર कालानुसार, स्निग्ध- સ્નેહન स्नेहन, स्विन्न- અને સ્વેદન પામેલ और स्वेदन किये, शरीराणाम् શરીરવાળાઓને शरीरवालोंको, ऊर्ध्वम् વમન वमन, अधः વિરેચન विरेचन, बस्तिकर्म બસ્તિકર્મ बस्तिकर्म, ततः च અને ત્યારપછી और उसके पीछे, नस्यकर्म નસ્યકર્મ नस्यकर्म, कुर्यात् કરવાં करावे ॥ ४७ ॥

47. The wise physician should, after preliminary preparation of the body with the oleation and sudation procedures, carry out the purificatory procedures of vomition, purgation, enemata and errhines according to the season.

**यथाक्रमं यथायोग्यमत ऊर्ध्वं प्रयोजयेत् ।**
**रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥४८॥**

अतः એ શોધનકે, ऊर्ध्वम् પછી पीछे, कालवित् દેશ-કાલ જાણનાર વૈદ્ય देश कालादिको समझनेवाला वैद्य, यथाक्रमम् ક્રમાનુસાર क्रमानुसार, यथायोग्यम् અને યોગ્યતાનુસાર और जैसे योग्यहो वैसे, सिद्धानि સિદ્ધ सिद्ध, रसायनानि રસાયનો रसायनों, वृष्ययोगान् च તથા વાજીકરણ યોગોનો और वाजीकरण योगोंका, प्रयोजयेत् પ્રયોગ કરવો જોઈએ प्रयोग करावे ॥ ४८ ॥

48. Thereafter the physician skilled in the science of climatology should administer alterative and virilific remedies of tested efficacy systematically and as indicated.

**रोगास्तथा न जायन्ते प्रकृतिस्थेषु धातुषु ।**
**धातवश्चाभिवर्धन्ते जरा मान्द्यमुपैति च ॥४९॥**

तथा તે પ્રમાણે કરવાથી इस प्रकार करने पर, धातुषु વાતાદિ ધાતુઓ धातुओंके, प्रकृतिस्थेषु સામ્યાવસ્થામાં રહેવાથી प्रकृतिमें रहनेसे, रोगाः રોગો रोग, न जायन्ते થતા નથી उत्पन्न नहीं होते, धातवः ધાતુઓ धातुओंकी, अभिवर्धन्ते વધે છે वृद्धि होती है, जरा च અને વૃદ્ધાવસ્થા और वृद्धावस्था, मान्द्यम् મોડી देरसे उपैति આવે છે आती है ॥ ४९ ॥

49. Thus the body-elements being restored to the normal state, suscep-

४६. हारयेत्—वाहयेत् (ग. घ.)
४७. नित्यशः—बुद्धिमान् (घ. ङ.)
,, नस्यकर्म—नस्तःकर्म (ग. च.)

४८. यथायोग्यमतः—यथायोगमतः (ग. घ. च. छ.)
४९. तथा—तस्य (ग.)
,, मान्द्यमुपैति च—चान्तमुपैति च (ट.)

tibility to disease disappears, the body-elements get aggrandised and the pace of age is slackened.

**विधिरेष विकाराणामनुत्पत्तौ निदर्शितः ।**
**निजानामितरेषां तु पृथगेवोपदेक्ष्यते ॥ ५० ॥**

निजानाम् શરીરદોષજન્ય शरीरदोषजन्य, विकाराणाम् વિકારોની विकारोंको, अनुत्पत्तौ ઉત્પન્ન ન થાય તે માટે उत्पन्न न होने देनेके लिए, एषः આ यह, विधिः વિધિ विधि, निदर्शितः બતાવ્યો છે कह दी है, इतरेषाम् બીજા રોગોની અનુત્પત્તિનો विधि अन्य रोगोंकी अनुत्पत्तिकी विधि, तु તો तो, पृथक् પૃથક્ पृथक्, एव જ ही, उपदेक्ष्यते કહેવામાં આવશે कहेंगे ॥ ५० ॥

50. Such is the procedure laid down for the prevention of the endogenous diseases. As regards the prevention of other types of diseases, we shall instruct separately.

आगन्तुरोगाणामुत्पत्तौ प्रज्ञापराधस्य कारणत्वम्—

**ये भूतविषवाय्वग्निसंप्रहारादिसंभवाः ।**
**नृणामागन्तवो रोगाः प्रज्ञा तेष्वपराध्यति ॥५१॥**

नृणाम् માણસોને पुरुषोंमें, भूत- ભૂત भूत, विष- વિષ विष, वायु- વાયુ वायु, अग्नि- અગ્નિ अग्नि, संप्रहारादि- અને પ્રહાર વગેરેથી और चोट आदि, संभवाः ઉત્પન્ન થયેલા उत्पन्न हुए, ये જે जो, आगन्तवः આગંતુક आगन्तुक, रोगाः રોગો रोग होते हैं, तेषु તેઓમાં उनमें, प्रज्ञा બુદ્ધિદોષ જ बुद्धिदोष ही, अपराध्यति કારણભૂત છે कारण होता है ॥ ५१ ॥

51. The exogenous diseases of human beings, proceeding from evil spirits, poison, air, fire, trauma and such other things, are due to "volitional transgression"

**ईर्ष्याशोकभयक्रोधमानद्वेषादयश्च ये ।**
**मनोविकारास्तेऽप्युक्ताः सर्वे प्रज्ञापराधजाः ॥५२॥**

ईर्ष्या- ઈર્ષ્યા ईर्षा, शोक- શોક शोक, भय- ભય भय, क्रोध- ક્રોધ क्रोध, मान- માન मान, द्वेष-आदयः च દ્વેષ વગેરે द्वेष आदि, ये જે जो, मनोविकाराः માનસ વિકારો मानसिक रोग, उक्ताः કહ્યા છે कहे हैं, ते सर्वे તે સર્વ वे सब, अपि પણ भी, प्रज्ञापराधजाः પ્રજ્ઞાપરાધજન્ય છે बुद्धिदोषसे ही होते हैं ॥ ५२ ॥

52. The psychic disorders, such as jealousy, grief, fear, anger, vanity, hatred and such others, are also said to be the result of "volitional transgression"

आगन्तुविकाराणामनुत्पत्तौ विधिः

**त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।**
**देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥ ५३ ॥**

प्रज्ञा- બુદ્ધિ प्रज्ञाके, अपराधानाम् અપરાધનો दोषका, त्यागः ત્યાગ त्याग करना, इन्द्रिय- ઇન્દ્રિયોનો इन्द्रियोंका, उपशमः સંયમ उपशम ( संयमन ), स्मृतिः સ્મૃતિ स्मृति, देश- દેશ देश, काल- કાલ काल, आत्म- અને આત્માનું और आत्माको, विज्ञानम् જ્ઞાન जानना, सद्वृत्तस्य સદાચારનું सद्वृत्तका, अनुवर्तनम् પરિપાલન पालन करना ॥ ५३ ॥

53. Avoidance of "volitional transgression", control of the senses, recollection, knowledge of clime, season and the self, and observance of the rules of good conduct—

**आगन्तूनामनुत्पत्तावेष मार्गो निदर्शितः ।**
**प्राज्ञः प्रागेव तत् कुर्याद्धितं विद्याद्यदात्मनः ॥५४॥**

एषः આ यह, आगन्तूनाम् આગંતુક વ્યાધિઓની आगन्तुज रोगकी, अनुत्पत्तौ અનુત્પત્તિનો उत्पन्न न होने देनेका, मार्गः માર્ગ मार्ग, निदर्शितः કહ્યો છે कहा गया है, प्राज्ञः બુદ્ધિમાન માણસ बुद्धिमान मनुष्य, यत् જેને जिसको, आत्मनः પોતાનું अपना, हितम् હિત हित, विद्यात् જુએ जाने, तत् તે उसको, प्राक् एव રોગની ઉત્પત્તિથી પહેલાંજ रोगोत्पत्तिसे पूर्व ही, कुर्यात् તેણે કરવું करे ॥ ५४ ॥

५०. उपदेक्ष्यते-उपदिश्यते ( ध. ञ. )

54. These are laid down as the course of prevention of exogenous diseases. The wise man should observe, much before the onset of disease (as a prophylactic measure) such things as he considers good for his well-being.

रोगाणामनुत्पत्तौ उत्पन्नानां च शान्तये कारणम्—

**आप्तोपदेशप्रज्ञानं प्रतिपत्तिश्च कारणम् ।**
**विकाराणामनुत्पत्तावुत्पन्नानां च शान्तये ॥५५॥**

**विकाराणाम्** વ્યાધિને रोगोंके, **अनुत्पत्तौ** ઉત્પન્ન ન થવા દેવામાં उत्पन्न न होने देनेमें, **उत्पन्नानाम् च** અને ઉત્પન્ન થયેલા વ્યાધિઓની और उत्पन्न हुए रोगोंकी, **शान्तये** શાંતિ માટે शान्तिके लिए, **आप्त-** આપ્તજનોના ऋषियोंसे दिये, **उपदेश-** ઉપદેશનું उपदेशको, **प्रज्ञानम्** જ્ઞાન जानना, **प्रतिपत्तिः च** અને તેનું અનુષ્ઠાન और उसके अनुसार आचरण करना, **कारणम्** એ કારણ છે यह कारण है ॥ ५५ ॥

55. The knowledge of authoritative instruction and its right application are the two factors necessary for the prevention and cure of diseases.

के नरा वर्ज्याः—

**पापवृत्तवचःसत्त्वाः सूचकाः कलहप्रियाः ।**
**मर्मोपहासिनो लुब्धाः परवृद्धिद्विषः शठाः ॥५६॥**
**परापवादरतयश्चपला रिपुसेविनः ।**
**निर्घृणास्त्यक्तधर्माणः परिवर्ज्या नराधमाः ॥५७॥**

**पाप-** પાપયુકત पापमय, **वृत्त-** આચરણ आचरण, **वचः-** વાણી वाणी, **सत्त्वाः** અને મનવાળા और मनवाले, **सूचकाः** ચાડિયા चुगलीखोर, **कलहप्रियाः** કજિયાખોર झगडालु, **मर्म-उपहासिनः** મર્મપીડક ઉપહાસ કરનારા छिद्रको देखकर उसपर हंसनेवाले, **लुब्धाः** લોભી लालची, **परवृद्धि-** અન્યની ઉન્નતિમાં दूसरोंकी उन्नतिमें, **द्विषः** દ્વેષ કરનાર द्वेष रखनेवाले, **शठाः** શઠ धूर्त, **पर-** બીજાની दूसरोंकी, **अपवाद-** નિંદામાં निंदामें, **रतयः** તત્પર तत्पर, **चपलाः** ચપળ चंचल, **रिपु-** શત્રુના दुश्मनके, **सेविनः** સેવક सेवक, **निर्घृणाः** નિર્દય दयारहित, **त्यक्तधर्माणः** તથા ધર્મહીન तथा धर्महीन, **नराधमाः** નરાધમોનો नीच पुरुषोंका, **परिवर्ज्याः** ત્યાગ કરવો જોઈએ सहवास छोड देना चाहिए ॥ ५६–५७ ॥

56-57. Those who are sinful of conduct, speech and disposition, back-biters, quarrelsome, sarcastic and niggards; those who are envious of others' prosperity, and cheats; those who delight in scandal-mongering and are fickle-minded, those who have a foot in the enemy's camp, those who are without compunction, and apostates; all such, the scum of humanity, should be shunned.

के नराः सेव्याः—

**बुद्धिविद्यावयःशीलधैर्यस्मृतिसमाधिभिः ।**
**वृद्धोपसेविनो वृद्धाः स्वभावज्ञा गतव्यथाः ॥५८॥**
**सुमुखाः सर्वभूतानां प्रशान्ताः शंसितव्रताः**
**सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः ॥५९॥**

**बुद्धि-** પુષ્કળ અને શ્રેષ્ઠ બુધ્ધિ प्रचुर व प्रशस्त बुद्धि, **विद्या-** વિદ્યા विद्या, **वयः-** વય वय, **शील-** શીલ शील, **धैर्य-** ધૈર્ય धैर्य, **स्मृति-** સ્મૃતિ स्मृति, **समाधिभिः** અને સમાધિથી और समाधिसे, **वृद्धाः** યુક્ત युक्त, **वृद्ध-उपसेविनः** વૃધ્ધોની સેવા કરનાર वृद्धोंकी सेवामें तत्पर, **स्वभावज्ञाः** સર્વ પ્રાણીઓના સ્વભાવને જાણનાર सब प्राणियोंके स्वभावको जाननेवाले, **गतव्यथाः** શોકાદિથી રહિત शोकादिसे रहित, **सुमुखाः** પ્રસન્ન મુખવાળા प्रसन्न मुखवाले, **प्रशान्ताः** શાંત ચિત્તવાળા शान्तचित्त, **शंसितव्रताः** વ્રતનું પાલન કરનારે व्रतका पालन करनेवाले, **सर्व-** સર્વ सब, **भूतानाम्** પ્રાણીઓને प्राणियोंके लिए, **सन्मार्ग-** સન્માર્ગનો सच्चे मार्गका, **वक्तारः** ઉપદેશ કરનાર उपदेश करनेवाले, **पुण्य-** પવિત્ર पवित्र, **श्रवण-** શ્રવણ

५५. आप्तोपदेशप्रज्ञानं—आप्तोपदेशः प्रज्ञानं (ध.)
,, प्रज्ञानं—प्रज्ञानां (द. प.)
५६. परवृद्धिद्विषः—परवृद्धिद्विपः (प.)
५७. परापवादरतयः—परनारीप्रवेशिनः (ग. च. झ. ध.)
५८. स्वभावज्ञा—अभावज्ञा (प.)

श्रवण, दर्शनाः અને દર્શનવાળા પુરુષો और दर्शन-वाले पुरुषोंका, सेव्याः સેવવા લાયક છે सेवन करना चाहिए ॥ ५८-५९ ॥

58-59. While those who are old (mature) in understanding, learning, years, character, courage, memory and one-mindedness; those who frequent the company of such; those who are endowed with insight into the nature of things; those who are free from all ailments; those who are well-disposed towards all creatures; those who are tranquil of heart; those who are of commendable character; the teachers of the right path; and those who hear and see only that which is meritorious are to be sought.

हितसेवने प्रयतितव्यम्—

**आहाराचारचेष्टासु सुखार्थी प्रेत्य चेह च ।**
**परं प्रयत्नमातिष्ठेद्बुद्धिमान् हितसेवने ॥ ६० ॥**

इह આ લોકમાં इह लोकमें, प्रेत्य च અને પરલોકમાં और परलोकमें, सुखार्थी સુખની ઇચ્છાવાળા सुख चाहनेवाले, बुद्धिमान् બુદ્ધિમાન પુરુષે बुद्धिमान पुरुषको, आहार- આહાર आहार, आचार- આચાર आचार, चेष्टासु અને બીજી ક્રિયાઓમાં एवं दूसरी क्रियाओंमें, हित- જે હિતકર હોય તેના जो हितकर हो उसके, सेवने સેવનમાં सेवनमें, परम् ખૂબ अति, प्रयत्नम् પ્રયત્ન प्रयत्न, आतिष्ठेत् કરવો करना चाहिए ॥ ६० ॥

60. The wise man who seeks happiness both here and hereafter, should exercise the highest care in selecting what is wholesome in the matter of food, conduct and behaviour.

दधिसेवने नियमाः—

**न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् ।**
**नामुद्गयूषं नाक्षौद्रं नोष्णं नामलकैर्विना ॥ ६१ ॥**

नक्तम् રાત્રે रात्रिमें, दधि દહીં दही, न ન नहीं, भुञ्जीत ખાવું खानी चाहिए, अघृतशर्करम् ઘી ખાંડ વિના घी शक्करके बिना, अपि च न પણ ન ખાવું भी नहीं खानी चाहिए, अमुद्गयूषम् મગના યૂષ વિના मूंगके यूषके बिना, न ન ખાવું नहीं खानी चाहिए, अक्षौद्रं न મધ વિના ન ખાવું मधुके बिना नहीं खानी चाहिए, उष्णम् न ગરમ કરીને ન ખાવું गरम करके नहीं खानी चाहिए, आमलकैः તથા આમળાં तथा आंवलेके, विना न વિના ન ખાવું बिना नहीं खानी चाहिए ॥ ६१ ॥

61. Curds should not be taken at night nor should they be taken without ghee and sugar, nor without green-gram soup, nor without honey, nor hot, nor without emblic myrobalans.

दधिसेवनविधीनामपालने दोषाः

**ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् ।**
**प्राप्नुयात्कामलां चोग्रां विधिं हित्वा दधिप्रियः ॥ ६२ ॥**

विधिम् જો મનુષ્ય વિધિને यदि मनुष्य विधिको, हित्वा ત્યાગ કરી छोडकर, दधिप्रियः દહીંનું સેવન કરે છે તો તે दहींका सेवन करता है तो वह, ज्वर- જ્વર ज्वर, असृक्पित्त- રક્તપિત્ત रक्तपित्त, वीसर्प- વીસર્પ वीसर्प, कुष्ठ- કુષ્ઠ कुष्ठ, पाण्डु-आमय- પાંડુરોગ पाण्डुरोग, भ्रमान् ભ્રમ भ्रम, उग्रां कामलां च અને દારુણ કમળાને और तीव्र कामलाको, प्राप्नुयात प्राप्त કરે છે प्राप्त होता है ॥ ६२ ॥

६१. मुद्गयूषम्–मुद्गसूपम् (ङ.)

„ एतच्छ्लोकस्याग्रे—

अलक्ष्मीदोषयुक्तत्वान्नक्तं तु दधि वर्जितम् ।
श्लेष्मलं स्यात् ससर्पिष्कं दधिमारुतसूदनम् ॥
न च सन्धुक्षयेत् पित्तमाहारं च विपाचयेत् ।
शर्करासंयुतं दद्यात्तृष्णादाहनिवारणम् ॥
मुद्गसूपेन संयुक्तं दद्याद्रक्तानिलापहम् ।
सुरसं चाल्पदोषं च क्षौद्रयुक्तं भवेद्दधि ॥
उष्णं पित्तास्रकृद्दोषान् धात्रीयुक्तं तु निर्हरेत् ।

इत्यधिकः पाठः (ख. ग. च. ज. ट. ध.) पुस्तकेषु ॥

62. The curds-lover who violates these rules would be affected with fever, hemothermia, acute spreading affections, dermatosis, anemia, giddiness and severe jaundice.

अध्यायार्थसंग्रहः—

तत्र श्लोकाः—

**वेगा वेगसमुत्थाश्च रोगास्तेषां च भेषजम् ।**
**येषां वेगा विधार्याश्च यदर्थं यद्धिताहितम् ॥६३॥**

**तत्र** તે વિષયમાં उस विषयमें, **श्लोकाः** ઉપસંહારના શ્લોકો છે કે उपसंहारके श्लोकों हैं कि, **वेगाः** वेग वेग, **वेग-समुत्थाः च** અને વેગરોધજન્ય और वेगको रोकनेसे उत्पन्न होते, **रोगाः** રોગો रोग, **तेषां च भेषजम्** અને તેઓની ચિકિત્સા और इन रोगोंकी औषध, **येषां च** અને જેના जिनके, **वेगाः** વેગો वेगोंको, **विधार्याः** ધારણ કરવા જોઈએ धारण करने चाहिए, **यदर्थम्** જેના માટે जिसके लिए, **यत्** જે जो, **हित-** હિતકર છે लाभकारी है, **अहितम्** અને અહિતકર છે एवं अहितकारी है ॥ ६३ ॥

63. Here are the recapitulatory verses—

The natural urges, the diseases born of their suppression, their treatment, the urges that should be controlled, what is wholesome and what is unwholesome and for whom;

**उचिते चाहिते वर्ज्यं सेव्ये चानुचिते क्रमः ।**
**यथाप्रकृति चाहारो मलायनगदौषधम् ॥ ६४ ॥**

**वर्ज्ये** ત્યાગવા યોગ્ય छोडने योग्य, **उचिते** અભ્યસ્ત અભ્યસ્ત, **अहिते च** અહિતનો अहितका, **सेव्ये** અને સેવવા યોગ્ય और सेवनीय, **अनुचिते च** અનભ્યસ્ત હિતનો अनभ्यस्त हितका, **क्रमः** ક્રમ क्रम, **यथाप्रकृति** પ્રકૃતિ અનુસાર प्रकृतिके अनुसार, **आहारः** આહાર आहार, **मलायन-** મલમાર્ગ मलमार्ग, **गद-** तथा તેના રોગોની तथा इनके रोगोंकी, **औषधम् च** ચિકિત્સા चिकित्सा ॥ ६४ ॥

64. the withdrawal from bad habits and the development of good habits, diet according to habitus; diseases of the emunctories and their medication;

**भविष्यतामनुत्पत्तौ रोगाणामौषधं च यत् ।**
**वर्ज्याः सेव्याश्च पुरुषा धीमताऽऽत्मसुखार्थिना ॥६५॥**

**भविष्यताम् च** ભવિષ્યમાં થનારા भविष्यमें होनेवाले, **रोगाणाम्** રોગોને रोगोंको, **अनुत्पत्तौ** રોકવાનાં रोकनेके, **यत्** જે जो, **औषधम्** ઔષધ औषध, **आत्मसुख-** અને પોતાના સુખની और अपने सुखकी, **अर्थिना** ઇચ્છાવાળા इच्छावाला, **धीमता** બુદ્ધિમાન પુરુષે बुद्धिमान पुरुषको, **वर्ज्याः** ત્યજવા યોગ્ય छोडने योग्य, **सेव्याः च** અને સેવવા યોગ્ય और सेवन करने योग्य, **पुरुषाः** પુરુષો मनुष्य ॥ ६५ ॥

65. prophylactic measures for the prevention of diseases; who are to be shunned and who are to be sought by the wise man who is keen on achieving his welfare;

**विधिना दधि सेव्यं च येन यस्मात्तदत्रिजः ।**
**नवेगान्धारणेऽध्याये सर्वमेवावदन्मुनिः ॥ ६६ ॥**

**येन** જે जो, **विधिना** વિધિથી विधिसे, **यस्मात् च** અને જે કારણથી और जिन कारणसे, **दधि** દહીં दही, **सेव्यम्** સેવવું જોઈએ सेवन करना चाहिए, **तत्** તે उस, **सर्वम् एव** સર્વ વિષયોને सब विषयोंको, **अत्रिजः** આત્રેય आत्रेय, **मुनिः** મુનિએ मुनिने, **न वेगान्धारणे** 'ન વેગાન્ધારણીય' 'न वेगान्धारणीय', **अध्याये** અધ્યાયમાં अध्यायमें, **अवदत्** કહી દીધાં છે कह दिया है. ॥६६॥

66. In what way curds should be taken and why so—all this the son of Atri has described in this chapter entitled "Natural Urges should not be suppressed."

---

६५. आत्मसुखार्थिना—ये सुखार्थिना (ग. च.)

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने नवेगान्धारणीयो नाम सप्तमोऽध्यायः ॥ ७ ॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **श्लोकस्थाने** સૂત્રસ્થાન વિષે सूत्रस्थानमें, **नवेगान्धारणीयः** 'નવેગાન્ધારણીય' 'नवेगान्धारणीय,' **नाम** નામનો नामका, **सप्तमः** સાતમો सातवाँ, **अध्यायः** અધ્યાય अध्याय, **समाप्तः** સંપૂર્ણ થયો समाप्त हुआ ॥ ७ ॥

7. Thus in the section on General Principles in the treatise compiled by Agnivesa and revised by Caraka, the seventh chapter entitled "Natural Urges should not be suppressed" is completed.

---

## अष्टमोऽध्यायः ।

इन्द्रियोपक्रमणीयाध्यायोपक्रम :—

### આઠમો અધ્યાય अध्याय आठवाँ Chapter VIII

**अथात इन्द्रियोपक्रमणीयमध्यायं व्याख्यास्यामः ॥१॥ इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**अथ अतः** હવે અહીંથી अब आगे, **इन्द्रियोपक्रमणीयम्** 'ઇન્દ્રિયોપક્રમણીય' નામના 'इन्द्रियोपक्रमणीय' नामके, **अध्यायम्** અધ્યાયનું अध्यायका, **व्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

**भगवान्** ભગવાન भगवान, **आत्रेयः** આત્રેયે आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, **आह स्म** કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The Regimentation of the senses".

2. Thus declared the worshipful Atreya.

पञ्चेन्द्रियादीनां परिगणनम्—

**इह खलु पञ्चेन्द्रियाणि, पञ्चेन्द्रियद्रव्याणि, पञ्चेन्द्रियाधिष्ठानानि, पञ्चेन्द्रियार्थाः पञ्चेन्द्रियबुद्धयो भवन्ति, इत्युक्तमिन्द्रियाधिकारे ॥ ३ ॥**

**इह खलु** આ પ્રકરણમાં इस आयुर्वेदके प्रकरणमें, **पञ्च** પાંચ पांच, **इन्द्रियाणि** જ્ઞાનેન્દ્રિયો ज्ञानेन्द्रियों, **पञ्च** પાંચ पांच, **इन्द्रिय-द्रव्याणि** ઇન્દ્રિયનાં દ્રવ્યો इन्द्रियके द्रव्यों, **पञ्च** પાંચ पांच, **इन्द्रिय-** ઇન્દ્રિયોનાં इन्द्रियोंके, **अधिष्ठानानि** આશ્રયો आश्रय, **पञ्च** પાંચ पांच, **इन्द्रिय-** ઇન્દ્રિયોના इन्द्रियोंके, **अर्थाः** વિષયો विषय, **पञ्च** પાંચ पांच, **इन्द्रिय-** ઇન્દ્રિયોની इन्द्रियोंकी, **बुद्धयः** બુદ્ધિઓ बुद्धियां, **भवन्ति** છે होती हैं, **इति** એમ ऐसा, **इन्द्रिय-** ઇન્દ્રિયોના इन्द्रियके, **अधिकारे** પ્રકરણમાં प्रकरणमें, **उक्तम्** કહ્યું છે कहा है ॥ ३ ॥

3. According to this science there are five sense-faculties, five sense-materials five sense-organs, five sense-objects and five sense-perceptions. Thus it has been laid down on the subject of the senses.

मनसो लक्षणम्—

**अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं, 'चेतः' इत्याहुरेके, तदर्थात्मसंपदायत्तचेष्टं चेष्टाप्रत्ययभूतमिन्द्रियाणाम् ॥ ४ ॥**

**पुनः** વળી और, **मनः** મન मन, **अतीन्द्रियम्** ઇંદ્રિયોમાં સૂક્ષ્મતર છે इन्द्रियोंमें सूक्ष्मतर है, **सत्त्वसंज्ञकम्** તેને સત્ત્વ કહે છે इसे सत्त्व कहते हैं, **तत् मनः** તે મનને इसी मनको, **एके** કેટલાક कितने, **'चेतः' इति** ચિત્ત એ નામથી પણ 'चित्त' इस नामसे भी, **आहुः** કહે છે कहते हैं, **तत्** તે મન वह मन, **अर्थ-आत्मसंपत्-आयत्त-चेष्टम्** પોતાના વિષય અને આત્માની શ્રેષ્ઠતાને આધીન વ્યાપારવાળું છે अपने विषय और आत्मा इनकी श्रेष्ठताके अधीन व्यापारवाला है, **इन्द्रियाणाम्** ઇન્દ્રિયોની और इन्द्रियोंकी, **चेष्टा-** ચેષ્ટાનું चेष्टाओंका, **प्रत्ययभूतम्** કારણભૂત છે कारणभूत है ॥ ४ ॥

---

४. चेतः—चित्तम् (प.)
,, तदर्थात्मसंपत्—तदर्थगुणसंपत् (प.)
,, आत्मसंपत्—आत्मगुणसंपत् (ग.)

4. The mind which is super-sensual is designated "Sattva", and some call it "Cetaḥ" (consciousness). Its function is dependent on the presence of the mental object and the spirit. It is the cause of the activity of the sense-organs.

एकस्मिन् पुरुषे मनसोऽनेकवदाभासे कारणम्—

**स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्चानेकमेकस्मिन् पुरुषे सत्त्वं, रजस्तमःसत्त्वगुणयोगाच्च; न चानेकत्वं, नह्येकं ह्येककालमनेकेषु प्रवर्तते; तस्मान्नैककाला सर्वेन्द्रियप्रवृत्तिः ॥ ५ ॥**

**स्व-अर्थ**—મનના ચિંત્યાદિ વિષયો मनके अपने चिन्त्यादि विषय, **इन्द्रिय-अर्थ**- ઇન્દ્રિયોના વિષયો इन्द्रियोंके विषय, **सङ्कल्प**- અને સંકલ્પની और अनेक संकल्पोके, **व्यभिचरणात् च** અનેકતાથી बदलते रहनेसे, **रजः-तमः**- રજોગુણ-તમોગુણ रज-तम, **सत्त्वगुण**—અને સત્ત્વગુણના तथा सत्त्वगुणके, **योगात् च** યોગથી सम्बन्धसे, **एकस्मिन्** એક एक, **पुरुषे** પુરુષમાં पुरुषमें, **सत्त्वम्** મન मन, **अनेकम्** જાણે અનેક પ્રકારનું થાય છે जैसे कि अनेक प्रकारका होता है, **अनेकत्वम् च न** પરંતુ મનનું અનેકપણું परंतु मनका अनेकत्व, **न** નથી नहीं है, **हि** કારણકે क्योंकि, **एकम्** હિ એકજ મન एक ही मन, **एककालम्** એકજ સમયે एकही समयमें, **अनेकेषु** અનેક વિષયોમાં अनेक विषयोमें, **न प्रवर्तते** પ્રવૃત્ત થતું નથી प्रवृत्त नहीं हो सकता, **तस्मात्** તેથી इस लिए, **सर्व-इन्द्रिय-** બધી ઇન્દ્રિયોની सब इन्द्रियोंकी, **प्रवृत्तिः** પ્રવૃત્તિઓ प्रवृत्ति, **एककाला** એક સમયે एक समयमें, **न** થતી નથી नहीं होती ॥ ५ ॥

5. On account of the multiplicity of mental objects, sense-objects and impulses, as also of the combinations of the qualities of Rajas, Tamas and Sattva, the mind appears as multi-faceted in one and the same person. There is no multiplicity of minds, because a single mind cannot have contact with many sense-objects simultaneously. Hence all sense organs do not function at one and the same moment.

पुरुषस्य सात्त्विकादिव्यपदेशे हेतुः—

**यद्गुणं चाभीक्ष्णं पुरुषमनुवर्तते सत्त्वं तत्सत्त्वमेवोपदिशन्ति मुनयो बाहुल्यानुशयात् ॥ ६ ॥**

**यद्गुणम् च** જે ગુણવાળું जिस गुणवाला, **सत्त्वम्** મન मन, **पुरुषम्** પુરુષને पुरुषका, **अभीक्ष्णम्** વારંવાર वारवार, **अनुवर्तते** અનુવર્તન કરે છે अनुसरण करता है, **तत् सत्त्वम्** તે મનને उसी मनको, **बाहुल्यानुशयात्** તે ગુણના ઘણા સંબંધથી उस गुणके अधिक संबंधसे, **मुनयः** મુનિઓ ऋषिलोग, (**तद्गुणम्** તે ગુણવાળું उसी गुणवाला), **एव** જ ही, **उपदिशन्ति** કહે છે कहते हैं ॥ ६ ॥

6. Whatever trait manifests most frequently in a man's mental make-up, of that mentality he is said to be by the wise, on account of his predominant association with it.

मनःपुरःसराणामिन्द्रियाणामर्थग्रहणे सामर्थ्यम्—

**मनःपुरःसराणीन्द्रियाण्यर्थग्रहणसमर्थानि भवन्ति ॥ ७ ॥**

**मनः**- મનથી मनसे, **पुरः-सराणि** દોરવામાં આવતી अधिष्ठित, **इन्द्रियाणि** ઈંદ્રિયો इन्द्रियां, **अर्थ-** પોતપોતાના વિષયોને अपने अपने विषयोंको, **ग्रहण-** ગ્રહણ કરવામાં ग्रहण करनेमें, **समर्थानि** સમર્થ समर्थ, **भवन्ति** બને છે होती हैं ॥ ७ ॥

५. नह्येकम्—अनेकम् (ज. प.)
,, ,, —નાળ્વकाળ્ (प. द. ध.)
,, नह्येककालमनेकेषु प्रवर्तते—अनेकमेककालमनेकेषु प्रवर्तते (प.) (ध.)

६. मुनयो—ऋषयो (ध. ठ.)
,, बाहुल्यानुशयात्—गुणबाहुल्यानुशयात् (ड.)
,, ,, —गुणबाहुल्यात् (ठ.)

7. The sense-organs when led by the mind, are capable of contacting the sense-objects.

पञ्चेन्द्रियाणि—

**तत्र चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनमिति पञ्चेन्द्रियाणि ॥ ८ ॥**

तत्र તેમાં इनमें, चक्षुः ચક્ષુ आंख, श्रोत्रम् કર્ણ कान, घ्राणम् નાસિકા नासिका, रसनम् રસના (જીભ) जिह्वा, स्पर्शनम् અને ચામડી और त्वचा, इति એ ये, पञ्च પાંચ पांच, इन्द्रियाणि ઇન્દ્રિયો છે ज्ञानेन्द्रियां हैं ॥ ८ ॥

8. Sight, hearing, smell, taste and touch are the five sense-faculties.

पञ्चेन्द्रियद्रव्याणि—

**पञ्चेन्द्रियद्रव्याणि-खं वायुर्ज्योतिरापो भूरिति ॥ ९ ॥**

खम् આકાશ आकाश, वायुः વાયુ वायु, ज्योतिः અગ્નિ अग्नि, आपः જળ जल, भूः અને પૃથ્વી और पृथ्वी, इति એ ये, पञ्च પાંચ पांच, इन्द्रिय ઇંદ્રિયનાં इन्द्रियोंके, द्रव्याणि દ્રવ્યો છે द्रव्य हैं ॥ ९ ॥

9. The five sense-materials are ether, air, light, water and earth.

पञ्चेन्द्रियाधिष्ठानानि—

**पञ्चेन्द्रियाधिष्ठानानि-अक्षिणी कर्णौ नासिके जिह्वा त्वक् चेति ॥ १० ॥**

अक्षिणी ચક્ષુ (આંખ) दो चक्षु, कर्णौ કાન दो कान, नासिके નસકોરાં दो नासिका (नथुने), जिह्वा જીભ जिह्वा, त्वक् च અને ચામડી और त्वचा, इति એ ये, पञ्च પાંચ पांच, इन्द्रिय- ઇન્દ્રિયનાં इन्द्रियोंके, अधिष्ठानानि અધિષ્ઠાનો છે आश्रयस्थान हैं ॥ १० ॥

10. The five sense-organs are the eyes, the ears, the nose, the tongue and the skin.

पञ्चेन्द्रियार्थाः—

**पञ्चेन्द्रियार्थाः-शब्दस्पर्शरूपरसगन्धाः ॥ ११ ॥**

शब्द- શબ્દ शब्द, स्पर्श- સ્પર્શ स्पर्श, रूप- રૂપ रूप, रस- રસ रस, गन्धाः અને ગંધ और गंध, पञ्च આ પાંચ ये पांच, इन्द्रिय- ઇન્દ્રિયના इन्द्रियोंके, अर्थाः વિષયો છે विषय हैं ॥ ११ ॥

11. The five sense-objects are sound, touch, shape, taste and smell.

पञ्चेन्द्रियबुद्धयः—

**पञ्चेन्द्रियबुद्धयः-चक्षुर्बुद्ध्यादिकाः ताः पुनरिन्द्रियेन्द्रियार्थसत्त्वात्मसन्निकर्षजाः क्षणिका, निश्चयात्मिकाश्च, इत्येतत् पञ्च पञ्चकम् ॥ १२ ॥**

चक्षुर्बुद्धि-आदिकाः ચક્ષુથી ઉત્પન્ન થયેલું જ્ઞાન, શ્રોત્રથી ઉત્પન્ન થયેલું જ્ઞાન વગેરે चक्षुसे ज्ञान, श्रोत्रज्ञान वगेरह, पञ्च પાંચ पांच, इन्द्रिय- ઇંદ્રિયોનાં इन्द्रियोंके, बुद्धयः જ્ઞાનો છે ज्ञानों हैं, पुनः ताः વળી તે और ये ज्ञान, इन्द्रिय- ઇંદ્રિય इन्द्रिय, इन्द्रियार्थ- ઇંદ્રિયોના વિષય इन्द्रियोंके विषय, सत्त्व- મન मन, आत्म- અને આત્માના और आत्माका एक साथ, सन्निकर्षजाः સંબંધથી ઉત્પન્ન થાય છે संबंध होनेसे उत्पन्न होते हैं, क्षणिकाः ક્ષણિક છે क्षणिक हैं, निश्चय-आत्मिकाः च તથા નિશ્ચયાત્મક છે और निश्चयात्मक हैं, इति આવી રીતે इस प्रकारसे, एतत् આ ये, पञ्च પાંચ पांच, पञ्चकम् પાંચ પાંચ પદાર્થોના સમૂહો થાય છે पांच पांच पदार्थोंके समूहों होते हैं ॥ १२ ॥

12. The five perceptions are the visual perception etc. These perceptions are the results of the coordination of the senses, the sense-objects, mind and soul; they are fleeting and are of the nature of decisions. These then, are the five pentads.

अध्यात्मद्रव्यगुणानां संग्रहः—

**मनो मनोर्थो बुद्धिरात्मा चेत्यध्यात्मद्रव्यगुणसंग्रहः शुभाशुभप्रवृत्तिनिवृत्तिहेतुश्च द्रव्याश्रितं च कर्म, यदुच्यते क्रियेति ॥ १३ ॥**

मनः મન मन, मनः-अर्थः મનનો વિષય मनका विषय, बुद्धिः आत्मा च બુદ્ધિ અને આત્મા बुद्धि और

१०. नासिके—नासिका (प.)

आत्मा, इति એ यह, अध्यात्म- અધ્યાત્મ अध्यात्म, द्रव्य- દ્રવ્ય द्रव्यों, गुण-संग्रहः અને ગુણોનો સંગ્રહ और गुणोंका संग्रह, द्रव्य-आश्रितम् તથા દ્રવ્યમાં રહેલું तथा द्रव्यमें आश्रित, कर्म च કર્મ कर्म, यत् જે जो, क्रिया इति ક્રિયા એ નામથી કહેવાય છે 'क्रिया' इस नामसे कहलाती है वह, शुभ-अशुभ- તે શુભ અને અશુભની शुभ एवं अशुभ, प्रवृत्ति- પ્રવૃત્તિ प्रवृत्ति, निवृत्ति- અને નિવૃત્તિનાં और निवृत्तिके, हेतुः કારણો છે कारणों हैं ॥१३॥

13. The mind, the mind-objects, the understanding and the spirit constitute the aggregate of spiritual elements and qualities. This aggregate is the source of good or bad activity or inactivity. Action which is also called therapeusis depends on the substances.

पाञ्चभौतिकानामपि चक्षुरादीनां तैजसत्वादिव्यपदेशे हेतुः—

**तत्रानुमानगम्यानां पञ्चमहाभूतविकारसमुदायात्मकानामपि सतामिन्द्रियाणां तेजश्चक्षुषि, खं श्रोत्रे, घ्राणे क्षितिः, आपो रसने, स्पर्शनेऽनिलो विशेषेणोपपद्यते ।**

तत्र अनुमान-અનુમાનદ્વારા अनुमानद्वारा, गम्यानाम् જાણવા યોગ્ય जानने योग्य, इन्द्रियाणाम् ઇન્દ્રિયો इन्द्रियों, पञ्चमहाभूत- જો કે પંચમહાભૂતોના पंचमहाभूतोंके, विकार- વિકારના विकारके, समुदाय સમુદાય समुदायसे, आत्मकानाम् अपि सताम् રૂપ જ છે તોપણ उत्पन्न हुई है तो भी, चक्षुषि ચક્ષુમાં आंखोंमें, तेजः અગ્નિ अग्नि, श्रोत्रे કર્ણમાં कानोंमें, खम् આકાશ आकाश, घ्राणे ઘ્રાણેન્દ્રિયમાં नासिकामें, क्षितिः પૃથ્વી पृथ्वी, रसने જિહ્વામાં जिह्वामें, आपः જળ जल, स्पर्शने અને ત્વચામાં और त्वचामें, अनिलः વાયુ वायु, विशेषेण ખાસ કરીને विशेष रूपसे, उपपद्यते રહે છે रहती है ।

14. Although the senses which are recognised by means of inference, are in general, aggregates of all the five proto-elements, yet light in the eyes, ether in the ear, earth in the smell, water in the taste, and air in the touch are found to predominate.

**तत्र यद्यदात्मकमिन्द्रियं विशेषात्तत्तदात्मकमेवार्थमनुगृह्णाति, तत्स्वभावाद्विभुत्वाच्च ॥१४॥**

तत्र તેમાં इन इन्द्रियोंमें, यत् इन्द्रियम् જે ઇન્દ્રિય जो इन्द्रिय, विशेषात् અધિકતાથી अधिकतासे, यद्-आत्मकम् જે મહાભૂતરૂપ હોય છે जो महाभूतरूप होती है, तत् તે ઇન્દ્રિય वह इन्द्रिय, तत् स्वभावात् વિષય સમાન પ્રકૃતિવાળી હોવાથી विषय समान स्वभाववाली होनेसे, विभुत्वात् च તથા સમાન જાતિવાળા વિષયોને ગ્રહણ કરવાની શક્તિવાળી હોવાથી समानजातिवाले विषयोंका ग्रहण करनेमें सामर्थ्यवाली होनेसे, तद्- आत्मकम् एव પ્રધાનભૂતાત્મક જ प्रधानभूतात्मक ही, अर्थम् વિષયને विषयको, अनुगृह्णाति ગ્રહણ કરે છે ग्रहण करती है ॥१४॥

14-1. From among these, each sense, predominant in one element in particular, contacts objects which have a similar predominance of that element, owing to innate affinity and ubiquity.

समनस्कानामिन्द्रियाणां प्रकृतिविकृतिहेतवः—

**तदर्थातियोगायोगमिथ्यायोगात् समनस्कमिन्द्रियं विकृतिमापद्यमानं यथास्वं बुद्ध्युपघाताय संपद्यते, सामर्थ्ययोगात् पुनः प्रकृतिमापद्यमानं यथास्वं बुद्धिमाप्याययति ॥१५॥**

तत् તે वह, इन्द्रियम् ઇંદ્રિય इन्द्रिय, अर्थ- રૂપ વગેરે વિષયોના रूप आदि विषयोंके, अतियोग- અતિયોગ अतियोग, अयोग- અયોગ अयोग, मिथ्या-योगात् અને મિથ્યાયોગથી और मिथ्यायोगसे, समनस्कम् મનસહિત मन सहित, विकृतिम् વિકારને विकारको, आपद्यमानम् પ્રાપ્ત થઈને प्राप्त हो कर, यथास्वम् પોતપોતાના अपने अपने, बुद्धि- જ્ઞાનના ज्ञानके, उपघाताय નાશ માટે नाशके लिए, संपद्यते તૈયાર થાય છે उद्यत होती

१४. उपपद्यते—उपदिश्यते (ग. घ.)

१४. अनुगृह्णाति—अनुधावति (ग घ. च. झ. द.)
१५. बुद्ध्युपघाताय संपद्यते—बुद्ध्युपघाताय प्रवर्तते (ढ.)
,, सामर्थ्ययोगात्—समयोगात् (च. छ. द. ध. प.)
,, योगात्—योगैः (ग.)
,, आपद्यमानम्—अनुवर्तमानम् (ग.)

रौद्र- ઉગ્ર उग्र, भैरव- ભયંકર भयानक, अद्भुत- વિસ્મયકર आश्चर्यजनक, द्विष्ट- અપ્રિય अप्रिय, बीभत्सन- લજ્જા તથા સૂગ ઉપજાવનાર लज्जा व जुगुप्सा उपजानेवाला, विकृत-वित्रासनादि-रूपदर्शनम् તથા વિકૃતિ પામેલાં ત્રાસ ઉપજાવનાર વગેરે રૂપોનું દર્શન तथा विकृत त्रासदायक वगैरह रूपोंको देखना, मिथ्यायोगः એ રૂપનો મિથ્યાયોગ છે यह रूपका मिथ्यायोग है;

37-(2). Thus with reference to sight, it is overuse to gaze inordinately at excessively luminous objects; it is disuse not to look at anything at all; while it is misuse to gaze at objects that are either too close or too remote, awe-striking, terrible, prodigious, hateful, frightful, monstrous, alarming etc.

**तथाऽतिमात्रस्तनितपटहोत्क्रुष्टादीनां शब्दानामतिमात्रं श्रवणमतियोगः, सर्वशोऽश्रवणमयोगः, परुषेष्टविनाशोपघातप्रधर्षणभीषणादिशब्दश्रवणं मिथ्यायोगः;**

तथा ते प्रभाणे वैसे, अतिमात्र-स्तनित- અત્યંત જોરદાર મેઘગર્જના अत्यंत ऊंचेसे होती मेघगर्जना, पटह-उत्क्रुष्टादीनाम् ઢોલ તથા ઊંચેથી રડવા વગેરેના ढोल व ऊंचे रोने आदिके, शब्दानाम् શબ્દોને शब्दोंको, अतिमात्रम् श्रवणम् અતિ પ્રમાણમાં સાંભળવા अत्यन्त सुनना, अतियोगः એ શબ્દનો અતિયોગ છે यह शब्दका अतियोग है, सर्वशः સર્વથા सर्वथा, अश्रवणम् અતિ જોરદાર મેઘગર્જના વગેરે શબ્દો ન સાંભળવા अत्यन्त ऊंचेसे होती मेघगर्जना आदि शब्दोंको न सुनना, अयोगः એ શબ્દનો અયોગ છે यह शब्दका अयोग है, परुष- કઠોર कठोर, इष्ट-विनाश- ઇષ્ટ વસ્તુઓના નાશના સૂચક इष्ट वस्तुओंके विनाशके सूचक, उपघात- મૃત્યુસૂચક मृत्युके सूचक, प्रधर्षण- તિરસ્કારસૂચક तिरस्कारसूचक, भीषणादि-शब्द- અને ભયાનક વગેરે શબ્દોને और डरानेवाले इत्यादि शब्दोंको, श्रवणम् સાંભળવા सुनना, मिथ्यायोगः એ શબ્દનો મિથ્યાયોગ છે यह शब्दोंका मिथ्यायोग है;

37-(3). Similarly, with reference to hearing, it is over-use to listen inordinately to such sounds as loud thunder-claps, beating of kettle-drums, loud cries etc; it is disuse not to listen to any sound at all, while it is misuse to listen to sounds that are harsh, joy-killing, afflicting, humiliating, terrifying etc.

**तथाऽतितीक्ष्णोग्राभिष्यन्दिनां गन्धानामतिमात्रं घ्राणमतियोगः, सर्वशोऽघ्राणमयोगः, पूतिद्विष्टामेध्यक्लिन्नविषपवनकुणपगन्धादिघ्राणं मिथ्यायोगः;**

तथा ते प्रभाणे वैसे, अतितीक्ष्ण-उग्र-अभिष्यन्दिनाम् અત્યંત તીક્ષ્ણ, ઉગ્ર તથા અભિષ્યન્દ કરનારા अतितीक्ष्ण, उग्र और अभिष्यन्दी, गन्धानाम् ગન્ધોને गन्धोंको, अतिमात्रम् घ्राणम् અતિ પ્રમાણમાં સૂંઘવા अत्यन्त सूंघना, अतियोगः એ ગંધનો અતિયોગ છે यह गंधका अतियोग है, सर्वशः સર્વથા सर्वथा, अघ्राणम् અતિતીક્ષ્ણ વગેરે ગંધોને ન સૂંઘવા अति तीक्ष्ण आदि गंधोंको न सूंघना, अयोगः એ ગંધનો અયોગ છે यह गंधका अयोग है, पूति-द्विष्ट-अमेध्य-क्लिन्न-विषपवन-कुणप-गन्धादि-घ्राणम् દુર્ગન્ધી-અપ્રિય - અપવિત્ર તથા ભેજવાળા પદાર્થની, ઝેરી પવનની અને મુડદાંની ગન્ધ વગેરે ગન્ધોને સૂંઘવી दुर्गन्ध-अप्रिय-अपवित्र तथा भेजवाले पदार्थकी, जहरीले पवनकी और मुर्देकी गन्ध आदि गन्धोंको सूंघना, मिथ्यायोगः એ ગંધનો મિથ્યાયોગ કહેવાય છે यह गन्धका मिथ्यायोग कहा जाता है;

37-(4). Similarly with reference to the sense of smell, it is overuse to smell inordinately keen, rank and deliquescent odours; it is disuse not to smell at all; while it is misuse to smell odours that are putrid, hateful, unclean, putrifying, poisonous, cadaverous etc.

---

३७. अतिमात्रं घ्राणम्—अतिमात्रोपघ्राणम् (ग.)
,, सर्वशोऽघ्राणम्—सर्वशश्चाघ्राणम् (ग.)

**तथा रसानामत्यादानमतियोगः, सर्वशोऽनादानमयोगः, मिथ्यायोगो राशिवर्ज्येष्वाहारविधिविशेषायतनेषूपदेक्ष्यते;**

तथा ते प्रमाणे वैसे, **रसानाम्** छ ये रसोनो छः रसोंका, **अत्यादानम्** अत्यंत स्वाद लेवो अत्यन्त स्वाद लेना, **अतियोगः** ए रसनो अतियोग छे यह रसका अतियोग है, **सर्वशः** सर्वथा सर्वथा, **अनादानम्** रसोनो स्वाद न लेवो रसोंका स्वाद न लेना, **अयोगः** ए रसनो अयोग छे यह रसका अयोग है, **मिथ्यायोगः** रसोनो मिथ्यायोग रसोंका मिथ्यायोग, **राशि-वर्ज्येषु** आहारना परिमाणरूप राशि सिवायना आहारके परिमाणरूप राशिको छोडकर, **आहार-विधि-विशेष-आयतनेषु** आहारविधिना भेदनां कारणोमां आहारविधिके भेदके कारणोंमें, **उपदेक्ष्यते** कहेवामां आवशे कहा जायगा;

37-(5). Similarly, with reference to the sense of taste, it is overuse to indulge the palate inordinately; it is disuse to abstain altogether from all tastes; as regards misuse, we shall describe it in the section on the rules dealing with diet, leaving aside the question of quantum.

**तथाऽतिशीतोष्णानां स्पृश्यानां स्नानाभ्यङ्गोत्सादनादीनां चात्युपसेवनमतियोगः, सर्वशोऽनुपसेवनमयोगः, स्नानादीनां शीतोष्णादीनां च स्पृश्यानामनानुपूर्व्योपसेवनं विषमस्थानाभिघाताशुचिभूतसंस्पर्शादयश्चेति मिथ्यायोगः ॥ ३७ ॥**

तथा ते प्रमाणे वैसे, **अतिशीत-उष्णानाम्** अत्यंत शीत तथा गरम अत्यन्त शीतल तथा अति गरम, **स्पृश्यानाम्** स्पर्शथी जाणवा योग्य पदार्थोनो स्पर्शसे जानने योग्य पदार्थोंका, **स्नान-अभ्यङ्ग-उत्सादनादीनाम्** च स्नान अभ्यंग अने उद्वर्तन वगेरेनुं और स्नान अभ्यङ्ग तथा उत्सादन इत्यादिका, **अत्युपसेवनम्** अतिशय सेवन करवुं अत्यंत सेवन करना, **अतियोगः** ए स्पर्शनो अतियोग कहेवाय छे यह स्पर्शका अतियोग कहाता है, **सर्वशः** सर्वथा सर्वथा, **अनुपसेवनम्** स्पर्शोनुं सेवन न करवुं स्पर्शोंका सेवन नहीं करना, **अयोगः** ए स्पर्शनो अयोग छे यह स्पर्शका अयोग है; **स्नानादीनाम्** स्नान वगेरेनुं स्नान इत्यादिका, **शीतोष्णादीनाम्** च अने शीत तथा उष्ण वगेरे और शीत और गरम आदि, **स्पृश्यानाम्** स्पर्शद्वारा जाणी शकाय एवां द्रव्योनुं स्पर्शद्वारा जाने जाते द्रव्योंका, **अनानुपूर्व्या** क्रमने छोडीने क्रमको छोडकर, **उपसेवनम्** सेवन करवुं सेवन करना, **विषमस्थान-** ऊंचीनीची जगाए बेसवुं ऊंचीनीची जगह पर बैठना, **अभिघात-** चोट लागवी चोट लगना, **अशुचि-भूत-संस्पर्शादयः** च अने अपवित्र वस्तुओ तथा भूत वगेरेनो स्पर्श थवो वगेरे अपवित्र वस्तु एवं भूतोंका स्पर्श होना आदि, **इति मिथ्यायोगः** ए स्पर्शनो मिथ्यायोग छे यह स्पर्शका मिथ्यायोग है ॥ ३७ ॥

37. Similarly, with reference to the sense of touch it is overuse to expose oneself inordinately to extreme cold and heat, as also to indulge overmuch in baths, oil-massage, friction-massage etc; it is disuse to refrain from all tactile stimuli; while it is misuse to resort to baths etc., and to cold and hot applications without reference to their right sequence; it is also a misuse of the tactile sense to let the body suffer contact with uneven surfaces, trauma, unclean things and evil spirits.

असात्म्येन्द्रियार्थसंयोगस्यैकरूपत्वे युक्तिः—

**तत्रैकं स्पर्शनमिन्द्रियाणामिन्द्रियव्यापकं, चेतःसमवायि, स्पर्शनव्याप्तेर्व्यापकमपि च चेतः;**

तत्र ते सर्व उन सब, **इन्द्रियाणाम्** इन्द्रियोमां इन्द्रियोंमें, **एकम् स्पर्शनम्** एक स्पर्शनेन्द्रिय एक स्पर्शेन्द्रिय, **इन्द्रिय-व्यापकम्** सर्व चक्षु आदि इन्द्रियोमां व्यापक छे चक्षु आदि सब इन्द्रियोंमें व्यापक है, **चेतःसमवायि** अने तेनो मन साथे संबंध छे और इसका मनके साथ संबन्ध है, **स्पर्शन-व्याप्तेः** च अपि स्पर्शने

३७. सर्वशोऽनादानमयोगः—अनादानमयोगः (ख. अ. त.)

३८. स्पर्शनम्—स्पर्शनेन्द्रियम् (ध.)

કરેલી જે ઇન્દ્રિયોમાં વ્યાપ્તિ તે સ્પર્શનવ્યાપ્તિ છે, તે સ્પર્શનવ્યાપ્તિમાં પણ स्पर्शनने की हुई जो इन्द्रियोंमें व्याप्ति वह स्पर्शनव्याप्ति है, उस स्पर्शनव्याप्तिमें भी, चेतः મન मन, व्यापकम् વ્યાપક છે व्यापक है;

38-(1) From among the senses, the sense of touch pervades all the others and has the mind inherent in it; for the field of the mind is co-extensive with that of the tactile sense.

**तस्मात् सर्वेन्द्रियाणां व्यापकस्पर्शकृतो यो भावविशेषः, सोऽयमनुपशयात् पञ्चविधस्त्रिविध-विकल्पो भवत्यसात्म्येन्द्रियार्थसंयोगः; सात्म्यार्थो ह्युपशयार्थः ॥ ३८ ॥**

तस्मात् તેથી इस कारणसे, **व्यापक-स्पर्श-कृतः** વ્યાપક સ્પર્શ કરેલો व्यापक स्पर्शने किया हुआ, **सर्व-इन्द्रियाणाम्** સર્વ ઇન્દ્રિયોનો सब इन्द्रियोंका, **यः** જે जो, **भावविशेषः** સ્વભાવવિશેષ છે स्वभाव विशेष है, **सः अयम् असात्म्य-इन्द्रिय-अर्थ-संयोगः** તે આ એક ઇન્દ્રિય-વ્યાપક સ્પર્શનો એકરૂપવાળો અસાત્મ્યભૂત ઇન્દ્રિય તથા વિષયનો સંયોગ वह यह एकइन्द्रियव्यापक स्पर्शका एकरूपवाला असात्म्यभूत इन्द्रिय व विषयका संयोग, **अनुपशयात्** દુઃખ કરનાર હોવાથી दुःखकर्ता होनेसे, **पञ्चविधः** અસાત્મ્યભૂત પાંચ ઇન્દ્રિયોના તથા પાંચ વિષયોના પાંચ સંયોગોરૂપ થઈ असात्म्यभूत पांच इन्द्रियोंके व पांच विषयोंके पांच संयोगोंरूप होकर, **त्रिविध-विकल्पः** ફરી અયોગ, અતિયોગ અને મિથ્યાયોગથી ત્રણ પ્રકારનો થાય છે फिर अयोग, अतियोग और मिथ्यायोगसे तीन प्रकारका होता है, **सात्म्य-अर्थः** જે સાત્મ્યનો અર્થ છે जो सात्म्यका अर्थ है, **उपशय-अर्थः हि** તે જ ઉપશયનો અર્થ છે वही उपशयका अर्थ है ॥ ३८ ॥

38. Accordingly, all sensory response, referable ultimately to the ubiquitous sense of touch, when it does not subserve the general ends of the organism, falls into the five-fold tripartite classification of non-homologatory combination of the senses with their sense-objects. For, whatever subserves the purpose of the organism as a whole, is homologatory combination of the senses and their objects.

अयोगातियोगमिथ्यायोगयुक्तस्य कर्मणो लक्षणम्—

**कर्म वाङ्मनःशरीरप्रवृत्तिः। तत्र वाङ्मनःशरीरातिप्रवृत्तिरतियोगः; सर्वशोऽप्रवृत्तिरयोगः;**

वाक्-मनः-शरीर-प्रवृत्तिः વાણી-મન તથા શરીરની પ્રવૃત્તિ वाणी-मन और शरीरकी प्रवृत्ति, **कर्म** એ કર્મ છે यह कर्म है, **तत्र** તેમાં उनमें, **वाक्-मनः-शरीर-अति-प्रवृत्तिः** વાણી-મન અને શરીરની અતિ પ્રવૃત્તિ वाणी-मन और शरीरकी अति प्रवृत्ति, **अतियोगः** અતિયોગ છે अतियोग है, **सर्वशः** સર્વથા इनकी सर्वथा, **अप्रवृत्तिः** પ્રવૃત્તિ ન થવી प्रवृत्ति न होना, **अयोगः** એ અયોગ છે यह अयोग है;

39-(1). Action comprises the activity of speech, mind and of the body. Now excessive action of any one of these is overuse (with reference to it) while their total lack of action is disuse.

**वेगधारणोदीरणविषमस्खलनपतनाङ्गप्रणिधानाङ्गप्रदूषणप्रहारमर्दनप्राणोपरोधसंक्लेशनादिः शारीरो मिथ्यायोगः,**

वेग-धारण- વેગોને રોકવા वेगोंको रोकना, **उदीरण-** વેગોને બલાત્કારે પ્રવૃત્ત કરવા वेगोंको जोरसे बहाना, **विषम-स्खलन-पतन-अङ्ग-प्रणिधान-** વિષમપણે અથડાવું-પડી જવું અને અંગોની ચેષ્ટા કરવી विषमतासे अथडाना—गिरना और अपने अङ्गसे चेष्टा करना, **अङ्गप्रदूषण-** અંગોને અત્યંત ખંજોળવા વગેરેથી દૂષિત કરવાં अङ्गोंको अत्यन्त कंडूयन आदिसे दूषित करना, **प्रहार-** પ્રહાર થવો चोट लगना, **मर्दन-** ચોળાઈ જવું मर्दन होना, **प्राणोपरोध-** પ્રાણોનું રુંધન કરવું निःश्वास-प्रश्वास रोकना,

३९. स्खलनपतन—स्खलनगमनपतन (ह. ख.)
,, प्रहारमर्दन—प्रहारावमर्दन (ग.)

**संक्लेशनादिः** અને મદ્ય તડકા વગેરેથી શરીરને ક્લેશ દેવો વગેરે **मद्य सूर्यताप** आदिसे शरीरको क्लेशित करना आदि, **शारीरः मिथ्यायोगः** એ શારીરિક મિથ્યાયોગ છે यह शारीरिक मिथ्यायोग है;

39-(2). Misuse with reference to the body consists of forced suppression or forced excitation of natural urges; awkward stumbling, falling or posturing of limbs, abusing the body, injuring the body, violent **kneading** of the limbs, and forced **holding** of the breath and other kinds of self-mortification.

**सूचकानृताकालकलहाप्रियावद्धानुपचारपरुषवचनादिर्वाङ्मिथ्यायोगः,**

**सूचक-अनृत-** ચાડી ખાવી–અસત્ય ભાષણ કરવું चुगली करना झूंठ बोलना, **अकाल–कलह-** વિના કારણે કલહ કરવો **विना** कारणके झगडना, **अप्रिय–अबद्ध–अनुपचार–परुष–वचनादिः** અપ્રિય- અસંબદ્ધ- પ્રતિકૂળ **અને** કઠોર વચનો વગેરે अप्रिय - असंबद्ध - प्रतिकूल **और** कर्कश वाक्य इत्यादि, **वाक्–मिथ्यायोगः** વાણીનો મિથ્યાયોગ છે वाणीका मिथ्यायोग है;

39-(3). Misuse with reference to speech is indulgence in language that is insinuating, untrue, untimely, quarrelsome, unpleasant, incoherent, unhelpful, harsh etc.

**भयशोकक्रोधलोभमोहमानेर्ष्यामिथ्यादर्शनादिर्मानसो मिथ्यायोगः ॥ ३९ ॥**

**भय-शोक-क्रोध-लोभ-मोह-मान-ईर्ष्या-मिथ्यादर्शनादिः** ભય-શોક-ક્રોધ-લોભ-મોહ-અહંકાર-ઈર્ષ્યા અને મિથ્યાજ્ઞાન વગેરે भय-शोक-क्रोध-लोभ-मोह-अहङ्कार-ईर्ष्या और मिथ्याज्ञान आदि, **मानसः मिथ्यायोगः** એ માનસિક મિથ્યાયોગ છે यह मानस मिथ्यायोग है ॥ ३९ ॥

39. Misuse with reference to the mind, consists of giving way to fear, grief, anger, greed, infatuation, self-conceit, envy, deluded thinking etc.

**संग्रहेण चातियोगायोगवर्जं कर्म वाङ्मनःशरीरजमहितमनुपदिष्टं यत्तच्च मिथ्यायोगं विद्यात् ॥४०॥**

**संग्रहेण च** અને સંક્ષેપમાં ओर संक्षेपमें, **अतियोग-** અતિયોગ अतियोग, **अयोगवर्जम** અને અયોગને તજીને और अयोगको छोड़कर, **वाक** વાણી वाणी, **मनः-** મન मन, **शरीरजम** અને શરીરથી કરવામાં આવતું **और** शरीरसे किया जानेवाला, **अहितम** અહિતકર अहितकर. **अनुपदिष्टम** અને શાસ્ત્રે નહિ કહેલું ओर अशास्त्रविहित, **यत् कर्म** જે કર્મ जो कर्म, **तत च** તેને **उसे, मिथ्यायोगम** મિથ્યાયોગ मिथ्यायोग **विद्यात** જાણવો जानना चाहिए ॥ ४० ॥

40. In brief, all activity of speech, mind and body, which, while not coming under overuse and disuse, is unwholesome, though it may not have been specifically mentioned here, should be known as misuse.

**इति त्रिविधविकल्पं त्रिविधमेव कर्म प्रज्ञापराध इति व्यवस्येत् ॥ ४१ ॥**

**इति** આમ इस प्रकार, **त्रिविध-** ત્રણ જાતના **तीन** प्रकारके, **विकल्पम्** ભેદવાળું भेदवाला, **त्रिविधम् एव** ત્રણે પ્રકારનું तीन ही प्रकारका, **कर्म** કર્મ कर्म, **प्रज्ञापराधः** પ્રજ્ઞાપરાધ છે प्रज्ञापराध है, **इति** એમ ऐसा, **व्यवस्येद** નિશ્ચિત જાણવું निश्चयसे जानना चाहिए ॥ ४१ ॥

41. In this manner the threefold activity (that is pertaining either to speech, mind or body) falling under the three heads of overuse, disuse and misuse, should be regarded as volitional transgression.

युक्तस्य कालस्य लक्षणम्—

**शीतोष्णवर्षलक्षणाः पुनर्हेमन्तग्रीष्मवर्षाः संवत्सरः, स कालः ।**

**शीत-** શીત शीत, **उष्ण-** ઉષ્ણ उष्ण, **वर्षलक्षणाः** અને વર્ષાથી ઉપલક્ષિત **और** वर्षासे उपलक्षित, **हेमन्त-**

हेमन्त हेमन्त, ग्रीष्म- ગ્રીષ્મ ग्रीष्म, वर्षाः पुनः અને વર્ષારૂપ और वर्षारूप, संवत्सरः સંવત્સર છે संवत्सर है, सः कालः અને તે કાલ કહેવાય છે और वह काल कहाता है;

42-(1) The year consists of the three periods of Winter, Summer and the Rains, characterised respectively by cold, heat and wetness. This constitutes time.

**तत्रातिमात्रस्वलक्षणः कालः कालातियोगः, हीनस्वलक्षणः (कालः)कालायोगः, यथास्वलक्षण-विपरीतलक्षणस्तु (कालः) कालमिथ्यायोगः। कालः पुनः परिणाम उच्यते ॥ ४२ ॥**

तत्र अतिमात्र-स्वलक्षणः પોતાનાં અધિક લક્ષણોવાળો अपने लक्षणोंसे अधिक लक्षणोंवाला, कालः જે કાલ जो काल, कालातियोगः તે કાલનો અતિયોગ છે वह कालका अतियोग है, हीनस्वलक्षणः (कालः) પોતાનાં ન્યૂન લક્ષણોવાળો જે કાલ अपने लक्षणोंसे न्यून लक्षणोंवाला जो काल, कालायोगः એ કાળનો અયોગ છે वह कालका अयोग है, यथास्वलक्षण- પોતાનાં લક્ષણોથી और अपने लक्षणोंसे, विपरीतलक्षणः तु વિપરીત લક્ષણોવાળો જે विपरीत लक्षणोंवाला जो, कालः કાલ काल, काल-मिथ्या-योगः એ કાલનો મિથ્યાયોગ છે वह कालका मिथ्यायोग है, कालः पुनः કાળ વળી काल फिर, परिणामः પરિણામ પણ કહેવાય છે परिणाम भी कहा जाता है ॥ ४२ ॥

42. Now if a season is marked with an exaggeration of its characteristics, it is spoken of as "seasonal excess"; if it is marked with a deficiency of its traits, it is spoken of as "seasonal deficiency"; and if the season is marked with traits that are contrary to its true nature, then it is spoken of as "Seasonal abnormality".

Time is also spoken of as "Change".

४२. यथास्व—यथास्वम् (प.)

रोगायतनोपसंहारः—

**इत्यसात्म्येन्द्रियार्थसंयोगः, प्रज्ञापराधः, परिणामश्चेति त्रयस्त्रिविधविकल्पा हेतवो विकाराणां; समयोगयुक्तास्तु प्रकृतिहेतवो भवन्ति ॥ ४३ ॥**

इति આ પ્રમાણે इस प्रकार, असात्म्येन्द्रियार्थ-संयोगः અસાત્મ્ય-ઇન્દ્રિયાર્થસંયોગ असात्म्य-इन्द्रियार्थ संयोग, प्रज्ञापराधः પ્રજ્ઞાપરાધ प्रज्ञापराध, परिणामः च અને પરિણામ और परिणाम, इति त्रयः એ ત્રણ ये तीन, त्रिविध-विकल्पाः ત્રણ પ્રકારના ભેદોવાળા થઈ मिथ्या-योग-अयोग तथा अतियोग इन तीन प्रकारके भेदवाले होकर, विकाराणाम् રોગોનાં रोगोंके, हेतवः કારણો અને છે कारण होते हैं, समयोग युक्ताः तु પરંતુ સમયોગમાં પ્રયુક્ત કરવાથી परन्तु समान योगमें प्रयुक्त होने पर, प्रकृति-हेतवः એ ત્રણે આરોગ્યનાં કારણ प्रकृतिके कारण, भवन्ति થાય છે होते हैं ॥४३॥

43. Thus these three i.e. non-homologatory contact of senses and their objects, volitional transgression and change, each subdivided again into three, constitute the causes for disease. Right co-ordination, on the other hand, is the cause of well-being.

सर्वेषामेव वस्तूनां भावाभावौ योगाद्यपेक्षिणौ—

**सर्वेषामेव भावानां भावाभावौ नान्तरेण योगायोगातियोगमिथ्यायोगान् समुपलभ्येते; यथास्वयुक्त्यपेक्षिणौ हि भावाभावौ ॥ ४४ ॥**

सर्वेषाम् एव બધાયે संपूर्ण, भावानाम् વસ્તુઓનાં वस्तुओंके, भाव-अभावौ અસ્તિત્વ અને અભાવ होना और न होना, योग- યોગ योग, अयोग- અયોગ अयोग, अतियोग- અતિયોગ अतियोग, मिथ्यायोगान् અને મિથ્યાયોગ और मिथ्यायोगके, अन्तरेण વિના बिना, न--समुपलभ्येते હોતા નથી नहीं होते, भावाभावौ हि કારણકે પ્રત્યેક વસ્તુની સ્થિતિ અને વિનાશ क्योंकि प्रत्येक वस्तुकी स्थिति और विनाश, यथास्व- પોતપોતાના કારણના अपने अपने कारणके, युक्ति-अपेक्षिणौ યોગની અપેક્ષા રાખે છે योगकी अपेक्षा करते हैं ॥ ४४ ॥

४४. युक्त्यपेक्षिणौ हि भावाभावौ—युक्त्यपेक्षिणो हि भावाभावाः (ग.)

44. The well-being or ill-being of anything is never independent of right co-ordination in the one case; and absent, excessive or wrong co-ordination in the other; for well-being and ill-being depend on the presence of their respective causative factors.

त्रयो रोगाः—

**त्रयो रोगा इति–निजागन्तुमानसाः। तत्र निजः शारीरदोषसमुत्थः, आगन्तुर्भूतविषवाय्वग्निसंप्रहारादिसमुत्थः, मानसः पुनरिष्टस्य लाभाल्लाभाच्चानिष्टस्योपजायते ॥ ४५ ॥**

**निज–आगन्तु–मानसाः** નિજ- આગન્તુક અને માનસ निज- आगन्तुक और मानस, **इति** એ પ્રમાણે इस प्रकार, **त्रयः** ત્રણ પ્રકારના तीन प्रकारके, **रोगाः** રોગો છે रोग हैं, **तत्र**- તેમાં इनमें, **निजः** નિજ રોગ निजरोग, **शारीरदोष**- શરીરના દોષોથી शरीरके दोषोंसे, **समुत्थः** ઉત્પન્ન થયેલો હોય છે उत्पन्न होता है, **आगन्तुः** આગન્તુક રોગ आगन्तुक रोग, **भूत**- ભુત भूत, **विष**- વિષ विष, **वायु**- વાયુ वायु, **अग्नि**- અગ્નિ अग्नि, **संप्रहारादिसमुत्थः** અને અભિઘાત વગેરેથી ઉત્પન્ન થયેલો હોય છે और चोट आदिसे उत्पन्न होता है, **मानसः पुनः** અને માનસરોગ વળી और मानसरोग तो, **इष्टस्य** પ્રિય વસ્તુના प्रिय वस्तुके, **लाभात्** લાભથી लाभसे, **अनिष्टस्य च** અને અપ્રિય વસ્તુના और अप्रिय वस्तुके, **लाभात्** લાભથી लाभसे, **उपजायते** ઉત્પન્ન થાય છે उत्पन्न होता है ॥ ४५ ॥

45. Regarding the three types of disease, they are endogenous, exogenous and psychic. Among these the endogenous disease is that arising from the discordance of the bodily humors, and the exogenous from spirit-possession, poisonous winds, fire, injuries etc; while the psychic disorders arise from the gain or loss of undesirable or desirable things.

मानसव्याधेः प्रतिकारः —

**तत्र बुद्धिमता मानसव्याधिपरीतेनापि सता बुद्ध्या हिताहितमवेक्ष्यावेक्ष्य धर्मार्थकामानामहितानामनुपसेवने हितानां चोपसेवने प्रयतितव्यं, न ह्यन्तरेण लोके त्रयमेतन्मानसं किञ्चिन्निष्पद्यते सुखं वा दुःखं वा;**

**तत्र** એઓમાં इनमें **मानस–व्याधि**- માનસિક વ્યાધિથી मानसिक रोगसे, **परीतेन अपि सता** યુક્ત હોવા છતાં પણ पीडित होने पर भी, **बुद्धिमता** બુદ્ધિમાન પુરુષે बुद्धिमान पुरुष, **बुद्ध्या** બુદ્ધિથી बुद्धिसे, **हित–अहितम्** હિત અને અહિતને हित और अहितका, **अवेक्ष्य अवेक्ष्य** વારંવાર વિચાર કરી अच्छी प्रकार विचार करके, **धर्म-अर्थ-कामानाम्** ધર્મ- અર્થ અને કામને धर्म-अर्थ-और कामके **अहितानाम्** જે અહિતકર હોય जो अहितकर हों, **अनुपसेवने** તેઓના ત્યાગમાં इनका सेवन न करनेमें, **हितानाम् च** તથા જે હિતકર હોય और जो हितकर हों, **उपसेवने** તેઓના સેવનમાં इनके सेवनमें, **प्रयतितव्यम्** પ્રયત્ન કરવો જોઈએ प्रयत्न करे, **लोके** લોકમાં ससारमें, **एतत् त्रयम्** આ ત્રણ इन तीनके, **अन्तरेण** વિના विना, **किंचित्** કાંઈ પણ थोडासा भी, **मानसम्** માનસિક मानसिक, **सुखं वा दुःखं वा** સુખ કે દુઃખ सुख या दुःख, **न निष्पद्यते** નીપજતું નથી नहीं होता;

46-(1) Now the intelligent man when he finds himself afflicted with even psychic diseases, should, with right understanding, examine over and over again as to what is wholesome and what is unwholesome. He should then endeavour to abstain from whatever is not conducive to virtue, wealth and pleasure, and devote himself to such action as is conducive to the use of these three objectives. For, outside these three objectives of life there is nothing in the world which is capable of giving pleasure or pain to the mind.

**तस्मादेतच्चानुष्ठेयं—तद्विद्यानां चोपसेवने प्रयतितव्यम्, आत्मदेशकुलकालबलशक्तिज्ञाने यथावच्चेति ॥ ४६ ॥**

तस्मात् च તેથી इस लिए, एतत् એ પ્રમાણે उस प्रकार, अनुष्ठेयम् વર્તવું જોઈએ बर्ताव करे, तद्विद्यानाम् च અને તે વિષયોના જ્ઞાતાઓની उस विषयके जाननेवालोंकी, उपसेवने સેવા કરવામાં सेवामें, आत्म- તથા આત્મા और आत्मा, देश- દેશ देश, कुल- કુલ कुल, काल- કાળ काल, बल- બળ बल, शक्ति- તથા શક્તિનું तथा शक्तिका, ज्ञाने જ્ઞાન મેળવવામાં ज्ञान प्राप्त करनेमें, यथावत् સંપૂર્ણ રીતે पूर्ण रूपसे, प्रयतितव्यम् इति પ્રયત્ન કરવો જોઈએ प्रयत्न करना चाहिए ॥ ४६ ॥

46. Hence one should conduct oneself in the above manner. One should strive to court the association of those learned in the knowledge of good and evil and also do one's best to acquire the knowledge about one's own self, country, family, age, vitality and ability.

**भवति चात्र—**

**मानसं प्रति भैषज्यं त्रिवर्गस्यान्ववेक्षणम् ।**
**तद्विद्यसेवा विज्ञानमात्मादीनां च सर्वशः ॥ ४७ ॥**

अत्र च આ વિષયમાં इस विषयमें, भवति શ્લોક છે કે श्लोक है कि, त्रिवर्गस्य ધર્મ-અર્થ અને કામનું धर्म-अर्थ और कामको, अन्ववेक्षणम् વિચારપૂર્વક અનુષ્ઠાન बार बार विचारना, तद्विद्यसेवा તે વિદ્યા જાણનારાઓની સેવા કરવી इस विद्याके जाननेवालोंकी सेवा करना, आत्मादीनाम् च અને આત્મા-દેશ-વગેરેનું और आत्मा आदिका, सर्वशः સંપૂર્ણ सम्पूर्ण, विज्ञानम् જ્ઞાન ज्ञान, मानसम् प्रति માનસરોગ પ્રત્યેનું मानस रोगोंकी, भैषज्यम् ઔષધ છે औषध है ॥ ४७ ॥

Here is a verse again:—

47. Contemplating the three objectives of life, service of those who are versed in the knowledge concerning these three objectives, and the knowledge of one's own self etc. in all respects, constitute the remedy for psychic disorders.

त्रयो रोगमार्गाः—

**त्रयो रोगमार्गा इति—शाखा, मर्मास्थिसन्धयः, कोष्ठश्च ।**

शाखाः શાખાઓ शाखायें, मर्म- મર્મો मर्म, अस्थिसन्धयः અસ્થિસંધિઓ अस्थिसन्धियां, कोष्ठः च તથા કોઠો और कोष्ठ, इति એ ये, त्रयः ત્રણ तीन, रोगमार्गाः રોગના માર્ગો છે रोगोंके मार्ग हैं;

48-(1). Regarding the three systems for the occurrence of disease, they are—(1) The peripheral system, (2) the vital parts and the bone. joints and (3) the alimentary tract.

**तत्र शाखा रक्तादयो धातवस्त्वक् च, स बाह्यो रोगमार्गः;**

तत्र તેમાં इनमें, रक्तादयः રક્ત વગેરે रक्तादि, धातवः ધાતુઓ धातु, त्वक् च અને ત્વચા तथा त्वचा, शाखाः એ શાખા છે ये शाखायें हैं, सः તે वह, बाह्यः रोगमार्गः બાહ્ય રોગમાર્ગ છે बाह्य रोगमार्ग है;

48-(2). Among these, the peripheral system consists of such body elements as the blood etc., and the skin. This is the external system for the occurrence of disease.

**मर्माणि पुनर्बस्तिहृदयमूर्धादीनि, अस्थिसन्धयोऽस्थिसंयोगास्तत्रोपनिबद्धाश्च स्नायुकण्डराः, स मध्यमो रोगमार्गः;**

बस्ति- બસ્તિ बस्ति, हृदय- હૃદય हृदय, मूर्धादीनि અને મૂર્ધા વગેરે तथा मूर्धा आदि, पुनः मर्माणि એ મર્મ છે मर्म हैं, अस्थि–संयोगाः અસ્થિઓના સંયોગો अस्थियोंके संयोग, तत्र અને તેમાં और इनमें, उपनिबद्धाः

४६. तद्विद्यानाम्—तद्विद्यवृद्धानाम् (क.)

४८. कण्डराः—कण्डराः सिरादयश्च (ग.)

भेगायेल जुडे हुए, स्नायुकण्डराः च स्नायुकंडराओ स्नायु और कण्डरायें, अस्थिसन्धयः अेओ अस्थिसंधिओ छे अस्थिसन्धियां हैं, सः ते वह, मध्यमः रोगमार्गः मध्यम रोगमार्ग छे मध्यम रोगमार्ग है;

48-(3). The vital parts are again, the viscera contained in the abdomino-pelvic, the thoracic and cranial cavities etc., while the bone joints are the articulations of bones and the tendons and sinews covering these parts. This represents the medial system for the occurrence of disease.

**कोष्ठः पुनरुच्यते महास्रोतः शरीरमध्यं महानिम्नमामपक्वाशयश्चेति पर्यायशब्दैस्तन्त्रे, स रोगमार्ग आभ्यन्तरः ॥ ४८ ॥**

तन्त्रे आ तंत्रमां इस तन्त्रमें, कोष्ठः पुनः कोठो तो कोष्ठ तो, महास्रोतः महास्रोत महास्रोत, शरीरमध्यम् शरीरनो मध्य भाग शरीरका मध्यभाग, महानिम्नम् महानिम्न महानिम्न, आमपक्वाशयः च तथा आमपक्वाशय और आमपक्वाशय, इति ओ इन, पर्यायशब्दैः पर्याय शब्दोथी पर्याय शब्दोंसे, उच्यते कहेवाय छे कहा गया है, सः ते वह, आभ्यन्तरः रोगमार्गः आभ्यन्तर रोगमार्ग छे आभ्यन्तर रोगमार्ग है ॥४८॥

48. As regards the central system which is referred to in medical parlance by such synonymous terms as the great channel, the central part of the body, the great cavity, and the seat of digestion and assimilation, this is the internal system for the occurrence of disease.

**तत्र, गण्डपिडकालज्यपचीचर्मकीलाधिमांसमषककुष्ठव्यङ्गादयो विकारा बहिर्मार्गजाश्च विसर्पश्वयथुगुल्मार्शोविद्रध्यादयः शाखानुसारिणो भवन्ति रोगाः;**

तत्र तेमां इनमें, गण्ड- गंड गण्ड, पिडका पिडका- पिडका, अलजी- अलजी अलजी, अपची- अपची अपची, चर्मकील- चर्मकील चर्मकील, अधिमांस- अधिमांस अधिमांस, मषक- मषक मषक, कुष्ठ- कुष्ठ कुष्ठ, व्यङ्गादयः विकाराः व्यंग वगेरे रोगो व्यंग आदि रोग, बहिर्मार्गजाः च अने बाह्यमार्गथी उत्पन्न थनारा और बाह्य मार्गसे होनेवाले, विसर्प विसर्प विसर्प, श्वयथुः सोजो शोथ, गुल्म- गुल्म गुल्म, अर्शः अर्श अर्श, विद्रध्यादयः अने विद्रधि वगेरे एवं विद्रधि आदि, शाखानुसारिणः शाखानुसारी शाखाओंमें फैलनेवाले, रोगाः रोगो रोग, भवन्ति थाय छे होते हैं;

49-(1). Among these, tumours, pimples, boils, scrofula, warts, granuloma, moles, dermic lesions, freckles and similar lesions, as well as the external types of acute spreading affections, edema, gulma, piles, abscesses and similar diseases are instances of the diseases occuring in the peripheral system of the body.

**पक्षवधग्रहापतानकार्दितशोषराजयक्ष्मास्थिसन्धिशूलगुदभ्रंशादयः शिरोहृद्बस्तिरोगादयश्च मध्यममार्गानुसारिणो भवन्ति रोगाः;**

पक्षवध- पक्षवध पक्षवध, ग्रह- पक्षग्रह पक्षग्रह, अपतानक- अपतानक अपतानक, अर्दित- अर्दित अर्दित, शोष- धातुशोष शोष, राजयक्ष्म- राजयक्ष्मा राजयक्ष्मा, अस्थि-सन्धिशूल- अस्थि-सन्धिशूल अस्थिसन्धिशूल, गुदभ्रंशादयः गुदभ्रंश वगेरे गुदभ्रंश आदि, शिरः- शिरोरोग शिरोरोग, हृद्- हृद्रोग हृद्रोग, बस्तिरोगादयः च अने बस्तिरोग वगेरे और बस्तिरोग आदि, मध्यममार्गानुसारिणः मध्यममार्गानुसारी मध्यम मार्गमें फैलनेवाले, रोगाःभवन्ति रोगो थाय छे रोग होते हैं;

49-(2). Hemiplegia, tonic and chronic convulsions, facial paralysis, wasting, consumption, pain in bone-joints, prolapse of rectum and similar conditions, as well as the disease of the viscera contained in the cranial, and

thoracic abdomino-pelvic cavities are the diseases that occur in the medial system.

**ज्वरातीसारच्छर्द्यलसकविसूचिकाकासश्वासहिक्कानाहोदरप्लीहादयोऽन्तर्मार्गजाश्च विसर्पश्वयथुगुल्मार्शोविद्रध्यादयः कोष्ठानुसारिणो भवन्ति रोगाः ॥ ४९ ॥**

**ज्वर-** જ્વર ज्वर, **अतीसार-** અતીસાર अतीसार, **छर्दि-** ઉલટી छर्दि, **अलसक-** અલસક अलसक, **विसूचिका-** વિસૂચિકા विसूचिका, **कास-** કાસ कास, **श्वास-** શ્વાસ श्वास, **हिक्का** હિક્કા हिक्का, **आनाह** આનાહ आनाह, **उदर-** ઉદરરોગ उदररोग, **प्लीहादयः** પ્લીહા વગેરે રોગો प्लीहा आदि रोग, **अन्तर्मार्गजाः च** તથા અન્તર્માર્ગથી ઉત્પન્ન થનાર तथा अन्तर्मार्गसे उत्पन्न होनेवाले, **विसर्प-** વિસર્પ विसर्प, **श्वयथु-** શોથ शोथ, **गुल्म-** ગુલ્મ गुल्म, **अर्शः-** અર્શ अर्श, **विद्रध्यादयः** અને વિદ્રધિ આદિ विद्रधि आदि, **रोगाः** રોગો रोग, **कोष्ठानुसारिणः** કોષ્ઠાનુસારી कोष्ठमें फैलनेवाले, **भवन्ति** થાય છે होते हैं ॥ ४९ ॥

49. Fever, diarrhoea, vomiting, intestinal torpor, acute intestinal irritations, cough, dyspnea, hiccup, constipation, abdominal affection, splenic disorders etc., as well as the internal types of acute spreading affections are instances of diseases that occur in the internal or central system of the body.

त्रिविधा भिषजः—

**त्रिविधा भिषज इति—**

**भिषक्छद्मचराः सन्ति सन्त्येके सिद्धसाधिताः ।**
**सन्ति वैद्यगुणैर्युक्तास्त्रिविधा भिषजो भुवि ॥५०॥**

**त्रिविधाः** ત્રણ પ્રકારના तीन प्रकारके, **भिषजः इति** વૈદ્યો હોય છે चिकित्सक होते हैं, **एके** કેટલાએક कोई, **भिषक्छद्मचराः** ભિષક્છદ્મચર भिषक्छद्मचर, **सन्ति** હોય છે होते हैं, **सिद्धसाधिताः** કોઈ સિદ્ધસાધિત कोई सिद्धसाधित, **सन्ति** હોય છે होते हैं, **वैद्यगुणैः** અને કેટલાએક વૈદ્યના ગુણોથી और कोई वैद्यके गुणोंसे, **युक्ताः** સંપન્ન युक्त, **सन्ति** હોય છે होते हैं, **भुवि** આ પ્રમાણે આ સંસારમાં इस तरह इस संसारमें, **त्रिविधाः** ત્રણ પ્રકારના तीन प्रकारके, **भिषजः** વૈદ્યો હોય છે चिकित्सक होते हैं ॥ ५० ॥

50. Regarding the three kinds of physicians, three kinds of medical practitioners are found in the world; firstly, the impostors in physician's robes, secondly, the vain-glorious pretenders and thirdly, those endowed with the true virtue of the healer.

**वैद्यभाण्डौषधैः पुस्तैः पल्लवैरवलोकनैः ।**
**लभन्ते ये भिषक्शब्दमज्ञास्ते प्रतिरूपकाः ॥५१॥**

**वैद्यभाण्ड-** વૈદ્યોનાં પાત્રો वैद्योंके पात्र, **औषधैः** ઔષધો औषध, **पुस्तैः** વૈદ્યકગ્રન્થો वैद्यकग्रन्थों, **पल्लवैः** વાગ્જાળ वाग्जाल, **अवलोकनैः** અને ચતુરાઈથી તપાસવાનો ડોળ એઓથી और चतुराईसे परीक्षाका दिखावा इन द्वारा, **ये अज्ञाः** જે અજ્ઞાનીઓ जो मूढ, **भिषक्शब्दम्** વૈદ્યસંજ્ઞાને वैद्यसंज्ञाको, **लभन्ते** પ્રાપ્ત કરે છે पाते हैं, **ते** તેઓ वे, **प्रतिरूपकाः** નકલી વૈદ્યો છે भिषक्छद्मचर हैं ॥ ५१ ॥

51. Those who by parading their medical paraphernalia, books, models, smattering of medical texts and knowing looks acquire the title of physician, are the first kind, viz., the ignoramuses and impostors.

**श्रीयशोज्ञानसिद्धानां व्यपदेशादतद्विधाः ।**
**वैद्यशब्दं लभन्ते ये ज्ञेयास्ते सिद्धसाधिताः ॥५२॥**

**ये** જે મનુષ્યો जो मनुष्यों, **अतद्विधाः** લક્ષ્મી, યશ અને જ્ઞાનથી રહિત હોવા છતાં लक्ष्मी, यश व ज्ञानसे रहित होने पर भी, **श्री-** લક્ષ્મી लक्ष्मी, **यशः-** યશ यश, **ज्ञान-** અને જ્ઞાનથી तथा ज्ञानसे, **सिद्धानाम्** પ્રસિદ્ધ વૈદ્યોના प्रसिद्ध वैद्योंके, **व्यपदेशात्** નામે नामसे, **वैद्य- शब्दम्** 'વૈદ્ય' એ શબ્દને 'वैद्य' ऐसी संज्ञाको,

लभन्ते મેળવી લે છે प्राप्त कर लेते हैं, તે તેઓ उनको, सिध्दसाधिताः સિદ્ધસાધિત सिध्दसाधित, ज्ञेयाः જાણવા जानना चाहिए ॥ ५२ ॥

52. Those who by laying claim to association with persons of established wealth, fame, knowledge and success, while they themselves have none of these things, arrogate to themselves the designation of physicians, are the vain-glorious pretenders.

प्रयोगज्ञानविज्ञानसिद्धिसिद्धाः सुखप्रदाः ।
जीविताभिसरास्ते स्युर्वैद्यत्वं तेष्ववस्थितम् "इति ५३

(ये જે વૈદ્યો जो चिकित्सक), प्रयोग- ઔષધના પ્રયોગમાં औषधादि प्रयोगमें, ज्ञान- શાસ્ત્રના જ્ઞાનમાં शास्त्रज्ञानमें, विज्ञान- વિજ્ઞાનમાં विज्ञानमें, सिद्धि- અને ચિકિત્સાની સફળતામાં चिकित्साकी सफलतामें, सिद्धाः પ્રસિદ્ધ હોય प्रसिद्ध हों, सुखप्रदाः તથા આરોગ્ય આપનાર હોય और सुख देनेवाले हों, ते તેઓજ वे ही, जीविताभिसराः પ્રાણદાતા प्राणोंके देनेवाले, स्युः થાય છે होते हैं, तेषु અને તેઓમાંજ और उन्हींमें, वैद्यत्वम् વૈદ્યત્વ वैद्यत्व, अवस्थितम् इति રહેલું છે स्थित है ॥५३॥

53. Those who are accomplished in application, theory, knowledge of allied sciences, and success of treatment are the true healers. In them is the glory of the physician fully manifest.

त्रिविधमौषधम्--

त्रिविधमौषधमिति–दैवव्यपाश्रयं, युक्तिव्यपाश्रयं, सत्त्वावजयश्च ।

दैवव्यपाश्रयम् દૈવવ્યપાશ્રય दैवव्यपाश्रय, युक्तिव्यपाश्रयम् યુક્તિવ્યપાશ્રય युक्तिव्यपाश्रय, सत्त्वावजयः च અને મનોનિગ્રહ और सत्त्वावजय, इति આ પ્રમાણે इस प्रकार, त्रिविधम् ત્રણ પ્રકારનું तीन प्रकारकी, औषधम् ચિકિત્સા છે चिकित्सा है;

54-(1). Regarding the three kinds of therapy, they are divine therapy, scientific therapy and mental control.

तत्र दैवव्यपाश्रयं–मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादि,

तत्र તેમાં उनमें, मन्त्र- મન્ત્ર मन्त्र, औषधि- ઔષધિ औषधि, मणि- મણિધારણ मणिधारण, मंगल- મંગલકર્મ मांगलिक कर्म, बलि- उपहार- બલિદાન बलिदान, होम- હોમ होम, नियम- નિયમ नियम, प्रायश्चित्त- પ્રાયશ્ચિત્ત प्रायश्चित्त, उपवास- ઉપવાસ उपवास, स्वस्त्ययन- સ્વસ્તિવાચન स्वस्तिवाचन, प्रणिपात-गमनादि પૂજ્યોને પ્રણામ અને તીર્થગમન વગેરે अपनेसे बडों और पूज्योंको नमस्कार व तीर्थगमनादि, दैव–व्यपाश्रयम् એ દૈવવ્યપાશ્રય ઔષધ છે यह दैवव्यपाश्रय चिकित्सा है,

54-(2). Amongst these, divine therapy consists of incantations, herbs, gems, propitiatory rites, oblations and offerings, sacrifice, vows, ceremonial penitence, fasting, auspicious rites, prostrations, pilgrimages and such other things.

युक्तिव्यपाश्रयं—पुनराहारौषधद्रव्याणां योजना,

आहार- આહાર आहार, औषध-द्रव्याणाम् तथा ઔષધદ્રવ્યોની तथा औषधद्रव्योंका, योजना पुनः યથાવત્ યોજનાને यथावत् प्रयोग करना यह, युक्तिव्यपाश्रयम् યુક્તિવ્યપાશ્રય ચિકિત્સા કહે છે युक्तिव्यपाश्रय चिकित्सा है,

54-(3). Scientific therapy consists of the prescription of the line of dietetic regimen and medication.

सत्त्वावजयः—पुनरहितेभ्योऽर्थेभ्यो मनोनिग्रहः ॥ ५४ ॥

अहितेभ्यः અહિતકર अहितकर, अर्थेभ्यः વિષયોથી विषयोंसे, मनो-निग्रहः पुनः મનનો નિગ્રહ કરવાને मनको रोकना यह, सत्त्वावजयः સત્ત્વાવજય ચિકિત્સા કહે છે सत्त्वावजय चिकित्सा है ॥ ५४ ॥

५४. मङ्गलबल्युपहारहोम–मङ्गलहोम (च.)
५४. आहारौषध–आहारविहारौषध (छ.)

54. Mental control consists of restraining the mind from the desire for unwholesome objects.

**शरीरदोषप्रकोपे खलु शरीरमेवाश्रित्य प्रायशस्त्रिविधमौषधमिच्छन्ति—अन्तःपरिमार्जनं, बहिःपरिमार्जनं, शस्त्रप्रणिधानं चेति ।**

**शरीर-दोष-** શારીરિક દોષો शारीरिक दोषोंके, **प्रकोपे खलु** પ્રકોપ પામે ત્યારે प्रकुपित होने पर, **शरीरम् एव** શરીરનો જ शरीरका ही, **आश्रित्य** આશ્રય કરીને आश्रय करके, **प्रायशः** પ્રાયઃ प्रायः, **अन्तःपरिमार्जनम्** અંતઃપરિમાર્જન अन्तःपरिमार्जन, **बहिःपरिमार्जनम्** બહિઃપરિમાર્જન बहिःपरिमार्जन, **शस्त्रप्रणिधानम् च** અને શસ્ત્રપ્રણિધાન और शस्त्रप्रणिधान, **इति** એમ इस प्रकार, **त्रिविधम्** ત્રણ પ્રકારની तीन प्रकारकी, **औषधम्** ચિકિત્સાને चिकित्सा, **इच्छन्ति** કરવા ઇચ્છે છે करना चाहते हैं।

55-(1). When the humors in the body have become morbid and provoked, three kinds of therapeutic measures are mainly recommended, namely, internal purification, external purification and operative treatment.

**तत्रान्तःपरिमार्जनं यदन्तःशरीरमनुप्रविश्यौषधमाहारजातव्याधीन् प्रमार्ष्टि,**

**तत्र** તેમાં उनमें, **यत्** જે जो, **औषधम्** ઔષધ औषध, **अन्तःशरीरम्** શરીરની અંદર शरीरके अन्दर, **अनुप्रविश्य** પ્રવેશ કરીને प्रविष्ट होकर, **आहारजात-** આહારથી ઉત્પન્ન થયેલા आहारसे उत्पन्न, **व्याधीन्** રોગોને रोगोंको, **प्रमार्ष्टि** નષ્ટ કરે છે नष्ट करती है, (**तत्** તે वह), **अन्तःपरिमार्जनम्** અન્તઃપરિમાર્જન છે अन्तःपरिमार्जन कहलाती है,

55-(2). Of them that procedure wherein medicine taken internally cures the disorders born of dietetic faults, is internal purification.

**यत्पुनर्बहिःस्पर्शमाश्रित्याभ्यङ्गस्वेदप्रदेहपरिषेकोन्मर्दनाद्यैरामयान् प्रमार्ष्टि तद्बहिःपरिमार्जनं,**

**यत् पुनः** જે ઔષધ जो औषध, **अभ्यङ्ग-** અભ્યંગ अभ्यङ्ग, **स्वेद-** સ્વેદ स्वेद, **प्रदेह-** પ્રદેહ प्रदेह, **परिषेक-** પરિષેક परिषेक, **उन्मर्दनाद्यैः** તથા ઉન્મર્દન વગેરેથી और उन्मर्दन आदिसे, **बहिःस्पर्शम्** બાહ્યસ્પર્શને બાહ્યસ્પર્શકો, **आश्रित्य** આશ્રય કરીને आश्रित होकर, **आमयान्** રોગોને रोगोंको, **प्रमार्ष्टि** નષ્ટ કરે છે शान्त करती है, **तत्** તે उसे, **बहिःपरिमार्जनम्** બહિઃપરિમાર્જન ઔષધ છે बहिःपरिमार्जन औषध कहते हैं;

55-(3). And that procedure which cures the disorders of the body, and consists of inunction, sudation, application, affusion, massage etc, applied to the external surface of the body, is external purification.

**शस्त्रप्रणिधानं पुनश्छेदनभेदनव्यधनदारणलेखनोत्पाटनप्रच्छनसीवनैषणक्षारजलौकसश्चेति ॥५५॥**

**छेदन-** છેદન छेदन, **भेदन-** ભેદન भेदन, **व्यधन-** વ્યધન व्यधन, **दारण-** દારણ दारण, **लेखन-** લેખન लेखन, **उत्पाटन-** ઉત્પાટન उत्पाटन, **प्रच्छन-** પ્રચ્છન प्रच्छन, **सीवन-** સીવણ सीवन, **एषण-** એષણ एषण, **क्षार-** ક્ષારપ્રયોગ क्षारप्रयोग, **जलौकसः च पुनः** અને જલૌકાપ્રયોગ और जलौकाप्रयोग, **इति** એ यह, **शस्त्रप्रणिधानम्** શસ્ત્રપ્રણિધાન છે शस्त्रप्रणिधान है ॥५५॥

55. The procedures of excision, incision, puncturing, rupturing, erasion, eradication, plastic operation, suturing and sounding as well as the application of caustics and leeches constitute operative treatment.

प्राज्ञाज्ञरोगिणोर्लक्षणम्—

**भवन्ति चात्र—**

**प्राज्ञो रोगे समुत्पन्ने बाह्येनाभ्यन्तरेण वा ।**
**कर्मणा लभते शर्म शस्त्रोपक्रमणेन वा ॥५६॥**

५५. क्षार—क्षाराग्नि (क. ग.)

अत्र च આ વિષયમાં इस विषयमें, भवन्ति શ્લોકો છે કે श्लोक हैं कि, रोगे રોગ रोग, समुत्पन्ने ઉત્પન્ન થતાં उत्पन्न होनेपर, प्राज्ञः ડાહ્યો માણસ बुद्धिमान पुरुष, बाह्येन બાહ્ય કર્મથી बाह्य कर्मसे, आभ्यन्तरेण वा અથવા આભ્યન્તર કર્મથી या आभ्यन्तर कर्मसे, शस्त्रोपक्रमणेन वा અથવા શસ્ત્રપ્રણિધાનરૂપ या शस्त्रप्रणिधानरूप, कर्मणा કર્મથી कर्मसे, शर्म આરોગ્ય आरोग्य, लभते મેળવે છે प्राप्त करता है ॥ ५६ ॥

Here are verses again—

56. On the appearance of disease, the intelligent man immediately obtains relief by recourse to external or internal medication or by means of operative measures.

**बालस्तु खलु मोहाद्वा प्रमादाद्वा न बुध्यते ।**
**उत्पद्यमानं प्रथमं रोगं शत्रुमिवाबुधः ॥ ५७ ॥**

बालः तु खलु અજ્ઞ પુરુષ તો अज्ञ पुरुष तो, अबुधः મૂર્ખ પુરુષ मूर्ख, शत्रुम् इव ઉત્પન્ન થતા શત્રુને જેમ शत्रुकी भांति, उत्पद्यमानम् તેમ ઉત્પન્ન થતા उत्पन्न होते हुए, रोगम्- રોગને रोगको, मोहात् वा મોહથી मोहसे, प्रमादात् वा અથવા પ્રમાદથી अथवा प्रमादसे, प्रथमम् પહેલાં पहिले, न बुध्यते જાણતો નથી नहीं जानता ॥ ५७ ॥

57. But the ignorant man fails from stupidity or negligence to note the incipient state of a disease, just as a simpleton fails to recognize a potential enemy.

**अणुर्हि प्रथमं भूत्वा रोगः पश्चाद्विवर्धते ।**
**स जातमूलो मुष्णाति बलमायुश्च दुर्मतेः ॥५८॥**

हि કારણકે क्योंकि, रोगः રોગ रोग, प्रथमम् प्रथम प्रथम, अणुः થોડો थोडासा, भूत्वा થઈને हो कर, पश्चात् પાછળથી पीछेसे, विवर्धते વૃદ્ધિ પામતો જાય છે बढने लगता है, सः તે वह, जातमूलः દઢમૂળ થઈને अपनी जडको पकड कर, दुर्मतेः મૂર્ખ મનુષ્યનાં इस दुर्मति मनुष्यके, बलम् બળ बलको, आयुः च અને આયુષ્યને एवं आयुको, मुष्णाति હરી લે છે नष्ट कर देता है ॥५८॥

58. Disease from atomic beginning assumes enormous proportions. Having become firm-rooted, it undermines the strength and life of the witless man.

**न मूढो लभते संज्ञां तावद्यावन्न पीड्यते ।**
**पीडितस्तु मतिं पश्चात् कुरुते व्याधिनिग्रहे ॥५९॥**

मूढः મૂર્ખ મનુષ્ય मूढ मनुष्य, यावत् જ્યાં સુધી जब तक, न पीड्यते રોગથી પીડાતો નથી रोगोंसे पीडित नहीं होता, तावत् ત્યાં સુધી तब तक, संज्ञाम् તેને ખબર પણ उसे होश, न लभते પડતી નથી नहीं आता, पीडितः तु અને પીડા થતાં पीडित होने पर, व्याधि-निग्रहे રોગને કાબુમાં લાવવા માટે रोगको रोकनेकी, पश्चात् પાછળથી पीछेसे, मतिम् વિચાર चिन्ता, कुरुते કરે છે करता है ॥ ५९ ॥

59. The stupid man fails to recognize the seriousness of a disease till he is tormented by it; only after he is fairly in the grip of suffering, does he make up the mind to get the disease under control.

**अथ पुत्रांश्च दारांश्च ज्ञातींश्चाहूय भाषते ।**
**सर्वस्वेनापि मे कश्चिद्भिषगानीयतामिति ॥ ६० ॥**

अथ ત્યાર પછી पीछेसे, पुत्रान् च પુત્રોને पुत्रोंको, दारान् च તથા સ્ત્રીને तथा स्त्रीको, ज्ञातीन् च અને સગાં-સંબંધીઓને एवं संबन्धियोंको, आहूय બોલાવીને बुला कर, मे મારા मेरे, सर्वस्वेन સર્વસ્વથી सर्वस्वसे, अपि પણ भी, कश्चित् કોઈ किसी, भिषक् વૈદ્યને चिकित्सकको, आनीयताम् લઈ આવો ले आओ, इति આ પ્રમાણે इस प्रकार, भाषते કહે છે कहता है ॥ ६० ॥

60. Then calling his sons, wife and kinsmen, he cries, "Get a physician to treat me at any cost."

५९. न मूढो—न मर्त्यो (द.)
,, संज्ञा—श्रद्धां (द.)

तथाविधं च कः शक्तो दुर्बलं व्याधिपीडितम् ।
कृशं क्षीणेन्द्रियं दीनं परित्रातुं गतायुषम् ॥६१॥

तथाविधम् તેવા इस प्रकारके, दुर्बलम् દુર્બલ दुर्बल, व्याधिपीडितम् વ્યાધિથી પીડાયેલા रोगपीडित, कृशम् કૃશ पतले, क्षीणेन्द्रियम् ક્ષીણ ઇન્દ્રિયોવાળા क्षीणेन्द्रिय, दीनम् દીન दीन, गतायुषम् च અને આયુષ્યહીન પુરુષને और आयुष्यहीन पुरुषको, परित्रातुम् બચાવવાને बचानेमें, कः કોણ कौन, शक्तः શક્તિમાન થાય? शक्तिमान हो? ॥ ६१ ॥

61. But where is the physician who can help a patient reduced to such a plight, grown weak, tormented by disease, emaciated with waning faculties, given to despair and all but dead.

स त्रातारमनासाद्य बालस्त्यजति जीवितम् ।
गोधा लाङ्गूलबद्धेवाकृष्यमाणा बलीयसा ॥ ६२ ॥

लाङ्गूलबद्धा દોરીવડે પૂંછડે બાંધેલી रस्सीद्वारा पूंछ पर बंधी हुई, बलीयसा બળવાન પુરુષથી बलवान पुरुषसे, आकृष्यमाणा ખેંચાતી खिंची जाती हुई, गोधा इव ઘોની પેઠે गोहकी तरह, सः बालः તે મૂર્ખ મનુષ્ય वह मूर्ख मनुष्य, त्रातारम् રક્ષણ કરનારને किसी रक्षकको, अनासाद्य न મેળવવાથી न पाकर, जीवितम् જીવનનો प्राणोंका, त्यजति ત્યાગ કરે છે परित्याग कर देता है ॥ ६२ ॥

62. Finding no saviour, the wretched man relinquishes his hold on life, like an iguana that is laid hold of by the tail and is relentlessly dragged out of its hiding by a stronger creature.

तस्मात् प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा ।
भेषजैः प्रतिकुर्वीत य इच्छेत् सुखमात्मनः ॥६३॥

तस्मात् તેથી इस लिए, यः જે जो, आत्मनः પોતાનું अपने, सुखम् આરોગ્ય आरोग्यकी, इच्छेत् ઇચ્છતો હોય आकाङ्क्षा रखता हो, (सः તેણે उसको), रोगेभ्यः प्राक् एव રોગ ઉત્પન્ન થયા પહેલાં જ रोगोंसे पूर्व ही, रोगेषु અથવા રોગો अथवा रोगोंके, तरुणेषु वा બાલ્યાવસ્થામાં હોય ત્યારે बाल्यावस्थामें होने पर, भेषजैः ઔષધોથી औषधियोंसे, प्रतिकुर्वीत પ્રતિકાર કરવો જોઈએ प्रतिकार करना चाहिए ॥ ६३ ॥

63. Therefore, before ever diseases show themselves or while yet they are in the incipient stage, one who cares for one's happiness should endeavour to have them treated with proper medications.

अध्यायार्थसंग्रहः —

तत्र श्लोकौ—

एषणाः समुपस्तम्भा बलं कारणमामयाः ।
तिस्रैषणीये मार्गाश्च भिषजो भेषजानि च ॥६४॥
त्रित्वेनाष्टौ समुद्दिष्टाः कृष्णात्रेयेण धीमता ।
भावा, भावेष्वसक्तेन येषु सर्वं प्रतिष्ठितम् ॥६५॥

तत्र તે વિષયમાં उस विषयमें, श्लोकाः ઉપસંહારના બે શ્લોકો છે કે उपसंहारके दो श्लोक हैं कि, भावेषु વિષયોમાં विषयोंमें, असक्तेन આસક્તિરહિત अनासक्त, धीमता અને બુદ્ધિમાન और बुद्धिमान, कृष्णात्रेयेण કૃષ્ણાત્રેયે कृष्णात्रेयने, तिस्रैषणीये આ 'તિસ્રૈષણીય' નામના અધ્યાયમાં इस 'तिस्रैषणीय' नामके अध्यायमें, एषणाः એષણાઓ एषणायें, समुपस्तम्भाः ઉપસ્તંભો उपस्तम्भ, बलम् બળ बल, कारणम् કારણ, आमयाः રોગો रोग, मार्गाः રોગમાર્ગો रोगमार्ग, भिषजः વૈદ્યો चिकित्सक, भेषजानि च અને ઔષધો और औषध, अष्टौ भावाः એ આઠ વિષયો ये आठ भाव, त्रित्वेन ત્રણ ત્રણ ભેદોમાં तीन तीन भेदोंमें, समुद्दिष्टाः ચર્ચ્યાં છે वर्णन किये हैं, येषु જેઓમાં जिन आठ भावोंमें ही, सर्वम् ધર્મ-અર્થ અને કામ धर्म-अर्थ और काम, प्रतिष्ठितम् રહ્યા છે प्रतिष्ठित हैं ॥ ६४-६५ ॥

Here are the two recapitulatory verses—

64-65. The pursuits (of man) together with the sub-supports, strength, cause

६४. समुपस्तम्भाः—समुपष्टम्भाः (प.)
६५. प्रतिष्ठितम्—व्यवस्थितम् (थ.)

of disease, diseases, disease-systems, physicians and therapeutic measures—all these eight categories, each tripartite, have been laid down in this chapter on the "Three Pursuits" by the sage Krishna Atreya, unattached to categories wherein everything is established.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने तिस्रैषणीयो नामैकादशोऽध्यायः ॥ ११ ॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, श्लोकस्थाने સૂત્રસ્થાન વિષે सूत्रस्थानमें, तिस्रैषणीयः 'તિસ્રૈષણીય' 'तिस्रैषणीय', नाम નામનો नामका, एकादशः અગિયારમો ग्यारहवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ११ ॥

11. Thus in the section on General Principles in the treatise compiled by Agnivesa and revised by Caraka, the eleventh chapter entitled "The three pursuits of men" is completed.

## द्वादशोऽध्यायः ।

બારમો અધ્યાય अध्याय बारहवाँ Chapter XII

वातकलाकलीयाध्यायोपक्रमः —

**अथातो वातकलाकलीयमध्यायं व्याख्यास्यामः ॥१॥ इति ह स्माह भगवानात्रेयः ॥२॥**

अथ अतः હવે અહીંથી अब आगे, वातकलाकलीयम् 'વાતકલાકલીય' નામના 'वातकलाकलीय' नामके, अध्यायम् અધ્યાયનું अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥ भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The Salutary and Unsalutary influences of Vata".

2. Thus declared the worshipful Atreya.

वायुमधिकृत्य महर्षीणां परस्परं प्रश्नाः —

**वातकलाकलाज्ञानमधिकृत्य परस्परमतानि जिज्ञासमानाः समुपविश्य महर्षयः पप्रच्छुरन्योऽन्यं—**

वातकलाकला- વાતના અંશાંશ સંબંધી वातके अंशांश संबन्धी, ज्ञानम् જાનના ज्ञानके, अधिकृत्य વિષયમાં विषयमें, परस्पर- એકબીજાનાં एकदूसरेके, मतानि મંતવ્યો मंतव्योंको, जिज्ञासमानाः જાણવાને ઇચ્છતા जाननेकी इच्छावाले, महर्षयः મહર્ષિઓ महर्षियों, समुपविश्य એકત્ર બેસીને एकत्र बैठ कर, अन्योन्यम् પરસ્પર परस्पर, पप्रच्छुः પૂછવા લાગ્યા प्रश्न पूछने लगे;

3-(1). Desirous of knowing one another's opinion concerning the science of salutary and unsalutary aspects of Vata, the great sages, having assembled together discussed among themselves thus—

**किंगुणो वायुः, किमस्य प्रकोपणम्, उपशमनानि वाऽस्य कानि, कथं चैनमसङ्घातवन्तमनवस्थितमनासाद्य प्रकोपणप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा, कानि चास्य कुपिताकुपितस्य शरीराशरीरचरस्य शरीरेषु चरतः कर्माणि बहिःशरीरेभ्यो वेति ॥ ३ ॥**

वायुः વાયુ वायु, किम्-गुणः કયા ગુણવાળો છે? किन गुणवाला है? अस्य એના उसका, प्रकोपणम् પ્રકોપનો હેતુ प्रकोप होनेमें कारण, किम् કયો છે?

३. परस्परमतानि—परस्परमेतानि (द.)
,, असङ्घातवन्तम्—असङ्घातम् छ.
,, ,, —असंहतम् (प.)

क्या है? अस्य वा અથવા આ વાયુના અથવા इसके, उपशमनानि શાન્તિના ઉપાયો शान्तिके उपाय, कानि શા છે? कौन हैं? असङ्घातवन्तम् અમૂર્ત અમૂર્ત, अनवस्थितम् च અને ચલ સ્વભાવવાળા और एक जगह पर नहीं रहनेवाले, एनम् આ વાયુના इस वायुको, अनासाद्य પ્રાપ્ત કર્યા વિના न पाकर, प्रकोपण- પ્રકોપ કરનારાં દ્રવ્યો प्रकोप करनेवाले, प्रशमनानि અથવા પ્રશમન દ્રવ્યો या प्रशमन करनेवाले द्रव्य, कथम् કેવી રીતે किस प्रकार, प्रकोपयन्ति પ્રકુપિત કરે છે? प्रकुपित करते हैं? प्रशमयन्ति वा અથવા શાન્ત કરે છે? या शान्त करते हैं? शरीर- શરીરમાં ફરનારા शरीरमें चलनेवाले, अशरीर-चरस्य તથા શરીરથી ભિન્ન સ્થાનમાં ફરનારા तथा शरीरसे अतिरिक्त स्थानपर चलनेवाले, अस्य આ વાયુનાં इस वायुके, कुपित- પ્રકુપિત प्रकुपित, अकुपितस्य च અથવા અપ્રકુપિત (શાંત) થઈ અથવા अप्रकुपित (शान्त) होकर, शरीरेषु શરીરમાં और शरीरमें, शरीरेभ्यः बहिः वा અને શરીરની બહાર और शरीरसे बाहिर, चरतः ગતિ કરતાં गति करते हुए, कानि કયાં કયાં कौन कौन, कर्माणि इति કર્મો છે? कर्म हैं? ॥ ३ ॥

3. "Of what character is Vata? What is its provoking factor? What, again, are its allaying agents?" How do the exciting or allaying factors, unable as they are to come into contact with Vata which is incorporeal and unstable, succeed either in exciting or allaying it? What, again, are the doings of vata moving within bodies and outside bodies, both when excited and when quiescent, both within the body and when at large in the universe.

वायोर्गुणाः —

**अत्रोवाच कुशः साङ्कृत्यायनः—रूक्षलघुशीतदारुणखरविशदाः षडिमे वातगुणा भवन्ति ॥ ४ ॥**

अत्र આ વિષયમાં इस विषयमें, साङ्कृत्यायनः સાંકૃત્યાયન साङ्कृत्यायन, कुशः કુશ कुशने, उवाच બોલ્યા કે कहा कि, रूक्ष- રૂક્ષ रूक्ष, लघु- લઘુ लघु, शीत- શીત शीत, दारुण- દારુણ दारुण, खर- ખર खर, विशदाः વિશદ विशद, इमे આ ये, षट् ૭ छः, वातगुणाः વાયુના ગુણો वायुके गुण, भवन्ति છે हैं ॥ ४ ॥

4. Then spoke Kusa, the son of Sankritya. The characteristics of Vata are six, viz. dryness, lightness, coldness, hardness, roughness and clearness.

वायोः प्रकोपणानि —

**तच्छ्रुत्वा वाक्यं कुमारशिरा भरद्वाज उवाच—एवमेतद्यथा भगवानाह, एत एव वातगुणा भवन्ति,**

तत् તે इस, वाक्यम् વાક્ય वचनको, श्रुत्वा સાંભળીને सुन कर, कुमारशिराः કુમારશિરા कुमारशिरा, भरद्वाजः ભરદ્વાજ भरद्वाजने, उवाच બોલ્યા કે कहा कि, यथा જે પ્રમાણે जैसा, भगवान् આપ भगवान, आह કહો છો कहते हैं, एवम् एतत् તે પ્રમાણેજ એ છે वैसा ही यह है, एते एव જે ગણાવ્યા છે તે જ जो गिनायें है वे ही, वातगुणाः વાયુના ગુણો वायुके गुण, भवन्ति છે हैं;

5-(1). Hearing this statement, Bharadwaja, the Kumarasira said, "It is even as your honour has said; such, to be sure, are the characteristics of vata.

**स त्वेवंगुणैरेवंद्रव्यैरेवंप्रभावैश्च कर्मभिरभ्यस्यमानैर्वायुः प्रकोपमापद्यते, समानगुणाभ्यासो हि धातूनां वृद्धिकारणमिति ॥ ५ ॥**

सः तु વળી તે વાયુ તો और वह वायु तो, एवम्-गुणैः એવા ગુણોવાળાં इस प्रकारके गुणवाले, एवम्-द्रव्यैः એવા પ્રકારનાં દ્રવ્યોના ऐसे द्रव्योंका, एवम्-प्रभावैः અને એવા પ્રભાવવાળાં ऐसे प्रभाववाले, कर्मभिः च કર્મોના कर्मोंका, अभ्यस्यमानैः નિરન્તર સેવનથી निरन्तर सेवन करनेसे, प्रकोपम् પ્રકોપ प्रकोपको, आपद्यते પામે છે प्राप्त होता है, समानगुणाभ्यासः हि કારણકે સમાન ગુણવાળા આહારવિહારનું નિરંતર સેવન क्योंकि समान गुणवाले आहारबिहारका निरन्तर सेवन, धातूनाम्

वायु वगेरे धातुओनी धातुओंकी, वृद्धि- वृद्धिनुं वृद्धिका, **कारणम् इति** कारण छे कारण है ॥ ५ ॥

5. It is by the repeated use of such like qualities, such like substances and actions of suchlike potencies that vata becomes excited. For, verily, the increasing factor of the body-elements is the repeated use of homologous things.".

वायोः प्रशमनानि—

**तच्छ्रुत्वा वाक्यं काङ्कायनो वाह्लीकभिषगुवाच– एवमेतद्यथा भगवानाह, एतान्येव वातप्रकोपणानि भवन्ति;**

**तत्** ते उस, **वाक्यम्** वाक्य वाक्यको, **श्रुत्वा** सांभळीने सुनकर, **बाह्लीक-** बाह्लीक देशना बाह्लीक देशके, **भिषक्** वैद्य चिकित्सक, **काङ्कायनः** कांकायन कांकायनने, **उवाच** बोल्या के कहा कि, **यथा** जेम जैसा, **भगवान्** आप भगवान, **आह** कहो छो कहते हैं, **एवम्** एम ज वैसा ही, **एतत्** आ छे यह है, **एतानि एव** आटला ज ये ही, **वातप्रकोपणानि** वातप्रकोपक हेतुओ वातप्रकोपके हेतु, **भवन्ति** छे हैं;

6-(1). Hearing this observation, Kankayana, the physician from Bahlika country, said, "It is even as your honour has observed. Such, indeed, are the exciting factors of Vata.

**अतो विपरीतानि वातस्य प्रशमनानि भवन्ति, प्रकोपणविपर्ययो हि धातूनां प्रशमकारणमिति ॥६॥**

**अतः** एओथी इनसे, **विपरीतानि** विपरीत गुणवाळां द्रव्यादि विपरीत गुणवाले द्रव्यादि, **वातस्य** वायुना वायुके, **प्रशमनानि** प्रशमननां कारणो प्रशमनके कारण, **भवन्ति** बने छे होते हैं, **हि** कारण के क्योंकि, **प्रकोपण-** प्रकोपणथी प्रकोपणसे, **विपर्ययः** विपरीतता विपरीतता, **धातूनाम्** प्रकोप पामेला धातुओना प्रकुपित धातुओंकी, **प्रशम-** प्रशमननुं शान्तिका, **कारणम् इति** कारण छे कारण है ॥६॥

6. The opposite of these are the allaying agents of vata. For, surely, the alleviative factors in relation to the body-elements are just the opposite of the exciting factors".

प्रकोपणप्रशमनानि कथं वायुं प्रकोपयन्ति प्रशमयन्ति च—

**तच्छ्रुत्वा वाक्यं वडिशो धामार्गव उवाच— एवमेतद्यथा भगवानाह, एतान्येव वातप्रकोपप्रशमनानि भवन्ति ।**

**तत्** ते उस, **वाक्यम्** वाक्य वाक्यको, **श्रुत्वा** सांभळीने सुन कर, **धामार्गवः** धामार्गव धामार्गव, **वडिशः** वडिश वडिशने, **उवाच** कह्युं के कहा कि, **यथा** जे प्रमाणे जैसा, **भगवान्** आप भगवान, **आह** कहो छो कहते हैं, **एवम्** **एतत्** एम ज आ छे वैसा ही यह है, **एतानि एव** आ ज ये ही, **वातप्रकोप-** वातनो प्रकोप करनारां वायुका प्रकोप करनेवाले, **प्रशमनानि** तथा वायुनुं शमन करनारां और वायुका शमन करनेवाले, **भवन्ति** छे हैं;

7-(1). Hearing this remark, Badisa Dhamargava said, "It is, indeed, as your honour has declared. Such, of a truth, are the exciting and allaying agents of Vata.

**यथा ह्येनमसङ्घातमनवस्थितमनासाद्य प्रकोपणप्रशमनानि प्रकोपयन्ति प्रशमयन्ति वा, तथाऽनुव्याख्यास्यामः –**

**यथा हि** जे रीते जिस प्रकार, **असङ्घातम्** अमूर्त अमूर्त, **अनवस्थितम्** तथा चल और चल, **एनम्** आ वायुने इस वायुको, **अनासाद्य** प्राप्त कर्या विना न पाकर, **प्रकोपण-** प्रकोप करनारां प्रकोप करनेवाले, **प्रशमनानि** तथा प्रशमन करनारां द्रव्य वगेरे और प्रशमन करनेवाले द्रव्यादि, **प्रकोपयन्ति** प्रकुपित करे छे प्रकुपित करते हैं, **प्रशमयन्ति वा** अथवा शान्त करे छे अथवा शान्त करते हैं, **तथा** ते प्रमाणे उसी प्रकार, **अनुव्याख्यास्यामः** व्याख्यान करशुं व्याख्यान करेंगे;

६. प्रकोपण—प्रकोप (क.)

,, वातस्य—खल्वस्य (ष. च.)

७. वातप्रकोप—वातप्रकोपण (च. छ.)

वातजशोथस्य निदानं लक्षणं च—

**अयं त्वत्र विशेषः—शीतरूक्षलघुविशदश्रमोपवासातिकर्शनक्षपणादिभिर्वायुः प्रकुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोफं जनयति; स क्षिप्रोत्थानप्रशमो भवति, तथा श्यामारुणवर्णः प्रकृतिवर्णो वा, चलः स्पन्दनः खरपरुषभिन्नत्वग्रोमा छिद्यत इव भिद्यत इव पीड्यत इव सूचिभिरिव तुद्यते पिपीलिकाभिरिव संसृप्यते सर्षपकल्कावलिप्त इव चिमिचिमायते संकुच्यत आयम्यत इवेति वातशोथः ( १ );**

**अत्र** એઓમાં इनमें, **अयम्** तु આ यह, **विशेषः** ભેદ છે भेद है, **शीत-** શીત शीत, **रूक्ष-** રૂક્ષ रूक्ष, **लघु-** લઘુ लघु, **विशद-** તથા વિશદ દ્રવ્યોના સેવનથી तथा विशद द्रव्योंके सेवनसे, **श्रम-** અને શ્રમ और श्रम, **उपवास-** ઉપવાસ उपवास, **अतिकर्शन-** અતિકૃશતા अतिकृशता, **क्षपण-आदिभिः** ક્ષીણતા વગેરેથી क्षीणता आदिसे, **प्रकुपितः** કુપિત થયેલો कुपित हुई, **वायुः** વાયુ वायु, **त्वक्-** ત્વચા त्वचा, **मांस-** માંસ मांस, **शोणित-आदीनि** રક્ત વગેરેને रक्त आदिका, **अभिभूय** પરાભવ પમાડીને पराभव करके, **शोफम्** સોજો शोथ, **जनयति** ઉત્પન્ન કરે છે उत्पन्न करती है, **सः** તે वह, **क्षिप्र-** જલદી जल्दी, **उत्थान-** ઉપડવાવાળો ऊंचा उठानेवाला, **प्रशमः** તથા શમનવાળો तथा शमनवाला, **भवति** થાય છે हो जाता है, **तथा** તથા एवं, **श्याम-** શ્યામ श्याम, **अरुण-** અથવા અરુણ या अरुण, **वर्णः** રંગવાળો वर्णवाला, **प्रकृति** અથવા દેહસમાન या देहसमान, **वर्णः वा** વર્ણવાળો પણ થાય છે वर्णवाला भी होता है, **चलः** તે ચલ સ્વભાવવાળો वह गतिशील, **स्पन्दनः** ફરકવાવાળો स्पन्दनयुक्त, **खर-** ખરબચડાં कर्कश, **परुष-** કઠોર कठोर, **भिन्न-** ફાટેલ फटे हुए, **त्वक्-** ચામડી त्वचा, **रोमा** તથા રૂંવાડાંવાળો થાય છે तथा रोमवाला होता है, **छिद्यते** વળી તેમાં છેદન થતું હોય पुनः उसमें छेदनकी, **इव** એવું भांति, **भिद्यते** ભેદન થતું હોય भेदनकी, **इव** એવું भांति, **पीड्यते** દબાવવામાં આવતું હોય दबानेकी, **इव** એવું भांति, **सूचीभिः** સોયો सूईके, **तुद्यते** ભોંકવામાં આવતી હોય चूभनेके, **इव** એવું भांति, **पिपीलिकाभिः** કીડીઓથી चिउंटियोंके, **संसृप्यते** સળવળાટ થાય रेंगनेके, **इव** એવું ભાસે છે समान प्रतीत होता है, **सर्षप-** સરસવનો सरसोंके, **कल्क-** કલ્ક कल्कके, **अवलिप्तः** ચોપડયો હોય लेपके, **इव** એવું समान, **चिमिचिमायते** ચમચમ થાય છે झनझनाहट होता है, **संकुच्यते** સંકોચ થતો હોય संकोच होनेकी, ( **इव** એવું भांति ), **आयम्यते** ખેંચાતું હોય तनाव होनेकी, **इव** એવું થાય છે भांति होता है, **इति** આ પ્રમાણે इस प्रकार, **वातशोथः** વાતશોથ છે वातशोथ है (१);

७(१). श्रमो१वासा°—धूमोपवासा° (ध.)
,, अभिभूय शोफं—अभिरूपशोफं (ध.)
,, चलः – आततः (ध.)
,, त्वग्रोमा—त्वग्लोमा (छ.)
,, सर्षपकल्का°—सर्षपादिकल्का° (ठ. त)
,, वातशोथः – वातशोफः (ज. ठ. त.)

7-(1). These are its distinctive characteristics. Vata, provoked by the use of cold, dry, light, and clear substances, or by fatigue, fasting, extreme emaciation and purgation etc., invades the skin, flesh, blood snd the other tissues and produces edema. It appears and disappears abruptly. It is of dusky red or normal skin colour. It is migratory and throbbing. The skin and hair become rough, harsh and broken. There is painful sensation as if the part is excised or incised, compressed or pricked by needles or crawled on by ants. There is tingling sensation as if painted with mustard paste or there is contraction or expansion. These are the symptoms of edema caused by vata.

पित्तजशोथस्य निदानं लक्षणं च—

**उष्णतीक्ष्णकटुकक्षारलवणाम्लाजीर्णभोजनैर-**

**ष्यातपप्रतापैश्च पित्तं प्रकुपितं त्वङ्मांसशोणितान्यभिभूय शोथं जनयति; स क्षिप्रोत्थानप्रशमो भवति, कृष्णपीतनीलताम्रावभास उष्णो मृदुः कपिलताम्ररोमा उष्यते दूयते धूप्यते ऊष्मायते स्विद्यते क्लिद्यते न च स्पर्शमुष्णं च सुषूयत इति पित्तशोथः (२);**

उष्ण- ઉષ્ણ उष्ण, तीक्ष्ण- તીક્ષ્ણ तीक्ष्ण, कटुक- તીખા कटु, क्षार- ક્ષાર क्षार, लवण- લવણ लवण, अम्ल- તેમજ ખાટા પદાર્થો ખાવાથી एवं खट्टे पदार्थोंके खानेसे, अजीर्ण- અજીર્ણ પર अजीर्णमें, भोजनैः ખાવાથી खानेसे, अग्नि- અગ્નિ अग्नि, आतप- અને તડકાના और धूपके, प्रतापैः च તાપથી तापसे, प्रकुपितम् કુપિત થયેલું कुपित हुआ, पित्तम् પિત્ત पित्त, त्वक्- ત્વચા त्वचा, मांस- માંસ मांस, शोणितानि તથા રક્તને तथा रक्तका, अभिभूय પરાભવ પમાડીને पराभव करके, शोफम् સોજો शोथ, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है, सः તે वह, क्षिप्र- જલદી जल्दी, उत्थान- ઉપડવાવાળો ऊंचा उठ आनेवाला, प्रशमः તથા શમનવાળો शमनवाला, भवति થાય છે होता है, कृष्ण- તેમજ કાળો एवं काला, पीत- પીળો पीला, नील- નીલ नीला, ताम्र તથા તામ્ર तथा ताम्र, अवभासः દેખાતો दिखाववाला, उष्णः ઉષ્ણ उष्ण, मृदुः પોચો कोमल, कपिल- અને કપિલ और कपिल, ताम्र- તથા તામ્ર एवं ताम्र, रोमा રુંવાડાંવાળો હોય છે रोंमेंवाला होता है, उष्यते એક ભાગમાં દાહ થાય एक भागमें दाह होता है, दूयते તપે છે तपता है, धूप्यते જાણે કે ધુંધવાય છે धुआंसा निकलना प्रतीत होता है, ऊष्मायते બાફ કાઢે છે ऊष्माको निकालता है, स्विद्यते સ્વેદયુક્ત થાય છે पसीना आता है, क्लिद्यते ક્લેદયુક્ત થાય છે क्लिन्न होता है, स्पर्शम् સ્પર્શ स्पर्श, उष्णम् च અને ગરમીને और गरमीको, न सुषूयते સહન કરતો નથી सहन नहीं करता, इति આ પ્રમાણે इस प्रकार, पित्तशोथः પિત્તશોથ છે पित्तशोथ है (२);

७ (२). शोथं–शोफं (ज.)
,, कपिलताम्र–कपिलपिङ्गलताम्र (च. ध.)
,, उष्यते–स उष्यते (क.)
,, सुषूयते–सहते (च. ध.)
,, पित्तशोथः–पित्तशोफः (ज. ठ. त.)

7-(2). The pitta provoked by the use of hot, acute, pungent and alkaline, salt and acid articles of diet, predigestion meals, by the severe heat of fire or sun, invades the skin, blood and flesh and produces edema. It appears and disappears abruptly. It is of dark, yellowish, purple or coppery tinge. It is warm and soft. Hairs become tawny or of coppery colour. There is sensation of heat, parching, fuming or steaming. The part sweats and is softened and does not tolerate touch and heat.

कफजशोथस्य निदानं लक्षणं च—

**गुरुमधुरशीतस्निग्धैरतिस्वप्नाव्यायामादिभिश्च श्लेष्मा प्रकुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोथं जनयति; स कृच्छ्रोत्थानप्रशमो भवति, पाण्डुश्वेतावभासो गुरुः स्निग्धः श्लक्ष्णः स्थिरः स्त्यानः शुक्लाग्ररोमा स्पर्शोष्णसहश्चेति श्लेष्मशोथः (३);**

गुरु- ગુરુ गुरु, मधुर- મધુર मधुर, शीत- શીત शीत, स्निग्धैः તથા સ્નિગ્ધ દ્રવ્યોના સેવનથી तथा स्निग्ध द्रव्योंके सेवनसे, अतिस्वप्न- અતિનિદ્રાથી अतिनिद्रासे, अव्यायाम-आदिभिः च અને વ્યાયામ ન કરવા વગેરેથી और व्यायाम न करना आदिसे, प्रकुपितः કુપિત થયેલો कुपित हुआ, श्लेष्मा કફ कफ, त्वक्- ત્વચા त्वचा, मांस- માંસ मांस, शोणित-आदीनि રક્ત વગેરેનો रक्त आदिका, अभिभूय પરાભવ કરીને पराभव करके, शोथम् સોજો शोथ, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है, सः તે वह, कृच्छ्र- ધીમેધીમે धीरेधीरे, उत्थान- ઉપડવાવાળો ऊंचा उठ आनेवाला, प्रशमः તથા શમનવાળો तथा शमनवाला, भवति થાય છે होता है, पाण्डु- તેમજ પાંડુ एवं पाण्डु, श्वेत- તથા શ્વેત तथा श्वेत, अवभासः

७ (३). स्निग्धैः–स्निग्धोपयोगैः (क. च. ज. द.)
,, शोथं–शोफं (ठ. त.)
,, श्लेष्मशोथः–श्लेष्मशोफः (ठ. त.)

દેખાવનો દિखाववाला, गुरुः ભારે भारी, स्निग्धः સ્નિગ્ધ स्निग्ध, श्लक्ष्णः લીસો चिकना, स्थिरः સ્થિર स्थिर, स्त्यानः ઘન घन, शुक्ल- ધોળા श्वेत, अग्ररोमा રૂંવાડાંના આગલા ભાગવાળો रोयेंका अग्र भागवाला, स्पर्श-उष्णसहः च અને સ્પર્શ તથા ઉષ્ણતા સહન કરનાર હોય છે और स्पर्श और उष्णताको सहन करनेवाला होता है, इति આ પ્રમાણે इस प्रकार, श्लेष्मशोथः શ્લેષ્મશોથ છે कफशोथ है (३);

7-(3). The kapha provoked by the use of heavy, sweet, cold and uuctuous articles of diet, excessive sleep, and avoidance of excercise etc., invades the skin, flesh, blood and the other tissues and produces edema. It is slow in onset and subsidence. It is of pale whitish tinge. It is thick, greasy, smooth, firm and dense. Hairs appear white at their edges, and it has tolerance to touch and heat. These are the signs of edema caused by kapha.

द्वन्द्वजसन्निपातजशोथानां निदानं लक्षणं च —

**यथास्वकारणाकृतिसंसर्गाद्द्विदोषजास्त्रयः शोथा भवन्ति; यथास्वकारणाकृतिसन्निपातात् सान्निपातिक एकः; एवं सप्तविधो भेदः ॥ ७॥**

यथास्व- પોતપોતાનાં अपने अपने, कारण- કારણ कारणों, आकृति- અને લક્ષણોનાં और लक्षणोंके, संसर्गात् મિશ્રણથી मिलनेसे, द्विदोषजाः બે દોષથી ઉત્પન્ન થયેલા दो दोषोंसे उत्पन्न हुए, त्रयः ત્રણ तीन, शोथाः શોથ शोथ, भवन्ति થાય છે होते हैं, यथास्व- પોતપોતાનાં अपने अपने, कारण- કારણ कारणोंसे, आकृति- અને લક્ષણોના और लक्षणोंके, सन्निपातात् સન્નિપાતથી सन्निपातसे, सान्निपातिकः સાન્નિપાતિક શોથ सान्निपातिक शोथ, एकः એક છે एक है, एवम् આ પ્રમાણે इस प्रकारसे, सप्तविधः સાત જાતના सात प्रकारके, भेदः ભેદ છે भेद है ॥ ७ ॥

7. There are three kinds of edema caused by bi-discordance due to admixture of causes and symptoms of the two humors concerned. Only one kind of edema is caused by the discordance due to symptosis of respective causes and symptoms of all the three humors. Thus they are of seven varieties.

शोथानां पृथक् पृथक् प्रकारेण भेदाः —

**प्रकृतिभिस्ताभिस्ताभिर्भिद्यमानो द्विविधस्त्रिविधश्चतुर्विधः सप्तविधोऽष्टविधश्च शोथ उपलभ्यते, पुनश्चैक एवोत्सेधसामान्यात् ॥ ८॥**

ताभिः ते उन, ताभिः ते उन, प्रकृतिभिः ભેદનાં કારણોથી भेदके कारणोंसे, भिद्यमानः ભેદ પાડવામાં આવતાં भेद करने पर, द्विविधः બે જાતનો दो प्रकारका, त्रिविधः ત્રણ જાતનો तीन प्रकारका, चतुर्विधः ચાર જાતનો चार प्रकारका, सप्तविधः સાત જાતનો सात प्रकारका, अष्टविधः च અને આઠ જાતનો और आठ प्रकारका, शोथः શોથ शोथ, उपलभ्यते જોવામાં આવે છે देखनेमें आता है, पुनः च વળી और फिर, उत्सेध- ઊંચા હોવાની ऊंचा होनेकी, सामान्यात् સમાનતાથી समानतासे, एकः એક પ્રકારનો एक प्रकारका, एव જ છે ही है ॥ ८ ॥

8. Being thus classified according to the difference in their causative factors, they become grouped as bipartite tripartite, quadrupartite, septapartite and octopartite. But they are all one, swelling being their common pathognomic symptom.

---

७. शोथा-शोफा (ह. त.)
,, एवं सप्तविधो भेदः-एवं भेदः (ख. ज.)

८ प्रकृतिभि—एवं भेदप्रकृतिभि (ख. त. ष.)
,, शोथ—शोफ (ख.)
,, पुनश्चैक—स पुनश्चैक (ष.

वातजादिशोथलक्षणानां श्लोकेन पुनरभिधानम् —

**भवन्ति चात्र—**

**शूयन्ते यस्य गात्राणि स्वपन्तीव रुजन्ति च ।**
**पीडितान्युन्नमन्त्याशु वातशोथं तमादिशेत् ॥९॥**

**अत्र च** આ વિષયમાં इस विषयमें, **भवन्ति** શ્લોકો છે કે श्लोक हैं कि, **यस्य** જેનાં जिसके, **गात्राणि** અંગો अंग, **शूयन्ते** સૂજી જાય सूजे हों, **स्वपन्ति इव** જાણે કે વેદનારહિત થાય सोनेकी भांति हो जाते हों, **रुजन्ति च** કે પીડાયુક્ત હોય या पीड़ायुक्त होते हों, **पीडितानि** દબાવવાથી दबाने पर, **आशु** તરત शीघ्र, **उन्नमन्ति** ઊંચાં આવી જાય ऊपर आ जाते हों, **तम्** તેને उसको, **वातशोथम्** 'તને વાતશોથ થયો છે' 'तुम्हें वातशोथ हुआ है,' **आदिशेत्** એમ કહેવું ऐसा कहें ॥ ९ ॥

Here are verses again —

9. That edema is to be regarded as the one due to vata wherein the limbs are swollen and there is numbness and pain in the swelling and which when pressed with the finger and left, returns instantaneously to its normal level.

**यश्चाप्यरुणवर्णाभः शोथो नक्तं प्रणश्यति ।**
**स्नेहोष्णमर्दनाभ्यां च प्रणश्येत् स च वातिकः ॥१०॥**

**अपि च** વળી और भी, **अरुण-** અરુણ લાલ, **वर्ण-** વર્ણનો वर्णके, **आभः** દેખાતો देखावका, **यः** જે जो, **शोथः** શોથ शोथ, **नक्तम्** રાત્રે रात्रिमें, **प्रणश्यति** બેસી જાય છે शान्त होता है, **स्नेह-** તથા સ્નેહ तथा स्नेह, **उष्ण-** ગરમી गरमी, **मर्दनाभ्याम् च** અને મર્દનથી और मर्दनसे, **प्रणश्येत् च** શમી જાય છે नष्ट हो जाता है, **सः** તે वह, **वातिकः** વાતજન્ય શોથ છે वातजन्य शोथ है ॥ १० ॥

10. That which is light-red in appearance, which is lessened at night (due to rest) and disappears when massaged with unctuous and hot substances, is also an edema due to vata.

**यः पिपासाज्वरार्तस्य दूयतेऽथ विदह्यते ।**
**स्विद्यति क्लिद्यते गन्धी स पैत्तः श्वयथुः स्मृतः॥११॥**

**पिपासा-** તરસ प्यास, **ज्वर-** તથા તાવથી एवं ज्वरसे, **आर्तस्य** પીડાયેલ મનુષ્યનો पीड़ित मनुष्यका, **यः** જે શોથ जो शोथ, **दूयते** બળતરા કરે છે जलता है, **अथ विदह्यते** તુરત પાકી જાય છે शीघ्र पक जाता है, **स्विद्यति** પરસેવાથી યુક્ત બને છે पसीनेसे युक्त होता है, **क्लिद्यते** ક્લેદ પામે છે क्लिन्न होता है, **गन्धी** અને ગંધ મારે છે और गन्धवाला होता है, **सः** તે उस, **श्वयथुः** સોજાને शोथको, **पैत्तः** પિત્તજન્ય पित्तजन्य, **स्मृतः** કહ્યો છે कहा है ॥ ११ ॥

11. That edema is regarded as born of pitta wherein the patient is afflicted with thirst and fever, and there is pain and burning sensation in the swelling, as well as sweating, softening and smell.

**यः पीतनेत्रवक्त्रत्वक् पूर्वं मध्यात् प्रशूयते ।**
**तनुत्वक् चातिसारी च पित्तशोथः स उच्यते ॥१२॥**

**यः** જે સોજો जो शोथ, **पीत-** પીળાં पीले, **नेत्र-** નેત્ર नेत्र, **वक्त्र-** મુખ मुख, **त्वक्** તથા ચામડીવાળો और त्वचा वाला हो, **पूर्वम्** અને પહેલાં और पहले, **मध्यात्** મધ્ય શરીરમાં मध्य शरीरमें, **प्रशूयते** ઉત્પન્ન થાય उत्पन्न हो, **तनुत्वक्** પાતળી ચામડીવાળો હોય पतली त्वचावाला हो, **अतिसारी च** અને અતિસારવાળો હોય और अतिसारवाला हो, **सः** તે वह, **पित्तशोथः**

९. शूयन्ते—दूयन्ते (द.)
,, स्वपन्तीव—स्पन्दन्तीव (ग. घ.)
,, स्वपन्तीव रुजन्ति च—स्पन्दन्तीव रुजन्ति च (प).
,, उन्नमन्त्याशु—उन्नमन्तीव (प.)
१०. शोथो—शोफो (ख. ञ.)

११. स्विद्यति क्लिद्यते—क्लिद्यति स्विद्यते (क ब.)
१२. नेत्रवक्त्रत्वक्—मुखवर्णत्वक् (ग.)
,, —मुखनेत्रत्वक् (च.)
,, —नखनेत्रत्वक् (प.)

પિત્તજન્ય શોથ पित्तजन्य शोथ, उच्यते કહેવાય છે कहलाता है ॥ १२ ॥

12. That again is said to be edema due to pitta wherein there is yellow coloration of the eyes, the face and the skin, wherein the edema begins in the abdomen, the skin is thin and the patient is suffering from diarrhoea.

**शीतः सक्तगतिर्यस्तु कण्डूमान् पाण्डुरेव च ।**
**निपीडितो नोन्नमति श्वयथुः स कफात्मकः ॥१३॥**

यः तु જે जो, शीतः શીત शीतल, सक्तगतिः ફેલાય નહિ એવો न फैलनेवाले, कण्डूमान् ખરજવાળો खाजयुक्त, पाण्डुः एव च પાંડુ રંગનો पाण्डुवर्ण, निपीडितः તથા દાબવાથી तथा दबाने पर, न उन्नमति ઊંચો ઉપડી આવતો ન હોય ऊंचा न उठे, सः ते वह, श्वयथुः શોથ शोथ, कफात्मकः કફાત્મક છે कफजन्य है ॥ १३ ॥

13. That edema is due to kapha which is cold, fixed, itching, whitish and which on pressure pits and does not return to the normal level soon.

**यस्य शस्त्रकुशच्छिन्नाच्छोणितं न प्रवर्तते ।**
**कृच्छ्रेण पिच्छा स्रवति स चापि कफसंभवः ॥१४॥**

यस्य જેના जिसके, शस्त्र- શસ્ત્રથી शस्त्रसे, कुश- કે દર્ભથી કરેલા या दर्भसे, छिन्नात् છેદમાંથી काटने पर, शोणितम् લોહી रक्त, न ન नहीं, प्रवर्तते નીકળે निकलता, कृच्छ्रेण અને મુશ્કેલીએ और कठिनाईसे, पिच्छा ચીકણો તથા ઘાટો સ્રાવ चिकना तथा गाढा स्राव, स्रवति વહે बहे, सः ते સોજો वह शोथ, च अपि પણ भी कफसंभवः કફથી ઉત્પન્ન થયેલો છે कफजन्य है ॥ १४ ॥

14. That again is edema due to kapha from which no blood flows out when incised with an instrument or a blade of sacred grass but only slimy fluid oozes out with difficulty.

**निदानाकृतिसंसर्गाच्छ्वयथुः स्याद्द्विदोषजः ।**
**सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रहेतुजः ॥१५॥**

निदान- નિદાન निदान, आकृति- તથા લક્ષણોના एवं लक्षणोंका, संसर्गात् સંસર્ગથી संसर्ग होनेसे, द्विदोषजः બે દોષથી ઉત્પન્ન થયેલો दो दोषजन्य, श्वयथुः સોજો शोथ, स्यात् થાય છે होता है, व्यामिश्र- ત્રણ દોષોનાં મિશ્રિત तीन दोषके मिश्रित, हेतुजः કારણોથી ઉત્પન્ન થયેલો कारणोंसे उत्पन्न हुआ, सर्व- અને સર્વ और सम्पूर्ण, आकृतिः લક્ષણવાળો लक्षणोंवाला, शोथः સોજો शोथ, सन्निपातात् સન્નિપાતજન્ય सन्निपातजन्य, स्यात् થાય છે होता है ॥ १५ ॥

15. That is edema due to bi-discordance wherein there is combination of causes and symptoms of two humors. That is an edema due to tri-discordance wherein all of the above symptoms appear owing to a combination of all the causative factors.

शोथानां स्थानविशेषकृतमसाध्यत्वम्—

**यस्तु पादाभिनिर्वृत्तः शोथः सर्वाङ्गगो भवेत् ।**
**जन्तोः स च सुकष्टः स्यात् प्रसृतः स्त्रीमुखाच्च यः ॥१६**

१३. शीतःसक्तगतिर्यस्तु कण्डूमान् पाण्डुरेव च--यः शीतलः सक्तगतिः पाण्डुः कण्डूयतेऽपि च (ग. घ. ध.)
,, शीतः सक्तगतिर्यस्तु—यः शीतलः सक्तगति (क. छ.)
,, सक्तगतिः—सन्नगतिः (प.)
,, निपीडितो—यः पीडितो (द.)
,, निपीडितो नोन्नमति—पीडितो नोन्नमेन्मन्दः (ग. च. ध.)
१४. शस्त्रकुशच्छिन्ना—शस्त्रकुशच्छेदा (क. घ.)
,, पिच्छा स्रवति—पिच्छास्रवति (ख.)

१५. शोथो—शोफो (ख.)
१६. शोथः—शोफः (ज. त.)
,, सर्वाङ्गगो—गुर्वङ्गगो (प.)
,, प्रसृतः—प्रसृतः (द.)

यः तु વળી જે और जिस, जन्तोः પુરુષને पुरुषके, पादाभिनिर्वृत्तः પગોથી શરૂ થયેલો पैरोंसे आरम्भ होकर, शोथः સોજો शोथ, सर्व- સર્વ सब, अङ्गगः અંગે પ્રસરનારો अङ्गोंमें फैलता, भवेत् થાય हो, यः અને જે સોજો और जो शोथ, स्त्रीमुखात् સ્ત્રીને મુખથી શરૂ થઈને स्त्रीके मुखसे शुरू होकर, प्रसृतः પ્રસરે फैलता हो, सः च તે वह जन्तोः પુરુષને તથા સ્ત્રીને पुरुष और स्त्रीको, सुकष्टः અનુક્રમે બહુ કષ્ટ-સાધ્ય क्रमशः कष्टसाध्य, स्यात् થાય છે होता है ॥१६॥

16. The swelliug which first manifests itself in the feet and then spreads over the whole body of the person becomes formidable. So too is the edema in women which begins from the face and spreads all over.

**यश्चापि गुह्यप्रभवः स्त्रिया वा पुरुषस्य वा ।**
**स च कष्टतमो ज्ञेयो यस्य च स्युरुपद्रवाः ॥१७॥**

अपि च વળી और भी, यः જે સોજો जो शोथ, स्त्रियाः वा સ્ત્રીને स्त्रीके, पुरुषस्य वा અથવા પુરુષને अथवा पुरुषके, गुह्यप्रभवः ગુહ્ય ભાગમાં થઈ આવે गुह्यभागमें उत्पन्न हो जाय, यस्य च અને જેમાં और जिसमें, उपद्रवाः ઉપદ્રવો उपद्रव, स्युः થાય हो जाय, सः च તે સોજાને उस शोथको, कष्टतमः સૌથી કષ્ટદાયક अतिशय कष्टदायक, ज्ञेयः જાણવો जानना चाहिए ॥ १७ ॥

17. The swelling which begins in the genitals in men or women should also be known as the most formidable condition if accompanied with complication.

शोथस्योपद्रवाः—

**छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च ।**
**सप्तकोऽयं सदौर्बल्यः शोफोपद्रवसंग्रहः ॥१८॥**

छर्दिः ઉલટી वमन, श्वासः શ્વાસ श्वास, अरुचिः અરુચિ अरुचि, तृष्णा તૃષ્ણા प्यास, ज्वरः તાવ ज्वर, सदौर्बल्यः च एव અને દુર્બળતા સહિત और दुर्बलता सहित, अतीसारः અતીસાર अतीसार, अयम् આ यह, सप्तकः સાતનો સમૂહ सातका समूह, शोफ- સોજાના शोथके, उपद्रव- ઉપદ્રવોનો उपद्रवोंका, संग्रहः સંક્ષેપ છે संक्षेप है ॥ १८ ॥

18. The complications of edema in short are vomiting, dyspnea, anorexia, thirst, fever, diarrhoea and seventhly debility.

उपजिह्विकायाः संप्राप्तिः लक्षणं च—

**यस्य श्लेष्मा प्रकुपितो जिह्वामूलेऽवतिष्ठते ।**
**आशु संजनयेच्छोथं जायतेऽस्योपजिह्विका ॥१९॥**

यस्य જેનો जिसका, प्रकुपितः કુપિત થયેલો कुपित हुआ, श्लेष्मा કફ कफ, जिह्वा- જીભના जिह्वाके, मूले મૂળમાં मूलमें, अवतिष्ठते સ્થિર થાય છે स्थिर होता है, आशु અને તરત और शीघ्र, शोथम् સોજો शोथको, संजनयेत् ઉત્પન્ન કરે છે उत्पन्न करता है, अस्य તેને उसको, उपजिह्विका ઉપજિહ્વિકા उपजिह्विका, जायते થાય છે होती है ॥ १९ ॥

19. When the provoked kapha in the body gets localised at the base of the tongue, it causes immediately an acute swelling there and the person is affected with Upajihvika (acute Glossitis).

गलशुण्डिकायाः संप्राप्तिः लक्षणं च—

**यस्य श्लेष्मा प्रकुपितः काकले व्यवतिष्ठते ।**
**आशु संजनयेच्छोफं करोति गलशुण्डिकाम् ॥२०॥**

यस्य જેનો जिसका, प्रकुपितः કુપિત થયેલો प्रकुपित हुआ, श्लेष्मा કફ कफ, काकले કાકડામાં

---

१८. ज्वरोऽतीसारः—ज्वरातीसारः (ग.)
,, शोथो—शोफो (घ. च.)

१९. संजनयेच्छोथं—संजनयञ्छोथं (ग. घ.)
,, ,, —संजनयेच्छोफं (घ.)
२०. सञ्जनयेच्छोफं—सञ्जनयञ्छोथं (घ.)
,, शोफं—शोथं (घ.)

काकलमें, **व्यवतिष्ठते** સ્થિર થાય છે स्थिर होता है, **आशु** અને તરત और शीघ्र, **शोफम्** સોજો शोथको, **संजनयेत्** ઉત્પન્ન કરે છે उत्पन्न करता है, **गलशुण्डिकाम्** તેને તે કફ ગલશુંડિકા उसे वह कफ गलशुण्डिकाको, **करोति** કરે છે करता है ॥२०॥

20. When the provoked kapha in the body gets localised at the base of the palate, it causes immediately an acute swelling there which is called Galasundika (Quinsi.)

गलगण्डस्य संप्राप्तिः लक्षणं च—

**यस्य श्लेष्मा प्रकुपितो गलबाह्येऽवतिष्ठते ।**
**शनैः संजनयेच्छोफं गलगण्डोऽस्य जायते ॥२१॥**

**यस्य** જેનો जिसका, **प्रकुपितः** કુપિત થયેલો प्रकुपित हुआ, **श्लेष्मा** કફ कफ, **गलबाह्य** ગળાના બહારના ભાગમાં गलेके बाहरके भागमें, **अवतिष्ठते** રહે છે रहता है, **शनैः** અને ધીમે ધીમે और धीमे धीमे, **शोफम्** સોજો शोथको, **संजनयेत्** ઉત્પન્ન કરે છે उत्पन्न करता है, **अस्य** તેને इसको, **गलगण्डः** ગલગંડ गलगण्ड, **जायते** થાય છે होता है ॥२१॥

21. When the provoked kapha in the body gets localised outside the throat, it produces chronic swelling there and causes Galaganda (Derade noncus.)

गलग्रहस्य संप्राप्तिः लक्षणं च—

**यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थिरः ।**
**आशु संजनयेच्छोफं जायतेऽस्य गलग्रहः ॥२२॥**

**यस्य** જેનો जिसका, **प्रकुपितः** કુપિત થયેલો प्रकुपित हुआ, **श्लेष्मा** કફ कफ, **अन्तर्गले** ગળાના અંદરના ભાગમાં गलेके अन्दरके भागमें, **स्थिरः** સ્થિર स्थिर, **तिष्ठति** થાય છે होता है, **आशु** અને જલદી और जल्दी, **शोफम्** સોજો शोथ, **संजनयेत्** ઉત્પન્ન કરે છે उत्पन्न करता है, **अस्य** એને इसे, **गलग्रहः** ગલગ્રહ गलग्रह, **जायते** થાય છે होता है ॥२२॥

22. When the provoked kapha in the body becomes firmly established inside the throat, it produces immediately an acute swelling and causes Galagraha (throat-spasm.)

विसर्पस्य संप्राप्तिः लक्षणं च—

**यस्य पित्तं प्रकुपितं सरक्तं त्वचि सर्पति ।**
**शोफं सरागं जनयेद्विसर्पस्तस्य जायते ॥ २३॥**

**यस्य** જેનું जिसका, **प्रकुपितम्** કુપિત થયેલું कुपित हुआ, **पित्तम्** પિત્ત पित्त, **सरक्तम्** લોહી સહિત रक्तके साथ, **त्वचि** ચામડીમાં त्वचामें, **सर्पति** પ્રસરે છે फैलता है, **सरागम्** અને રતાશવાળો और रक्तवर्ण, **शोफम्** સોજો शोथको, **जनयेत्** ઉત્પન્ન કરે છે उत्पन्न करता है, **तस्य** તેને उसको, **विसर्पः** વિસર્પ विसर्प, **जायते** થાય છે होता है ॥२३॥

23. When the provoked pitta along with the vitiated blood in the body spreads in the skin it produces an acute red swelling and causes acute spreading affection.

पिडकायाः संप्राप्तिः लक्षणं च—

**यस्य पित्तं प्रकुपितं त्वचि रक्तेऽवतिष्ठते ।**
**शोथं सरागं जनयेत् पिडका तस्य जायते ॥२४॥**

**यस्य** જેનું जिसका, **प्रकुपितम्** કુપિત થયેલું प्रकुपित हुआ, **पित्तम्** પિત્ત पित्त, **त्वचि** ચામડીમાં त्वचामें, **रक्ते** અને લોહીમાં और रक्तमें, **अवतिष्ठते**

२१. संजनयेच्छोफं–संजनयच्छोथं (घ.)
२२. स्थिरः–स्थितः (ख.)
,, संजनयेच्छोफम्–संजनयच्छोथम् (घ.)
,, जायतेऽस्य गलग्रहः–करोति गलशुण्डिकाम् (ङ.)
२३. शोफं–शोथं (घ.)
,, जनयेत्–जनयत् (घ.)
२४. शोथं–शोफं (ङ.)
,, जनयेत्–जनयत् (च. घ.)

સ્થિર થાય स्थिर होता है, सरागम् અને રતાશવાળો और रक्तवर्णयुक्त, शोथम् સોજો शोथको, जनयेत् ઉત્પન્ન કરે છે उत्पन्न करता है, तस्य તેને उसको, पिडका પિડકા पिडका, जायते થાય છે होती है ॥ २४ ॥

24. When the provoked pitta in the body becomes localised in the skin and the blood, it causes red swelling and the person is affected with pimples.

तिलकादीनां संप्राप्तिः लक्षणं च—

**यस्य प्रकुपितं पित्तं शोणितं प्राप्य शुष्यति ।**
**तिलकाः पिप्लवो व्यङ्गा नीलिका तस्य जायते ॥२५॥**

यस्य જેનું जिसका, प्रकुपितम् કુપિત થયેલું कुपित हुआ, पित्तम् પિત્ત पित्त, शोणितम् લોહીમાં रक्तमें, प्राप्य પહોંચીને पहुंचकर, शुष्यति સુકાઇ જાય છે सूख जाता है, तस्य તેને उसको, तिलकाः તિલકાલક तिल, पिप्लवः પિપ્લુ पिप्लु, व्यङ्गाः વ્યંગ व्यङ्ग, नीलिका અને નીલિકા और नीलिका, जायते થાય છે होती है ॥ २५ ॥

25. When the provoked pitta in the body reaching the blood dries up then the person develops moles, port-wine marks, Vyanga or blue-black moles.

शङ्खकस्य संप्राप्तिः लक्षणं च—

**यस्य पित्तं प्रकुपितं शङ्खयोरवतिष्ठते ।**
**श्वयथुः शङ्खको नाम दारुणस्तस्य जायते ॥२६॥**

यस्य જેનું जिसका, प्रकुपितम् કુપિત થયેલું प्रकुपित हुआ, पित्तम् પિત્ત पित्त, शङ्खयोः બન્ને લમણામાં शङ्खप्रदेशोंमें, अवतिष्ठते સ્થિર થાય स्थिर हो-जाता है, तस्य તેને उसको, शङ्खकः શંખક शंखक, नाम નામનો नाम, दारुणः ભયંકર दारुण, श्वयथुः સોજો शोथ, जायते થાય છે होता है ॥२६॥

26. When the provoked pitta in the body gets localised in the temples, the person is affected with an acute, serious swelling called Sankhaka (facial Erysipelas).

कर्णमूलशोथस्य संप्राप्तिः लक्षणं च—

**यस्य पित्तं प्रकुपितं कर्णमूलेऽवतिष्ठते ।**
**ज्वरान्ते दुर्जयोऽन्ताय शोथस्तस्योपजायते ॥२७॥**

यस्य જેનું जिसका, प्रकुपितम् કુપિત થયેલું प्रकुपित हुआ, पित्तम् પિત્ત पित्त, ज्वरान्ते તાવને અન્તે ज्वरके अन्तमें, कर्णमूले કાનના મૂળમાં कर्णमूलमें, अवतिष्ठते સ્થિર થાય છે स्थिर होता है, तस्य તેને उसको, दुर्जयः ન મટે એવો कष्टसाध्य, शोथः શોથ शोथ, अन्ताय મરણ માટે मृत्युके लिए, उपजायते થાય છે उत्पन्न होता है ॥ २७ ॥

27. When the provoked pitta in the body gets localised at the root of the ear at the termination of fever, the person develops an incurable swelling leading to death.

प्लीहाभिवृद्धेः संप्राप्तिः लक्षणं च—

**वातः प्लीहानमुद्धूय कुपितो यस्य तिष्ठति ।**
**शनैः परितुदन् पार्श्वं प्लीहा तस्याभिवर्धते ॥२८॥**

यस्य જેનો जिसका, कुपितः કુપિત થયેલો प्रकुपित हुआ, वातः વાયુ वात, प्लीहानम् બરોળને प्लीहाको, उद्धूय ખસેડીને खिसकाकर, तिष्ठति સ્થિત થાય છે स्थिर होता है, तस्य તેને उसे, पार्श्वम् ડાબા પડખામાં वाम पार्श्वमें, शनैः ધીમે ધીમે धीमे धीमे, परितुदन् પીડા કરતી पीडा करती हुई, प्लीहा બરોળ प्लीहा, अभिवर्धते વધે છે बढती है ॥२८॥

28. When the provoked vata in the body becomes established in the spleen and excites it, there is slow

२५. पिप्लवो–पिप्लवा (क.)
,, व्यङ्गा–व्यङ्गो (घ. च.)

२८. शनैः–शूलैः (ग. घ.)

and chronic pricking pain in the left side of the body and the spleen gets enlarged.

गुल्मस्य संप्राप्तिः लक्षणं च—

**यस्य वायुः प्रकुपितो गुल्मस्थानेऽवतिष्ठते ।**
**शोफं सशूलं जनयन् गुल्मस्तस्योपजायते ॥२९॥**

**यस्य** જેનો जिसका, **प्रकुपितः** કુપિત થયેલો कुपित हुआ, **वायुः** વાયુ वायु, **गुल्मस्थाने** ગુલ્મસ્થાનમાં गुल्मस्थानमें, **अवतिष्ठते** સ્થિર થાય છે स्थिर होती है, **तस्य** તેને उसको, **सशूलम्** શૂલ સહિત शूलयुक्त, **शोथम्** સોજો शोथ, **जनयन्** ઉત્પન્ન કરતો उत्पन्न करता हुआ, **गुल्मः** ગુલ્મ गुल्म, **उपजायते** થઈ આવે છે होता है ॥२९॥

29. When the provoked vata in the body gets localised in the abdominal region, it causes a swelling accompanied with colicky pain and afflicts the person with Gulma.

वृद्धेः संप्राप्तिः लक्षणं च—

**यस्य वायुः प्रकुपितः शोफशूलकरश्चरन् ।**
**वङ्क्षणाद्वृषणौ याति वृद्धिस्तस्योपजायते ॥ ३० ॥**

**यस्य** જેનો जिसका, **प्रकुपितः** કુપિત થયેલો कुपित हुआ, **वायुः** વાયુ वायु, **शोफ-शूल-** સોજો અને શૂલ કરીને शोफ और शूल करके, **चरन्** ફરતો ફરતો फिरती फिरती, **वङ्क्षणात्** વંક્ષણમાંથી वंक्षणमेंसे, **वृषणौ** વૃષણોમાં वृषणमें, **याति** જાય जाती है, **तस्य** તેને उसको, **वृद्धिः** વૃદ્ધિરોગ वृद्धिरोगः, **उपजायते** થાય છે होता है ॥३०॥

30. If the provoked vata in the body producing swelling and pain moves gradually and migrates from the groin ( inguinal region ) to the scrotum the man gets enlargement of the scrotum.

उदरस्य संप्राप्तिः लक्षणं च—

**यस्य वातः प्रकुपितस्त्वङ्मांसान्तरमाश्रितः ।**
**शोथं संजनयेत् कुक्षावुदरं तस्य जायते ॥३१॥**

**यस्य** જેનો जिसका, **प्रकुपितः** કુપિત થયેલો कुपित हुआ, **वायुः** વાયુ वायु, **त्वक्-** ચામડી त्वचा. **मांस-** અને માંસની और मांसके, **अन्तरम्** વચ્ચે बीचमें, **आश्रितः** રહી रहकर, **कुक्षौ** ઉદરમાં उदरमें, **शोथम्** શોથ शोथ, **संजनयेत्** ઉત્પન્ન કરે उत्पन्न करे, **तस्य** તેને उसको, **उदरम्** ઉદરરોગ उदररोग, **जायते** થાય છે होता है ॥ ३१ ॥

31. When the provoked vata in a person's body gets a hold between the skin and the flesh, it causes a swelling in the belly and the person suffers from abdominal affections.

आनाहस्य संप्राप्तिः लक्षणं च—

**यस्य वातः प्रकुपितः कुक्षिमाश्रित्य तिष्ठति ।**
**नाधो व्रजति नाप्यूर्ध्वमानाहस्तस्य जायते ॥३२॥**

**यस्य** જેનો जिसका, **प्रकुपितः** કુપિત થયેલો कुपित हुआ, **वातः** વાયુ वायु, **कुक्षिम्** ઉદરનો उदरका, **आश्रित्य** આશ્રય કરી आश्रय करके, **तिष्ठति** રહે છે रहती है, **अधः न** નથી નીચે न तो नीचे, **उर्ध्वम् अपि न** અને નથી ઉપર પણ और न तो ऊपर ही, **व्रजति** જાતો जाती है, **तस्य** તેને उसको, **आनाहः** આનાહ आनाह, **जायते** થાય છે होता है ॥ ३२ ॥

32. When the provoked vata in the body becomes established in the region of a person's belly and moves neither upwards nor downwards, then he is afflicted with constipation.

२९. वायुः—वातः (ग. च.)
„ शोफम्—शोथम् (घ. च.)
३०. वृद्धिः—वर्ध्मं (झ. थ.)
„ „ —ब्रध्नः (त. प.)

३१. शोथं—शोफं (ग. त.)
३२. आश्रित्य—आवार्य (ग. थ. द.)

अधिमांसार्बुदादीनामपि शोथेऽन्तर्भावः —

**रोगाश्चोत्सेधसामान्यादधिमांसार्बुदादयः ।**
**विशिष्टा नामरूपाभ्यां निर्देश्याः शोथसंग्रहे ॥३३॥**

**अधिमांस-** અધિમાંસ अधिमांस, **अर्बुद–आदयः** અર્બુદાદિ अर्बुद आदि, **रोगाः** રોગો रोगों, (**यदि अपि** જો કે यद्यपि), **नाम-** નામ नाम, **रूपाभ्याम्** તથા રૂપથી तथा रूपसे, **विशिष्टाः** પરસ્પર ભિન્ન છે परस्परभिन्न हैं, (**तथा अपि** તો પણ तो भी), **उत्सेध–सामान्यात्** ઊંચાપણાની સમાનતાને લીધે ऊंचापनकी समानतासे, **शोथसंग्रहे** સોજાઓના સંગ્રહમાં शोथोंके संग्रहमें, **निर्देश्याः** કહેવા યોગ્ય છે कहने योग्य हैं ॥ ३३ ॥

33. Fleshy, malignant and other tumours, though quite different in name and symptoms should be included in the group of swellings, owing to their having the common feature of swelling.

रोहिण्याः संप्राप्तिः —

**वातपित्तकफा यस्य युगपत् कुपितास्त्रयः ।**
**जिह्वामूलेऽवतिष्ठन्ते विदहन्तः समुच्छ्रिताः ॥३४॥**
**जनयन्ति भृशं शोथं वेदनाश्च पृथग्विधाः ।**
**तं शीघ्रकारिणं रोगं रोहिणीति विनिर्दिशेत् ॥३५॥**

**यस्य** જેના जिसके, **युगपत्** એક સાથે एक साथ, **कुपिताः** કુપિત થયેલા कुपित हुए, **त्रयः** ત્રણે तीनों, **वात-** વાત वात, **पित्त-** પિત્ત पित्त, **कफाः** તથા કફ તथा कफ, **समुच्छ्रिताः** બહુ વૃદ્ધિ પામી बहुत बढकर, **विदहन्तः** વિદાહ ઉત્પન્ન કરતા विदाह उत्पन्न करते हुए, **जिह्वामूले** જીભના મૂળમાં जिह्वामूलमें, **अवतिष्ठन्ते** સ્થિર થાય છે स्थिर होते है, (**तस्य** ते તેને તેઓ उसे वे), **भृशम्** ઘણો अत्यन्त, **शोथम्** સોજો शोथ, **पृथग्विधाः** અને જુદી જુદી જાતની और नाना प्रकारकी, **वेदनाः** વેદનાઓ वेदनाओंको, **जनयन्ति** ઉત્પન્ન કરે છે उत्पन्न करते हैं, **तम्** તે उस, **शीघ्रकारिणम्** શીઘ્રકારી शीघ्रकारी, **रोगम्** રોગને रोगको, **रोहिणी** રોહિણી रोहिणी, **इति** એમ ऐसा, **विनिर्दिशेत्** કહેવો कहे ॥ ३४-३५ ॥

34-35. When all the three humors vata, pitta and kapha are excessively increased and provoked simultaneously in the body and get localised at the base of the tongue, they scorch locally and cause extensive swelling and pain of various kinds. This acutely spreading disease is called Rohini (Diphtheria).

रोहिण्याः साध्यत्वासाध्यत्वनिर्देशः —

**त्रिरात्रं परमं तस्य जन्तोर्भवति जीवितम् ।**
**कुशलेन त्वनुक्रान्तः क्षिप्रं संपद्यते सुखी ॥ ३६॥**

**तस्य** તે उस, **जन्तोः** પ્રાણીની मनुष्यकी, **जीवितम्** જિંદગી जिंदगी, **परमम्** વધુમાં વધુ अधिकसे अधिक, **त्रिरात्रम्** ત્રણ રાતની तीन रातकी, **भवति** હોય છે होती है, **कुशलेन तु** પરંતુ કુશળ વૈદ્યે परन्तु कुशल वैद्यसे, **क्षिप्रम्** તરત तुरन्त, **अनुक्रान्तः** ચિકિત્સા કરી હોય તો चिकित्सा करा लेने पर, **सुखी** નીરોગ नीरोग, **सम्पद्यते** થાય છે होता है ॥ ३६ ॥

36. Three nights and days are the longest period that the patient can survive but if treated soon by an expert, he may be restored to health.

कृच्छ्रसाध्यस्य लक्षणम्—

**सन्ति ह्येवंविधा रोगाः साध्या दारुणसंमताः ।**
**ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः ॥३७॥**

---

३३. विशिष्टा–विशिष्ट (ध.)
३५. शोथं–शोफं (ग.)
,, रोगं–नाम्ना (ख. ठ. त.)
,, रोहिणीति विनिर्दिशेत्–रोहिणीकेति निर्दिशेत् (ग. ध.)
३६. तस्य–चास्य (च.)
,, °क्रान्तः–°प्राप्तः (ग. थ. ध.)
३७. ह्येवंविधाः–चैवंविधाः (च.)
,, मिथ्याचारेण–मिथ्यारम्भेण (क. च. ध.)

एवंविधाः આવી જાતના इस प्रकारके, दारुण-संमताः દારુણ કહેલા दारुण कहे गये, रोगाः બીજા રોગો પણ अन्य रोग भी, साध्याः સાધ્ય साध्य, सन्ति हि છે हैं, ચે જે जो, अनुपक्रान्ताः ચિકિત્સા કરવામાં ન આવે चिकित्सा न की जाय, मिथ्याचारेण वा पुनः અથવા સારી રીતે પરહેજ રાખવામાં ન આવે તો अथवा अच्छी तरहसे परहेज न रखा जाय तो, हन्युः હણે છે मार देते हैं ॥ ३७ ॥

37. There are many such diseases which though acute and severe, are yet curable. They may kill the patient if they are either not treated at all or wrongfully treated.

सुखसाध्यस्य लक्षणम्—

**साध्याश्चाप्यपरे सन्ति व्याधयो मृदुसंमताः ।**
**यत्नायत्नकृतं येषु कर्म सिध्यत्यसंशयम् ॥ ३८ ॥**

अपि च વળી और, मृदु- કોમળ कोमल, संमताः માનેલા समझे हुए, अपरे બીજા પણ दूसरे भी, व्याधयः રોગો रोग, साध्याः સાધ્ય साध्य, सन्ति છે हैं, येषु જેઓ પર जिनमें, यत्न- યત્નથી यत्नसे, अयत्न- કે યત્ન વગર પણ यत्नके विना भी, कृतम् કરેલી की हुई, कर्म ચિકિત્સા चिकित्सा, असंशयम् ચોક્કસ बिना संशयके, सिध्यति સિદ્ધ થાય છે सफल होती है ॥ ३८ ॥

38. There are other diseases which are considered mild and curable. In these diseases full or even slight treatment certainly accomplishes cure.

याप्यस्य लक्षणम्—

**असाध्याश्चापरे सन्ति व्याधयो याप्यसंज्ञिताः ।**
**सुसाध्वपि कृतं येषु कर्म यात्राकरं भवेत् ॥ ३९ ॥**

याप्यसंज्ञिताः च અને યાપ્ય કહેવાતા और याप्यसंज्ञक, अपरे બીજા दूसरे, व्याधयः રોગો रोग, असाध्याः અસાધ્ય असाध्य, सन्ति છે हैं, येषु જેના પર जिनमें, सुसाधु બહુ સારી રીતે बहुत उत्तमतासे, अपि પણ भी, कृतम् કરેલી की हुई, कर्म चिकित्सा चिकित्सा यात्राकरम् ટકાવી રાખનારી बनाये रखनेवाली, भवेत् થાય છે होती है ॥ ३९ ॥

39. There are other incurable diseases which are called palliable. The best treatment given in such cases may help the patient to pull on with existence.

प्रत्याख्येयस्य लक्षणम्—

**सन्ति चाप्यपरे रोगा येषु कर्म न सिध्यति ।**
**अपि यत्नकृतं बालैर्न तान् विद्वानुपाचरेत् ॥ ४० ॥**

अपरे च अपि વળી બીજા પણ और दूसरे भी, रोगाः રોગ रोग, सन्ति છે हैं, येषु જેઓ પર जिनमें, बालैः અજ્ઞાનીઓએ अज्ञानियों द्वारा, यत्नकृतम् યત્નપૂર્વક કરેલી यत्नपूर्वक की हुई, अपि પણ भी, कर्म ચિકિત્સા चिकित्सा, न નથી नहीं, सिद्ध्यति સિદ્ધ થતી सिद्ध होती, विद्वान् વિદ્વાન વૈદ્ય विद्वान वैद्य, तान् તેઓના उनकी, न उपाचरेत् ઉપચાર નહિ કરવા चिकित्सा न करे ॥ ४० ॥

40. And there are also other diseases where no treatment succeeds, even if the inexperienced physician tries to cure them, but the wise and experienced physician will not undertake to treat them.

रोगाणां साध्यादिभेदाः—

**साध्याश्चैवाप्यसाध्याश्च व्याधयो द्विविधाः स्मृताः ।**
**मृदुदारुणभेदेन ते भवन्ति चतुर्विधाः ॥ ४१ ॥**

साध्याः સાધ્ય साध्य, अपि च एव અને વળી और भी, असाध्याः च અસાધ્ય असाध्य, व्याधयः એમ રોગો ऐसे रोग, द्विविधाः બે પ્રકારના दो प्रकारके, स्मृताः માનેલા છે कहे हैं, मृदु- મૃદુ मृदु,

३८. साध्याश्चाप्यपरे—साध्याश्चैवापरे (च. ध.)

४०. बालै—वैद्यै (ध. द.)

दारुण- તથા દારુણ તથા दारुण, भेदेन એ ભેદથી से भेदसे, ते તેઓ वे, चतुर्विधाः ચાર પ્રકારના चार प्रकारके, भवन्ति થાય છે होते हैं ॥ ४१ ॥

41. Diseases are described to be of two kinds-curable and incurable; and classified according to mildness and severity they are of four kinds.

रुजादिभेदाद्रोगाणामनेकत्वेऽप्यत्र यथास्थूलं संग्रहः—

**त एवापरिसंख्येया भिद्यमाना भवन्ति हि।**
**रुजावर्णसमुत्थानस्थानसंस्थाननामभिः ॥४२॥**

रुजा- વેદના वेदना, वर्ण- રંગ वर्ण, समुत्थान- કારણ कारण, स्थान- સ્થાન स्थान, संस्थान- આકૃતિ आकृति, नामभिः તથા નામથી तथा नामसे, भिद्यमानाः ભેદો પાડતાં भेद करने पर, ते તેઓ वे, एव જ ही, अपरिसंख्येयाः અસંખ્ય असंख्य, भवन्ति થઈ જાય છે हो जाते हैं ॥ ४२ ॥

42. When classified according to cause, pain, colour, site, form and nomenclature, the number of these diseases becomes really countless.

**व्यवस्थाकरणं तेषां यथा स्थूलेषु संग्रहः।**
**तथा प्रकृतिसामान्यं विकारेषूपदिश्यते ॥४३॥**

यथा જેવી રીતે जैसे, स्थूलेषु સ્થૂલ રોગોમાં स्थूल रोगोंमें, संग्रहः સમાવેશ થાય તેવી રીતે संग्रह हो उस तरह, तेषाम् તે રોગોની उन रोगोंकी, व्यवस्था-करणम् સંખ્યાનું કથન કરવામાં આવે છે संख्याका कथन किया जाता है, तथा અને और, विकारेषु નહિ કહેલા રોગોમાં ચિકિત્સાના વ્યવહાર માટે अनुक्त रोगोंकी चिकित्साका व्यवहार करनेके लिए, प्रकृतिसामान्यम् કારણની (વાત, પિત્ત તથા કફની) સમાનતાનો कारणकी (वात, पित्त तथा कफकी) समानताका, उपदिश्यते ઉપદેશ કરવામાં આવે છે उपदेश किया जाता है ॥ ४३ ॥

43. Just as a broad classification has been given in the brief description (in the chapter on "The eight kinds of Abdominal Disorders",) with a view to systematise them for purposes of treatment even so the common characteristics of the morbid humors in disorders will now be described.

कुपितस्यैकस्यैव दोषस्य विविधरोगकरत्वे रोगाणामपरिसंख्येयत्वे च तेषां चिकित्सिते सामान्योपदेशः—

**विकारनामाकुशलो न जिह्रीयात् कदाचन।**
**न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः॥४४**

विकार- વિકારનું रोगोंके, नाम- નામ नाम, अकुशलः ન જાણનાર વૈદ્ય न जाननेवाले वैद्यको, कदाचन કદી પણ कभी भी, न ન नहीं, जिह्रीयात् શરમાવું જોઈએ शरमाना चाहिए, हि કારણકે क्योंकि, सर्वविकाराणाम् સર્વ વિકારોની सब रोगोंके, नामतः નામથી नामोंसे, ध्रुवा ચોક્કસ निश्चित, स्थितिः સ્થિતિ स्थिति, न अस्ति નથી नहीं है ॥ ४४ ॥

44. A physician should never be ashamed if he is not able to name a disease, as there can be no definite standardisation of nomenclature of all diseases.

**स एव कुपितो दोषः समुत्थानविशेषतः।**
**स्थानान्तरगतश्चैव जनयत्यामयान् बहून् ॥४५॥**

४२. रुजावर्णसमुत्थानस्थानसंस्थाननामभिः—निदानवेदनावर्णस्थानसंस्थाननामभिः (क.ग.च.छ.थ.ध.)

४३. व्यवस्थाकरणम्—व्यवस्थाकारणम् (ग.थ)

,, यथा स्थूलेषु—यथा स्थौल्येन (थ.)

,, ,, —यथा स्थानेषु (प.)

,, विकारेषु—कारणेषु (प.)

४४. ध्रुवा स्थितिः—ध्रुवा गतिः (ग.थ.)

४५. स्थानान्तरगतश्चैव जनयत्यामयान् बहून्—स्थानान्तरगतश्चापि विकारान् कुरुते बहून् (ग.ध.)

,, चैव—चापि (च.)

कुपितः કુપિત થયેલો कुपित हुआ, सः તે वह, एव જ ही, दोषः દોષ दोष, समुत्थान- હેતુઓના कारणके, विशेषतः ભેદથી भेदसे, स्थानान्तर- જુદાં જુદાં સ્થાનને भिन्न भिन्न स्थानको, गतः च एव પ્રાપ્ત થઈ प्राप्त हो कर, बहून् ઘણા बहुतसे, आमयान् રોગોને रोगोंको, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है ॥४५॥

45. The same provoked humour according to the diversity of causes and its localisation in different regions produces many varieties.

**तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च ।**
**समुत्थानविशेषांश्च बुद्ध्वा कर्म समाचरेत् ॥४६॥**

तस्मात् તેથી વૈદ્ય इस लिए वैद्य, विकार- વિકારોની रोगकी, प्रकृतीः પ્રકૃતિ प्रकृति अधिष्ठानान्तराणि च સ્થાનના ભેદ स्थानके भेद, समुत्थान- અને હેતુઓના और कारणके विशेषान् च ભેદ भेदको, बुद्ध्वा જાણીને जान कर, कर्म ચિકિત્સા चिकित्सा, समाचरेत् કરવી करे ॥ ४६ ॥

46. Therefore treatment should be initiated after diagnosing the nature of the disease, the different regions of localization, and the special causative factors.

**यो ह्येतत् त्रितयं ज्ञात्वा कर्माण्यारभते भिषक् ।**
**ज्ञानपूर्वं यथान्यायं स कर्मसु न मुह्यति ॥४७॥**

यः हि જે जो, भिषक् વૈદ્ય वैद्य, एतत् આ इन, त्रितयम् ત્રણે બાબતને तीन बातोंको, ज्ञात्वा જાણીને जान कर, ज्ञानपूर्वम् જ્ઞાનપૂર્વક ज्ञानपूर्वक, यथान्यायम् યથાયોગ્ય यथायोग्य, कर्माणि ચિકિત્સા चिकित्सा आरभते શરૂ કરે છે आरम्भ करता है, सः તે वह, कर्मसु ચિકિત્સામાં चिकित्सामें, न નથી नहीं, मुह्यति મૂંઝાતો घबराता ॥ ४७ ॥

४७. त्रितयं—त्रिविधं (घ. छ)
,, यथान्यायं - यथाम्नायं (च. ध.)

47. The physician who after ascertaining all these three things, begins treatment intelligently and systematically will not err in therapeutic procedure.

विकृताः प्रकृतिस्था वा दोषा अवश्यं ज्ञेयाः —

**नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः ।**
**विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः॥४८॥**

प्राणभृताम् પ્રાણીઓના मनुष्योंके, देहे દેહમાં शरीरमें, विकृताः વિકૃત અવસ્થામાં विकृत अवस्थामें, प्रकृतिस्थाः वा અથવા પ્રકૃતિમાં રહેલ अथवा प्रकृतिमें रहे हुए, त्रयः ત્રણે तीन, वात- વાત वात, पित्त- પિત્ત पित्त, कफाः तथा કફ તથા कफ, नित्याः નિત્ય છે नित्य हैं, पण्डितः પંડિતે बुद्धिमान्, तान् તેઓને इनको, बुभुत्सेत જાણવાની ઇચ્છા રાખવી જોઈએ जाननेकी इच्छा करे ॥ ४८ ॥

48. Vata, pitta and kapha, reside either in their normal or pathological state in the bodies of all embodied creatures. Hence the learned physician should desire to recognise them.

प्रकृतिस्थानां वातादीनां कर्म—

**उत्साहोच्छ्वासनिःश्वासचेष्टा धातुगतिः समा ।**
**समो मोक्षो गतिमतां वायोः कर्माविकारजम् ॥४९॥**

उत्साह- ઉત્સાહ उत्साह, उच्छ्वास- ઉચ્છ્વાસ उच्छ्वास, निःश्वास- નિઃશ્વાસ निःश्वास, चेष्टाः ચેષ્ટા चेष्टा, समा સમ અવસ્થામાં समान रूपमें, धातुगतिः ધાતુઓનું વહન धातुओंका वहन, गतिमताम् ગમનશીલ વસ્તુઓનું गमनशील वस्तुओंकी, समः સરખી રીતે समान रूपमें, मोक्षः બહાર કાઢવું बाहर निकालना, (इति એ ये), अविकारजम् અવિકૃત अविकृत, वायोः વાયુનાં वायुके, कर्म કર્મ છે कर्म हैं ॥ ४९ ॥

49. Actions of the normal vata are animation, inspiration and expiration

४९. गतिमतां—गतिमतो (ग.)

(respiratory movement), body-movement, regular circulation of body elements and regular elimination of excretions.

**दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम् ।**
**प्रभा प्रसादो मेधा च पित्तकर्माविकारजम् ॥५०॥**

दर्शनम् દેખવું देखना, पक्तिः પચાવવું पचाना, ऊष्मा ગરમી गरमी, क्षुत् ભૂખ भूख, तृष्णा તરસ प्यास, देह- દેહની शरीरकी, मार्दवम् કોમળતા कोमलता, प्रभा કાન્તિ कान्ति, प्रसादः પ્રસન્નતા प्रसन्नता, मेधा च અને મેધા और मेधा, (इति એ ये,) अविकारजम् અવિકૃત अविकृत, पित्तकर्म પિત્તનાં કર્મ છે पित्तके कर्म हैं ॥ ५० ॥

50. Actions of the normal pitta are the power of vision, digestive fire, body heat, hunger, thirst, softness of body, lustre, clearness of mind and intelligence.

**स्नेहो बन्धः स्थिरत्वं च गौरवं वृषता बलम् ।**
**क्षमा धृतिरलोभश्च कफकर्माविकारजम् ॥५१॥**

स्नेहः સ્નિગ્ધતા स्निग्धता, बन्धः બન્ધન बन्धन, स्थिरत्वम् च સ્થિરતા स्थिरता, वृषता પુરુષાતન वृषता, बलम् બળ बल, क्षमा ક્ષમા क्षमा, धृतिः ધૈર્ય धैर्य, अलोभः च અને નિર્લોભતા और निर्लोभता, (इति એ ये), अविकारजम् અવિકૃત अविकृत, कफ- कर्म કફનાં કર્મ છે कफके कर्म हैं ॥ ५१ ॥

51. Actions of the normal kapha are viscousness, cohesion, firmness, heaviness, potency, strength, forgiveness, fortitude and greedlessness.

वातादीनां क्षयलक्षणम्—

**वाते पित्ते कफे चैव क्षीणे लक्षणमुच्यते ।**
**कर्मणः प्राकृताद्धानिर्वृद्धिर्वाऽपि विरोधिनाम् ॥५२॥**

वाते વાત वात, पित्ते પિત્ત पित्त, कफे च एव અને કફનો और कफके, क्षीणे क्षय થતાં क्षय होते हुए, प्राकृतात् પ્રાકૃત प्राकृत, कर्मणः કર્મની कर्मकी, हानिः હાનિ हानि, विरोधिनाम् अपि वा અથવા તો વિપરીત કર્મની अथवा तो विपरीत कर्मकी, वृद्धिः વૃદ્ધિ वृद्धि, लक्षणम् આ લક્ષણ यह लक्षण, उच्यते કહેવામાં આવે છે कहा जाता है ॥ ५२ ॥

52. Now the signs of decrease of vata pitta and kapha are described to be decrease of their respective actions. There may be the loss of their normal functions or even the increase of contrary ones.

वातादीनां वृद्धिलक्षणम्—

**दोषप्रकृतिवैशेष्यं नियतं वृद्धिलक्षणम् ।**
**दोषाणां प्रकृतिर्हानिर्वृद्धिश्चैवं परीक्ष्यते ॥५३॥**

दोष- દોષોની दोषोंकी, प्रकृति- પ્રકૃતિમાં प्रकृतिमें, वैशेष्यम् અધિકતા થાય એ अधिकता होना यह, नियतम् ચોક્કસ निश्चित, वृद्धि- દોષોની વૃદ્ધિનું दोषोंकी वृद्धिका, लक्षणम् લક્ષણ છે लक्षण है, एवम् આ પ્રમાણે इसी प्रकार, दोषाणाम् દોષોની दोषोंकी, प्रकृतिः સમતા समता, हानिः ક્ષીણતા क्षीणता, वृद्धिः च તથા અધિકતાની तथा अधिकताकी, परीक्ष्यते પરીક્ષા કરવામાં આવે છે परीक्षा की जाती है ॥ ५३ ॥

53. Increase of natural actions is the position indicated in the increase of humors. The norm, the decrease and increase of humors are thus diagnosed.

अध्यायार्थसंग्रहः—

**तत्र श्लोकाः—**

**संख्यां निमित्तं रूपाणि शोथानां साध्यतां न च ।**

५०. प्रभा—प्रज्ञा (ध.प.)

५२ क्षीणे—न्यूने (ध.प.)
,, विरोधिनाम्—विरोधिनी (ध.)
५३. वैशेष्यम्—वैषम्यम् (ध.)
,, प्रकृतिर्हानिः—प्रकृतेर्हानिः (प.)

**तेषां तेषां विकाराणां शोथांस्तांस्तांश्च पूर्वजान् ॥५४॥**
**विधिभेदं विकाराणां त्रिविधं बोध्यसंग्रहम् ।**
**प्राकृतं कर्म दोषाणां लक्षणं हानिवृद्धिषु ॥५५॥**
**वीतमोहरजोदोषलोभमानमदस्पृहः ।**
**व्याख्यातवांस्त्रिशोथीये रोगाध्याये पुनर्वसुः ॥५६॥**

**तत्र** તે વિષયમાં उस विषयमें, **श्लोकाः** ઉપસંહારના શ્લોકો છે કે उपसंहारके श्लोक हैं कि, **वीत-** નિઃશેષ થયેલ છે निःशेष हुए, **मोह-** મોહ मोह, **रजोदोष-** રજોગુણરૂપ દોષ रजोगुणरूप दोष, **लोभ-** લોભ लोभ, **मान-** અભિમાન अभिमान, **मद-** મદ मद, **स्पृहः** અને સ્પૃહા જેની એવા और स्पृहा जिसकी ऐसे, **पुनर्वसुः** ભગવાન પુનર્વસુએ भगवान पुनर्वसुने, **त्रिशोथीये** ત્રિશોથીય त्रिशोथीय, **रोगाध्याये** રોગાધ્યાયમાં रोगाध्यायमें, **शोथानाम्** શોથની शोथकी, **संख्याम्** સંખ્યા संख्या, **निमित्तम्** કારણ कारण, **रूपाणि** લક્ષણ लक्षण, **साध्यताम्** સાધ્યતા साध्यता, **न च** અસાધ્યતા असाध्यता, **तेषाम् तेषाम्** તે તે उन उन, **विकाराणाम्** વિકારોની रोगोंसे, **पूर्वजान्** પૂર્વે થતા पूर्व उत्पन्न हुए, **तान् तान्** તે તે वे वे, **शोथान् च** શોથ शोथ, **विकाराणाम्** વિકારોના रोगोंका, **विधिभेदम्** પ્રકારભેદ प्रकारभेद, **त्रिविधम्** ત્રણ પ્રકારનો तीन प्रकारका, **बोध्यसंग्रहम्** જાણવા યોગ્ય બાબતોનો સંગ્રહ जानने योग्य बातोंका संग्रह, **दोषाणाम्** દોષોનું रोगोंका, **प्राकृतम्** પ્રાકૃત प्राकृत, **कर्म** કર્મ कर्म, **हानि-** અને દોષોની હાનિ और दोषोंकी हानि, **वृद्धिषु** તથા વૃદ્ધિમાં तथा वृद्धिमें, **लक्षणम्** લક્ષણ એઓનું लक्षण इनका, **व्याख्यातवान्** વ્યાખ્યાન કર્યું છે व्याख्यान किया है ॥५४-५६॥

Here are the recapitulatory verses—

54-56. The number, causes, and signs and symptoms of edema, their curability or otherwise, the regional swellings and their respective precedent pathological conditions. Modes of classification of diseases, brief description of the three essential factors of diagnosis, normal actions of humors and symptoms produced in conditions of their decrease and increase. All these are described in the chapter entitled "The three kinds of Edema" by Punarvasu who is free from all infatuation, ignorance, passion, greed, pride, vanity and attachment.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने त्रिशोथीयो नामाष्टादशोऽध्यायः ॥ १८ ॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **श्लोकस्थाने** સૂત્રસ્થાન વિષે सूत्रस्थानमें, **त्रिशोथीयः** 'ત્રિશોથીય' 'त्रिशोथीय', **नाम** નામનો नामका, **अष्टादशः** અઢારમો अट्ठारहवाँ, **अध्यायः** અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ १८ ॥

18. Thus in the section on General Principles of the treatise compiled by Agnivesa and revised by Caraka, the eighteenth chapter entitled "The three kinds of Edema", is completed.

---

५४. शोथानां—शोफानां (ग.ध.)
,, विधिभेदं—तेषां तेषां (थ.)
,, त्रिविधं—त्रितयं (क.)
,, वीतमोह—वीतराग (ध.)
,, त्रिशोथीये—त्रिशोफीये (ध.)

## ऊनविंशोऽध्यायः ।

ઓગણીસમો અધ્યાય अध्याय उन्नीसवाँ

## Chapter XIX

अष्टोदरीयाध्यायोपक्रमः —

**अथातोऽष्टोदरीयमध्यायं व्याख्यास्यामः ॥१॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

अथ अतः હવે અહીંથી अब आगे, अष्टोदरीयम् 'અષ્ટોદરીય' નામના 'अष्टोदरीय' नामके, अध्यायम् અધ્યાયનું अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The Eight Abdominal Affections."

2. Thus declared the worshipful Atreya.

उदरादिरोगाणां संख्यानां निर्देशः—

**इह खल्वष्टावुदराणि, अष्टौ मूत्राघाताः, अष्टौ क्षीरदोषाः, अष्टौ रेतोदोषाः, सप्त कुष्ठानि, सप्त पिडकाः, सप्त वीसर्पाः; षडतीसाराः, षडुदावर्ताः;**

इह खलु આ આયુર્વેદમાં ખરેખર इस आयुर्वेदमें निश्चित रूपमें, अष्टौ આઠ आठ, उदराणि ઉદરરોગ उदररोग, अष्टौ આઠ आठ, मूत्राघाताः મૂત્રાઘાત मूत्राघात, अष्टौ આઠ आठ, क्षीरदोषाः ધાવણના દોષો स्तन्यके दोष, अष्टौ આઠ आठ, रेतोदोषाः વીર્યદોષો वीर्यदोष, सप्त સાત सात, कुष्ठानि કુષ્ઠ कुष्ठ, सप्त સાત सात, पिडकाः પિડકા पिडका, सप्त સાત सात, वीसर्पाः વિસર્પ विसर्प, षट् ૭ छः, अतीसाराः અતીસાર अतीसार, षट् ૭ छः, उदावर्ताः ઉદાવર્ત उदावर्त;

3-(1). There are eight varieties of abdominal affections, eight of the disorders of the urinary system, eight of galactic disorders, eight of seminal disorders, seven of dermatosis, seven of inflammatory swellings, seven of acute spreading affections, six of diarrhoea, six of misperistalsis;

**पञ्च गुल्माः, पञ्च प्लीहदोषाः, पञ्च कासाः, पञ्च श्वासाः, पञ्च हिक्काः, पञ्च तृष्णाः, पञ्च छर्दयः, पञ्च भक्तस्यानशनस्थानानि, पञ्च शिरोरोगाः, पञ्च हृद्रोगाः, पञ्च पाण्डुरोगाः, पञ्चोन्मादाः;**

पञ्च પાંચ पांच, गुल्माः ગુલ્મ गुल्म, पञ्च પાંચ पांच, प्लीह-दोषाः બરોળના દોષો प्लीहाके दोष, पञ्च પાંચ पांच, कासाः ઉધરસ कास, पञ्च પાંચ पांच श्वासाः શ્વાસ श्वास, पञ्च પાંચ पांच, हिक्काः હેડકી हिक्का. पञ्च પાંચ पांच, तृष्णाः તરસ तृषा, पञ्च પાંચ पांच, छर्दयः ઉલટી वमन, पञ्च પાંચ पांच, भक्तस्य ભોજન भोजन, अनशन-स्थानानि ન ખાવાનાં કારણો અર્થાત અરોચક न खानेके कारणों अर्थात् अरोचक, पञ्च પાંચ पांच, शिरोरोगाः શિરોરોગ शिरोरोग, पञ्च પાંચ पांच, हृद्रोगाः હૃદયના રોગ हृदयके रोग, पञ्च પાંચ पांच, पाण्डुरोगाः પાંડુરોગ पाण्डुरोग, पञ्च પાંચ पांच, उन्मादाः ઉન્માદ उन्माद;

3-(2). five of gulma, five of splenic disorders, five of coughs, five of dyspnea, five of hiccup, five of thirst, five of vomiting, five of loss of appetite, five of the diseases of the head, five of cardiac disorders, five of anemia, five of insanity;

**चत्वारोऽपस्माराः, चत्वारोऽक्षिरोगाः, चत्वारः कर्णरोगाः, चत्वारः प्रतिश्यायाः, चत्वारो मुखरोगाः, चत्वारो ग्रहणीदोषाः, चत्वारो मदाः, चत्वारो मूर्च्छायाः, चत्वारः शोषाः, चत्वारि क्लैब्यानि;**

३. प्लीहदोषाः—प्लीहप्रदोषाः (ज.)

चत्वारः ચાર चार, अपस्माराः અપસ્માર अपस्मार, चत्वारः ચાર चार, अक्षिरोगाः આંખના રોગો आंखके रोग, चत्वारः ચાર चार, कर्णरोगाः કાનના રોગો कानके रोग, चत्वारः ચાર चार, प्रतिश्यायाः સળેખમ प्रतिश्याय, चत्वारः ચાર चार, मुखरोगाः મુખરોગ मुखरोग, चत्वारः ચાર चार, ग्रहणीदोषाः ગ્રહણીદોષ ग्रहणीदोष, चत्वारः ચાર चार, मदाः મદ मद, चत्वारः ચાર चार, मूर्च्छायाः મૂર્ચ્છા मूर्च्छा, चत्वारः ચાર चार, शोषाः શોષ शोष, चत्वारि ચાર चार, क्लैब्यानि નપુંસકત્વ क्लीबता;

3-(3). four of epilepsy, four of eye-diseases, four of ear-diseases, four of coryza, four of assimilation disorders, four of intoxication, four of fainting, four of consumption, four of impotency.

**त्रयः शोफाः, त्रीणि किलासानि, त्रिविधं लोहितपित्तं; द्वौ ज्वरौ, द्वौ व्रणौ, द्वावायामौ, द्वे गृध्रस्यौ, द्वे कामले, द्विविधमामं, द्विविधं वातरक्तं, द्विविधान्यर्शांसि;**

त्रयः ત્રણ तीन, शोफाः શોફ शोथ, त्रीणि ત્રણ तीन, किलासानि કિલાસ किलास, त्रिविधम् ત્રણ પ્રકારનું तीन प्रकारका, लोहितपित्तम् રક્તપિત્ત रक्तपित्त, द्वौ બે दो, ज्वरौ તાવ ज्वर, द्वौ બે दो, व्रणौ વ્રણ व्रण, द्वौ બે दो, आयामौ આયામ आयाम, द्वे બે दो, गृध्रस्यौ ગૃધ્રસી गृध्रसी, द्वे બે दो, कामले કમળા कामला, द्विविधम् બે પ્રકારનું दो प्रकारका, आमम् આમ आम, द्विविधम् બે પ્રકારનાં दो प्रकारके, वातरक्तम् વાતરક્ત वातरक्त, द्विविधानि બે પ્રકારના दो प्रकारके, अर्शांसि અર્શ अर्श;

3-(4). three of edema, three of leprosy, three varieties of hemothermia, two of fever, two of wounds, two of convulsions, two of sciatica, two of jaundice, two of chyme-disorders, two of rheumatic condition, two of piles;

**एक ऊरुस्तम्भः, एकः संन्यासः, एको महागदः; विंशतिः क्रिमिजातयः, विंशतिः प्रमेहाः, विंशतिर्योनिव्यापदः; इत्यष्टचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे समुद्दिष्टानि ॥ ३ ॥**

एकः એક एक, ऊरुस्तम्भः ઊરુસ્તંભ ऊरुस्तम्भ, एकः એક एक, संन्यासः સંન્યાસ सन्यास, एकः એક एक, महागदः મહાગદ महागद, विंशतिः વીસ वीस, क्रिमिजातयः કૃમિઓની જાત कृमियोंके भेद, विंशतिः વીસ वीस, प्रमेहाः પ્રમેહ प्रमेह, विंशतिः અને વીસ और वीस, योनिव्यापदः યોનિરોગ योनिरोग, इति આ પ્રમાણે इस प्रकार, अस्मिन् આ इस, संग्रहे સંગ્રહમાં संग्रहमें, अष्टचत्वारिंशत् અડતાલીસ अडतालीस, रोगाधिकरणानि રોગના વિષયો रोगके विषयों, समुद्दिष्टानि કહી બતાવ્યા છે कहे गये हैं ॥ ३ ॥

3. one of spastic paraplegia, one of syncope, one of morbus magna, twenty varieties of worms, twenty of anomalies of urinary secretion, twenty of gynecic disorders—thus in this enumeration are given forty-eight varieties of diseases.

अष्टौ उदराणि, अष्टौ मूत्राघाताः—

**एतानि यथोद्देशमभिनिर्देक्ष्यामः—**

**अष्टावुदराणीति वातपित्तकफसन्निपातप्लीहबद्धच्छिद्रदकोदराणि, अष्टौ मूत्राघाता इति वातपित्तकफसन्निपाताश्मरीशर्कराशुक्रशोणितजाः,**

एतानि એઓને इनको, यथोद्देशम् અનુક્રમે क्रमशः, अभिनिर्देक्ष्यामः વિસ્તારથી કહી બતાવશું विस्तारसे कहेंगे, वात- વાતોદર वातोदर, पित्त- પિત્તોદર पित्तोदर, कफ- કફોદર कफोदर, सन्निपात- સન્નિપાતોદર सन्निपातोदर, प्लीह—પ્લીહોદર प्लीहोदर, बद्ध- બદ્ધોદર बद्धोदर,

३. शोफाः—शोथाः (घ.)

३. समुद्दिष्टानि उद्दिष्टानि (ग.)

४-(१). एतानि—तानि (ग.)

**स्वेदः शरीरदौर्गन्ध्यं मदः कम्पः स्वरक्षयः ।**
**तन्द्रानिद्रातियोगश्च तमसश्चातिदर्शनम् ॥१५॥**

**कण्ड्वरुःकोठपिडकाकुष्ठचर्मदलादयः ।**
**विकाराः सर्वे एवैते विज्ञेयाः शोणिताश्रयाः ॥१६॥**

ततः तेथी इससे, पृथग्विधाः जुदी जुदी जातना नाना प्रकारके, शोणितजाः लोहीथी उत्पन्न थयेला रक्तजन्य, **रोगाः** रोगो रोग, प्रजायन्ते थाय छे होते हैं, **मुखपाकः** मुखपाक मुखपाक, **अक्षिरागः** आंखनी लालाश आंखोंकी लाली, **पूति-घ्राण-आस्यगन्धिता च** नाक तथा मुखमांथी दुर्गंधनुं आववुं नासा और मुखसे दुर्गन्ध आना, **गुल्म-** गुल्म गुल्म, **उपकुश-** उपकुश उपकुश, **वीसर्प-** वीसर्प वीसर्प, **रक्तपित्त-** रक्तपित्त रक्तपित्त, **प्रमीलकाः** प्रमीलक (सतत ध्यान) प्रमीलक, **विद्रधी** विद्रधि विद्रधि, **रक्तमेहः च** रक्तमेह रक्तप्रमेह, **प्रदरः** प्रदर प्रदर, **वातशोणितम्** वातरक्त वातरक्त, **वैवर्ण्यम्** विवर्णता विवर्णता, **अग्निसादः च** मन्दाग्नि मंदाग्नि, **पिपासा** तृषा प्यास, **गुरुगात्रता** अंगोनुं भारेपणुं शरीरका भारीपन, **संतापः** संताप संताप, **अतिदौर्बल्यम् च** अति दुर्बळता अति दुर्बलता, **अरुचिः** अरुचि अरुचि, **शिरसः रुक् च** माथानो दुखावो शिरदर्द, **अन्नपानस्य** अन्नपाननो अन्नपानका, **विदाहः च** विदाह विदाह, **तिक्त-** कडवा कडुवे, **अम्ल-** खाटा खट्टे, **उद्गिरणम्** ओडकार डकारोंका आना, **क्लमः** थाक थकान, **क्रोधप्रचुरता** वारंवार गुस्से थवुं क्रोधकी अधिकता, **बुद्धेः** बुद्धिनो बुद्धिका, **संमोहः** मोह मोह, **लवणास्यता** मोढुं खारुं थई जवुं मुखका नमकीन रहना, **स्वेदः** परसेवो पसीना, **शरीर-** शरीरमांथी शरीरकी, दौर्गन्ध्यम् दुर्गन्ध आववी दुर्गन्धता, **मदः** मद मद, **कम्पः** कम्प कम्प, **स्वरक्षयः** स्वरभंग आवाजका बैठना, **तन्द्रा-** तन्द्रा तन्द्रा, **निद्रा-** तथा निद्रानुं और नींदका, **अतियोगः** वधारे पडतुं आववुं अधिक आना, **तमसः** अंधकार अंधकारका, **अतिदर्शनम्** घणीवार देखवो अधिक आना, **कण्डू-** तथा खजवाळ एवं कण्डू, **अरुः-** अरुंपिका फुन्सियां, **कोठ-** कोठ कोठ, **पिडका-** पिडका पिड़का, **कुष्ठ-** कुष्ठ कुष्ठ, **चर्मदल-** चर्मदल चर्मदल, **आदयः च** वगेरे आदि, **एते सर्वे** आ बधा ये सब, **विकाराः** विकारो रोग, **शोणिताश्रयाः** लोहीने लीधे थयेला रक्तके विकारसे उत्पन्न, **विज्ञेयाः** जाणवा जानना चाहिए ॥ ११-१६ ॥

11-16. As the result, various kinds of blood-born diseases occur—Sores in the mouth, injected condition of the eyes, stink-nose, halitosis, gulma, mouth disease (upakusa), acute spreading affections, hemothermia, sleepiness, abscess, hematuria, menorrhagia, rheumatic condition, discoloration, asthenia of the digestive fire, excessive thirst, heaviness of limbs, burning, prostration, anorexia, headache, misdigestion of food and drink, bitter and acid eructations, exhaustion, excessive irritability, delusion of understanding, saline taste in the mouth, excessive perspiration, fetor of the body, intoxication, tremors, aphonia, torpor, hypersomnia, frequent attacks of faintness, pruritus, boils, wheals, pimples, dermatosis, rash and others—all these diseases are to be known as dependent on (the condition) of the blood.

अनुक्तानां शोणितजानां रोगाणां संग्रहः —

**शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ।**
**सम्यक् साध्या न सिध्यन्ति रक्तजांस्तान् विभावयेत् ॥**

शीत- शीत शीत, उष्ण- उष्ण उष्ण, **स्निग्ध-** स्निग्ध स्निग्ध, **रूक्ष-** रुक्ष रूक्ष, **आद्यैः** वगेरे उपचारोथी आदि क्रियाओंसे, **सम्यक्** सारी रीते भली प्रकार, **उपक्रान्ताः च** चिकित्सा कर्या छतां पण चिकित्सा करने पर भी, **ये** जे जो, **साध्याः** साध्य साध्य, **गदाः** रोगो रोग, **न** नथी नहीं, **सिध्यन्ति** मटता शान्त होते, **तान्** तेओने उनको, **रक्तजान्** रक्तथी उत्पन्न थयेला रक्तजन्य, **विभावयेत्** जाणवा जानना चाहिए ॥ १७ ॥

१५. शरीरदौर्गन्ध्यम्—शरीरदौर्बल्यम् (प.)
,, मदः—मेदः (ग.)

17. Further all such curable diseases as do not get cured though treated by appropriate measures of cooling, heating, oleation, desiccation etc., are to be regarded as blood-born diseases.

शोणितरोगेषु क्रियाक्रमः—

**कुर्याच्छोणितरोगेषु रक्तपित्तहरीं क्रियाम् ।**
**विरेकमुपवासं च स्रावणं शोणितस्य च ॥१८॥**

**शोणितरोगेषु** રક્તના રોગોમાં रक्तजन्य रोगोंमें, **रक्तपित्तहरीम्** રક્તપિત્ત હરનારી रक्तपित्तनाशक, **क्रियाम्** ક્રિયા क्रिया, **विरेकम्** વિરેચન विरेचन, **उपवासम् च** ઉપવાસ उपवास, **शोणितस्य** અને રક્તનું और रक्तका, **स्रावणम् च** સ્રાવણ मोक्षण, **कुर्यात्** કરવું જોઈએ करना चाहिए ॥ १८ ॥

18. In such diseases born of vitiated blood, the treatment should consist of measures used for the alleviation of hemothermia as well as purgation, fasting and depletion of blood.

**बलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा ।**
**रुधिरं स्रावयेज्जन्तोराशयं प्रसमीक्ष्य वा ॥ १९ ॥**

**बलदोष- प्रमाणात्** બળ અને દોષના પ્રમાણ અનુસાર बल एवं दोषके प्रमाणके अनुसार, **वा** અથવા अथवा, **रुधिरस्य** લોહીની रक्तकी, **विशुद्ध्या** વિશુધ્ધિથી **અર્થાત્** જ્યાં સુધી લોહી શુદ્ધ થાય ત્યાં સુધી विशुद्धिसे, अर्थात् **रक्तकी** विशुद्धिकी अपेक्षासे, **आशयम्** દુષ્ટ રક્તનું સ્થાન दूषित रक्तके स्थानको, **प्रसमीक्ष्य** બરાબર જોઈ सम्यक् प्रकारसे देख कर, **जन्तोः** પ્રાણીના मनुष्यके, **रुधिरम्** રક્તનું रक्तका, **स्रावयेत्** સ્રાવણ કરવું मोक्षण करना चाहिए ॥ १९ ॥

19. A patient must be bled according to his strength and the degree of the morbidity of humors, the required purification of blood and the seat of affection.

वातादिदुष्टशोणितस्य लक्षणम्—

**अरुणाभं भवेद्वाताद्विशदं फेनिलं तनु ।**
**पित्तात् पीतासितं रक्तं स्त्यायत्यौष्ण्याच्चिरेण च २०**
**ईषत्पाण्डु कफाद्दुष्टं पिच्छिलं तन्तुमद्घनम् ।**
**संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् ॥२१॥**

**वातात्** વાતથી वायुसे, **रक्तम्** રક્ત रक्त, **अरुणाभम्** અરુણવર્ણનું अरुणवर्णका, **विशदम्** વિશદ विशद, **फेनिलम्** ફીણવાળું झागदार, **तनु** તથા પાતળું तथा पतला, **भवेत्** હોય છે होता है, **पित्तात्** પિત્તથી पित्तसे, **पीतासितम्** પીળું તેમજ કાળું હોય છે पीला एवं काला होता है, **औष्ण्यात्** તથા ઉષ્ણતાને લીધે तथा उष्णताके कारण, **चिरेण** મોડું देरसे, **स्त्यायति** જામે છે जमता है, **कफात्** કફથી कफसे, **दुष्टम्** દુષ્ટ થયેલું दूषित रक्त, **ईषत्** જરાક थोड़ा, **पाण्डु** પાંડુ વર્ણનું पाण्डुवर्ण, **पिच्छिलम्** પિચ્છિલ पिच्छिल, **तन्तुमत्** તાંતણાવાળું रेशेदार, **घनम्** તથા ઘટ્ટ હોય છે **और** घट्ट होता है, **संसर्गात्** બે દોષોથી दो दोषोंसे, **संसृष्ट-लिङ्गम्** બે દોષનાં લક્ષણવાળું दो दोषके लक्षणवाला, **सान्निपातिकम्** અને ત્રિદોષથી और सन्निपातसे, **त्रिलिङ्गम्** ત્રણે દોષનાં લક્ષણવાળું હોય છે तीनों दोषोंके लक्षणोंवाला होता है ॥ २०–२१ ॥

20-21. When the blood is vitiated by vata, it becomes dusky-red, clear, frothy and thin. If vitiated by pitta, it becomes dark-yellow, and on account of the increased heat, it takes a long time to coagulate. If the blood is vitiated by kapha, it becomes slightly pale, slimy, fibrillated and solid. If affected by two of the humors, the blood evinces a syndrome characteristic of those two humors. When all the three humors combine to vitiate, there is a total concurrence of all symptoms.

विशुद्धस्य शोणितस्य लक्षणम्—

**तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम् ।**

**गुञ्जाफलसवर्णं च विशुद्धं विद्धि शोणितम्** ॥२२॥

तपनीय- સોના सुवर्ण, इन्द्रगोपाभम् તથા ઈંદ્રગોપના જેવી કાંતિવાળા और बीरबहुटीके समान कान्तिवाले, पद्म- લાલકમળ लालकमल, अलक्तक- તથા અળતાના तथा अलतेके, सन्निभम् સમાન समान, गुञ्जाफल-सवर्णम् च અને ચણોઠી જેવા વર્ણવાળા और लाल रत्तीके समान रंगवाले, शोणितम् લોહીને रक्तको, विशुद्धम् વિશુદ્ધ शुद्ध, विद्धि જાણો समझो ॥२२॥

22. When the blood is of the color of heated gold or that of the insect called "Indragopa", (Tronbidium), or like the red lotus or like the alaktaka juice (lac dye) or like jequirity berry, then know that blood to be pure.

सुतरक्तस्यान्नपानविधिः—

नात्युष्णशीतं लघु दीपनीयं
रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृ-
गग्निर्विशेषेण च रक्षितव्यः ॥ २३ ॥

रक्ते રક્ત रक्तके, अपनीते કાઢી લેતાં मोक्षण करने पर, न-अति-उष्ण-शीतम् બહુ ઊનું નહિ કે બહુ ઠંડું નહિ એવું न अति उष्ण न अति शीतल, लघु હલકું लघु, दीपनीयम् અગ્નિદીપક अग्निदीपक, अन्नपानम् અન્નપાન खानपान, हितम् હિતકારક છે हितकारक है, हि કારણ કે क्योंकि, तदा ત્યારે उस समय, शरीरम् શરીર शरीर, अनवस्थित-असृक् અસ્થિર રક્તવાળું હોય છે अस्थिर रक्तवाला होता है, अग्निः च અને અગ્નિ और अग्नि, विशेषेण વિશેષ રૂપમાં विशेष रूपमें, रक्षितव्यः રક્ષવા યોગ્ય હોય છે रक्षणयोग्य होता है ॥ २३ ॥

23. When the blood has been depleted, food that is neither very hot nor very cold but is light and stimulative of digestion, is indicated. Since during this time, the blood in the body is in a restless condition, the gastric fire must be very carefully protected.

विशुद्धरक्तस्य पुरुषस्य लक्षणम्—

प्रसन्नवर्णेन्द्रियमिन्द्रियार्था-
निच्छन्तमव्याहतपक्तृवेगम् ।
सुखान्वितं तु(पु)ष्टिबलोपपन्नं
विशुद्धरक्तं पुरुषं वदन्ति ॥ २४ ॥

प्रसन्न-वर्ण-इन्द्रियम् નિર્મળ વર્ણ અને પ્રસન્ન ઇન્દ્રિયોવાળા प्रसन्न वर्ण एवं निर्मल इन्द्रियोंवाले, इन्द्रियार्थान् ઇન્દ્રિયોના વિષયને इन्द्रियोंके विषयको, इच्छन्तम् ઇચ્છનારા कामना करनेवाले, अव्याहतपक्तृवेगम् અંતરાયરહિત અગ્નિ અને મલ આદિના વેગવાળા अव्याहत जठराग्नि और मल आदिके वेगवाले, सुखान्वितम् આરોગ્યયુક્ત आरोग्ययुक्त, तुष्टि- સંતોષ तुष्टि, बल- તથા બળથી एवं बलसे, उपपन्नम् યુક્ત युक्त, पुरुषम् પુરુષને पुरुषको, विशुद्धरक्तम् વિશુદ્ધ રક્તવાળો विशुद्ध रक्तवाला, वदन्ति કહે છે कहते हैं ॥ २४ ॥

24. He who has a clear complexion and senses, desires the sense pleasures, has the strength of the digestive fire unimpaired, and is happy, well-built and strong, is said to be pure of blood.

मदमूर्च्छायसंन्यासानां संप्राप्तिः—

यदा तु रक्तवाहीनि रससंज्ञावहानि च ।
पृथक् पृथक् समस्ता वा स्रोतांसि कुपिता मलाः ॥२५॥
मलिनाहारशीलस्य रजोमोहावृतात्मनः ।
प्रतिहत्यावतिष्ठन्ते जायन्ते व्याधयस्तदा ॥२६॥
मदमूर्च्छायसंन्यासास्तेषां विद्याद्विचक्षणः ।
यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु ॥२७॥

मलिन- મલિન मलिन, आहार- આહાર आहार, शीलस्य સેવનારના सेवन करनेवालेका, रजः- રજોગુણ रज, मोह- અને મોહથી और मोहसे, आवृतात्मनः ઢંકાયેલ ચિત્તવાળા પુરુષના आव्रत चित्तवाले मनुष्यके, कुपिताः

२४ पक्तृवेगम्—पक्तिवेगम् ग. प.)

કુપિત થયેલા कुपित, मलाः મળ मल, पृथक् पृथक् જુદા જુદા पृथक् पृथक्, समस्ताः वा અથવા એકત્ર થઈને या समस्त रूपमें, यदा तु જ્યારે जब, रक्तवाहीनि રક્તવાહી रक्तवाही, रस-संज्ञावहानि च રસવાહી તથા સંજ્ઞાવાહી रसवह और संज्ञावह, स्रोतांसि સ્રોતોને स्रोतोंको, प्रतिहत्य રુંધીને आवृत कर, अवतिष्ठन्ते સ્થિર થાય છે स्थिर हो जाता हैं, तदा ત્યારે तब, मद- મદ मद, मूर्च्छाय- મૂર્છા मूर्छा, संन्यासाः અને સંન્યાસ और संन्यास, व्याधयः આ વ્યાધિઓ यह रोग, जायन्ते ઉત્પન્ન થાય છે उत्पन्न होते हैं, हेतु- હેતુ हेतु, लिङ्ग- લિંગ लक्षण, उपशान्तिषु તથા ઉપશમમાં और उपशममें, तेषाम् તેઓના उनके, यथोत्तरम् ઉતરોતર उतरोत्तर, बल-आधिक्यम् બળની અધિકતા बलका आधिक्य, विद्यात् જાણવી जानना चाहिए ॥ २५-२७ ॥

25-27. When in a person given to unclean diet and enveloped by passion and ignorance, the provoked humors, either individually or jointly moving in the channels of the blood, or of the nutrient fluid or of sensation, get obstructed and localised, as a consequence thereof various diseases are produced. They are intoxication, fainting and syncope. The wise physician must know that the gravity of these diseases, with respect to causes, symptoms and treatment, increases in the order of their enumeration.

**दुर्बलं चेतसः स्थानं यदा वायुः प्रपद्यते ।**
**मनो विक्षोभयअन्तोः संज्ञां संमोहयेत्तदा ॥ २८ ॥**

यदा જ્યારે जब, वायुः વાયુ वायु, चेतसः ચિત્તના चित्तके, दुर्बलम् દુર્બળ થયેલ दुर्बल, स्थानम् સ્થાનમાં स्थानका, प्रपद्यते પહોંચે છે आश्रय लेती है, तदा ત્યારે तब, जन्तोः મનુષ્યના मनुष्यके, मनः મનને मनको, विक्षोभयन् ક્ષોભ પમાડી क्षुब्ध करके, संज्ञाम् સંજ્ઞાને संज्ञाको, संमोहयेत् મોહયુક્ત કરે છે मोहयुक्त करती है ॥ २८ ॥

28. When the vata finds entrance into the weakened centre of consciousness then distracting the mind of man, it confounds his wits.

**पित्तमेवं कफश्चैवं मनो विक्षोभयन्नृणाम् ।**
**संज्ञां नयत्याकुलतां विशेषश्चात्र वक्ष्यते ॥ २९ ॥**

एवम् એ પ્રમાણે इसीप्रकार, पित्तम् પિત્ત पित्त, एवम् તેમજ एवं, कफः च કફ પણ कफ भी, नृणाम् મનુષ્યનો मनुष्यके, मनः મનને चित्तको, विक्षोभयन् ક્ષોભ પમાડતાં क्षुभित करआ हुआ, संज्ञाम् સંજ્ઞાને संज्ञाको, आकुलताम् नयति આકુલ કરે છે आकुल करते हैं, अत्र આ વિષયમાં इस विषयमें, विशेषः च વિશેષ विशेष, वक्ष्यते કહેવામાં આવશે कहा जायगा ॥ २९ ॥

29. Similarly pitta or kapha, having thus distracted a man's mind induces agitation of his wits. Their special characteristics will now be explained.

वातजादिभेदेन मदस्य लक्षणम्—

**सक्तानल्पद्रुताभाषं चलस्खलितचेष्टितम् ।**
**विद्याद्वातमदाविष्टं रूक्षश्यावारुणाकृतिम् ॥ ३० ॥**

सक्त- ખંચાતુ रुक रुक कर, अनल्प- બહુ बहुत, द्रुत- જલદી जल्दी, आभाषम् બોલનાર बोलनेवाले, चल- અસ્થિર अस्थिर, स्खलित- તથા લથડતી एवं लड़खड़ाती, चेष्टितम् ચેષ્ટાવાળા चेष्टाओंवाले, रूक्ष- તથા રૂક્ષ एवं रूक्ष, श्याव- શ્યાવ श्याव, अरुण- અને અરુણ और अरुण, आकृतिम् આકૃતિવાળા મનુષ્યને आकृतिवाले मनुष्यको, वातमदाविष्टम् વાતમદના આવેશવાળો वात-मदसे आविष्ट, विद्यात् જાણવો जानना चाहिए ॥ ३० ॥

30. The person whose speech is indistinct, copious and fast, who

२९. वक्ष्यते—कथ्यते (च.)

३०. रूक्षश्यावारुणाकृतिम्—रक्तपीतासिताकृतिम् (ड.)

makes unstable and inco-ordinated movement and whose appearance is dry, dusky or red should be known as suffering from intoxication of the vata type.

**सक्रोधपरुषाभाषं संप्रहारकलिप्रियम् ।**
**विद्यात् पित्तमदाविष्टं रक्तपीतासितकृतिम् ॥३१॥**

सक्रोध- ક્રોધસહિત क्रोधके साथ, परुष-आभाषम् કઠોર બોલનાર कठोर बोलनेवाले, संप्रहार- મારામારી लड़ाई, कलि- તથા કજિયામાં एवं झगड़ामें, प्रियम् પ્રીતિવાળા प्रीतिवाले, रक्त- રાતી लाल, पीत- પીળી पीले, असित- તથા કાળી तथा कृष्ण, आकृतिम् આકૃતિવાળા મનુષ્યને आकृतिवाले मनुष्यको, पित्तमद-आविष्टम् પિત્તમદના આવેશવાળો पित्तमदसे आविष्ट, विद्यात् જાણવો जानना चाहिए ॥ ३१ ॥

31. The person whose speech is wrathful and harsh, who likes fighting and picking up quarrels and who is of red, yellow or of dark complexion, is to be regarded as affected by intoxication of the pitta type.

**स्वल्पासंबद्धवचनं तन्द्रालस्यसमन्वितम् ।**
**विद्यात् कफमदाविष्टं पाण्डुं प्रध्यानतत्परम् ॥३२॥**
**सर्वाण्येतानि रूपाणि सन्निपातकृते मदे ।**

स्वल्प- બહુજ ઓછું थोड़ा, असंबद्ध- वचनम् સંબંધ વગરનું બોલનાર असंबद्ध बोलनेवाला, तन्द्रा- તન્દ્રા तन्द्रा, आलस्य- અને આળસથી और आलस्यसे, समन्वितम् યુક્ત युक्त, पाण्डुम् પાંડુ વર્ણના पाण्डुवर्ण, प्रध्यानतत्परम् તેમજ વિચારમગ્ન મનુષ્યને एवं विचारमग्न मनुष्यको, कफमद-आविष्टम् કફમદના આવેશવાળો कफमदसे आविष्ट, विद्यात् જાણવો जानना चाहिए, सन्निपातकृते સન્નિપાતથી થયેલા सन्निपातजन्य, मदे મદમાં मदमें, एतानि આ ये, सर्वाणि सर्व सब, रूपाणि લક્ષણો થાય છે लक्षण होते हैं ॥ ३२½ ॥

32-32½. The person whose speech is scanty, incoherent or irrelevant, who is lethargic and indolent and who is pale of complexion and is preoccupied must be known to suffer from intoxication of the kapha type. All these symptoms appear together in the condition of intoxication caused by tri-discordance.

शोणितमद्यविषजानामपि मदानां वातादिजेष्वन्तर्भावः—

**जायते शाम्यति क्षिप्रं मदो मद्यमदाकृतिः ॥३३॥**
**यश्च मद्यकृतः प्रोक्तो विषजो रौधिरश्च यः ।**
**सर्वे एते मदा नर्ते वातपित्तकफत्रयात् ॥३४॥**

मद्यमद-आकृतिः મદ્યના મદ જેવા સ્વરૂપનો मद्यजनित मदके समान लक्षणवाला, मदः મદ मद, क्षिप्रम् જલદી जल्दी, जायते ઉત્પન્ન થાય છે उत्पन्न होता है, शाम्यति તથા શાંત થાય છે तथा शान्त होता है, यः च જે जो, मद्यकृतः મદ્યથી થયેલો मद्यजन्य, यः च અને જે और जो, विषजः વિષથી થયેલો विषजन्य, रौधिरः તથા લોહીથી થયેલો एवं रक्तजन्य, प्रोक्तः કહ્યો છે कहा गया है, एते આ ये, सर्वे सर्व सब, मदाः મદ मद, वातपित्तकफत्रयात् વાત, પિત્ત અને કફ એ ત્રણ वात, पित्त और कफ इन तीनके, ऋते સિવાય बिना, न થતા નથી नहीं होते ॥ ३३–३४ ॥

33-34. The characteristic of the intoxication is that it rises and abates quickly, and resembles the intoxication due to alcohol. The condition of

३१. सक्रोध—सक्रोधम (ध)
३२. स्वल्पासंबद्ध—स्वल्पसम्बन्ध (ख. ग. छ. ठ. त. थ.)
,, तन्द्रा—निद्रा (द. प.)
३२½. रूपाणि—लिङ्गानि (च.)
३३. क्षिप्रम्—त्वाशु (क. घ. छ. ज.)
,, मद्यकृतः—मद्यमदः (ख. घ. झ. ठ.)
३४. °कफत्रयात्—°कफाश्रयात् (द. प.)

intoxication which is said to proceed from alcohol as well as those resulting from poison and toxic condition of the blood do not occur otherwise than through the discordance of vata, pitta and kapha.

वातजादिभेदेन मूर्च्छायस्य लक्षणम्—

**नीलं वा यदि वा कृष्णमाकाशमथवाऽरुणम् ।**
**पश्यंस्तमः प्रविशति शीघ्रं च प्रतिबुध्यते ॥३५॥**
**वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च ।**
**कार्श्यं श्यावारुणा च्छाया मूर्च्छाये वातसंभवे ॥३६॥**

**वातसंभवे** વાતથી ઉત્પન્ન થયેલી वातजन्य, **मूर्च्छाये** મૂર્ચ્છામાં मूर्च्छामें, **आकाशम्** મનુષ્ય આકાશને मनुष्य आकाशको, **नीलम् वा** નીલા રંગનું नीला, **यदि वा** અથવા अथवा, **अरुणम्** અરુણ વર્ણનું अरुण वर्णका, **पश्यन्** જોતાં જોતાં देखता हुआ, **तमः प्रविशति** મૂર્છા ખાય છે मूर्छित होता है, **शीघ्रम् च** અને તરત और तुरन्त, **प्रतिबुध्यते** શુદ્ધિમાં આવે છે जागृत होता है, **वेपथुः च** કંપ कम्पन, **अङ्गमर्दः च** અંગમર્દ अंगमर्द, **हृदयस्य** હૃદયની हृदयकी, **प्रपीडा च** પીડા पीड़ा, **कार्श्यम्** કૃશતા कृशता, **श्यावा** અને શ્યાવ और श्याव, **अरुणा** તથા અરુણ રંગની तथा अरुण, **छाया** કાંતિ થાય છે कान्ति होती है ॥ ३५–३६ ॥

35-36. He whose fainting is brought about by vata, sees space as being blue or black or red ( aura ) before fainting and awakens from it quickly. He suffers from bodily tremors, pain in the limbs and severe pain in the cardiac region and is emaciated and of dusky or red complexion.

**रक्तं हरितवर्णं वा वियत् पीतमथापि वा ।**
**पश्यंस्तमः प्रविशति सस्वेदः प्रतिबुध्यते ॥३७॥**

३७. सस्वेदः प्रतिबुध्यते—सस्वेदश्च प्रबुध्यते (क. ख. छ. ज.)

**सपिपासः ससंतापो रक्तपीताकुलेक्षणः ।**
**संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसंभवे ॥३८॥**

**पित्तसम्भवे** પિત્તથી ઉત્પન્ન થયેલી पित्तजनित, **मूर्च्छाये** મૂર્ચ્છામાં मूर्च्छामें, **वियत्** આકાશને आकाशको, **रक्तम्** લાલ लाल, **हरितवर्णम् वा** લીલું हरा, **अथ अपि वा** અથવા अथवा, **पीतम्** પીળું पीला, **पश्यन्** જોતાં જોતાં देखता हुआ, **तमः प्रविशति** મૂર્છા ખાય છે मूर्छित होता है, **सस्वेदः च** અને પરસેવાસહિત पसीनेके साथ, **प्रतिबुध्यते** શુદ્ધિમાં આવે છે जागृत होता है, **सपिपासः** વળી તે તરસસહિત फिर वह प्यासके साथ, **ससन्तापः** અને સંતાપ સાથે और सन्तापके साथ, **रक्त-** લાલ लाल, **पीत-** પીળી पीला, **आकुल-** આકુલ आकुल, **ईक्षणः** આંખોવાળો आंखोंवाले, **संभिन्नवर्चाः** મળ જેનો નીકળી જાય છે એવો मल जिनका निकल जाता है ऐसा, **पीताभः** તથા પીળા રંગવાળો થાય છે तथा पीला वर्णवाला होता है ॥ ३७-३८ ॥

37-38. He whose fainting is born of pitta, falls into it seeing space as red, green or yellow and awakens from his fit bathed in sweat, gets very thirsty and has burning sensation; his eyes are red, yellow, or bewildered and he has loose motions, and is yellow in complexion.

**मेघसङ्काशमाकाशमावृतं वा तमोघनैः ।**
**पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥३९॥**
**गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा ।**
**सप्रसेकः सहृल्लासो मूर्च्छाये कफसंभवे ॥४०॥**

**कफसम्भवे** કફથી ઉત્પન્ન થયેલી कफसे उत्पन्न, **मूर्च्छाये** મૂર્ચ્છામાં मूर्च्छामें, **आकाशम्** આકાશને आकाशको, **मेघ-** મેઘના मेघके, **संकाशम्** જેવું समान, **तमः-** અથવા અંધારાંથી अंधकारसे, **घनैः** તથા વાદળાંથી तथा मेघसे, **आवृतम् वा** છવાયેલું घिरा हुआ, **पश्यन्** જોતાં જોતાં देखता हुआ, **तमः प्रविशति** મૂર્છા ખાય છે मूर्च्छित होता है, **चिरात् च** અને લાંબે વખતે और देरसे, **प्रतिबुध्यते** શુદ્ધિમાં આવે છે जागृत होता है,

यथा एव વળી તે જાણે फिर वह जैसे, आर्द्रेण ભીના गीले, चर्मणा ચામડાથી चमड़ेसे, प्रावृतैः વીંટેલાં હોય તેવાં ढके हुए हो, गुरुभिः ભારે वैसे भारी, अङ्गैः અંગોવાળો अंगवाला, सप्रसेकः લાળવાળો लालास्रावयुक्त, सहृल्लासः તથા જેને મોળ આવતી હોય એવો થાય છે तथा जिसका जी मचलाता हो ऐसा होता है ॥ ३९-४० ॥

39-40. He whose fainting is born of kapha falls into it, seeing space as a cloud or as covered with clouds of darkness, and awakens from it after a long time with heavy limbs as if they were wrapped in wet leather, and with excessive salivation and nausea.

**सर्वाकृतिः सन्निपातादपस्मार इवागतः ।**
**स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥४१॥**

सन्निपातात् સન્નિપાતને લીધે सन्निपातसे, सर्वाकृतिः સર્વ લક્ષણવાળો समस्तलक्षणयुक्त, सः તે મૂર્છા वह मूर्छा, आगतः આવીને आ कर, अपस्मारः इव અપસ્મારની પેઠે अपस्मारकी तरह, बीभत्स- ઘૃણાજનક बीभत्स, चेष्टितैः ચેષ્ટાઓ चेष्टाओंके, विना સિવાય बिना, जन्तुम् મનુષ્યને मनुष्यको, आशु જલદી शीघ्र, पातयति પાડી નાખે છે गिरा देती है ॥ ४१ ॥

41. The fainting fit, when proceeding from tri-discordance, is marked with all the symptoms, mentioned above, manifesting in an epileptic fit; it fells its victim suddenly, without, however, presenting the symptoms of fearful convulsions.

संन्यासान्मदमूर्च्छाययोर्भेदः —

**दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ।**
**स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥४२॥**

दोषेषु દોષો दोषोंके, कृतवेगेषु વેગ કરીને ક્ષીણ બલવાળા થતાં वेग करके क्षीणबलवाले होने पर, देहिनाम् મનુષ્યનાં मनुष्योंकी, मद- મદ मद, मूर्च्छायाः અને મૂર્છા और मूर्छा, स्वयम् પોતાની મેળે स्वयं, एव જ ही, उपशाम्यन्ति શાંત થઈ જાય છે शान्त हो जाती है, संन्यासः પરંતુ સંન્યાસ परन्तु संन्यास, औषधैः ઔષધ औषधके, विना સિવાય बिना, न शांत થતો નથી शान्त नहीं होता ॥ ४२ ॥

42. The disorders of intoxication and fainting subside of their own accord when the morbidity of the causative humors has spent itself out in the attack. The condition of syncope, however does not subside without treatment.

संन्यासस्य संप्राप्तिः —

**वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।**
**संन्यस्यन्त्यबलं जन्तुं प्राणायतनसंश्रिताः ॥४३॥**

प्राणायतन- પ્રાણસ્થાનનો प्राणायतनोंका, संश्रिताः આશ્રય કરી રહેલા आश्रय लेकर रहे हुए, अतिबलाः અતિ બળવાન अति बलवान, मलाः દોષો मल, वाक्- વાણી वाणी, देह- દેહ देह, मनसाम् તથા મનની और मनकी, चेष्टाम् ચેષ્ટાને चेष्टाको, आक्षिप्य હરી લઈ नष्ट करके, अबलम् બળહીન निर्बल, जन्तुम् પ્રાણીને प्राणीको, संन्यस्यन्ति નિઃસંજ્ઞ કરે છે निःसंज्ञ करते हैं ॥ ४३ ॥

43. The highly provoked humors lodged in the vital parts of man, by paralysing the functions of speech, body and mind, overthrow the debilitated victim.

संन्यासस्य लक्षणम्—

**स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः ।**

४२. कृतवेगेषु—गतवेगेषु (द.)
,, ,, —हृतवेगेषु (ध प.)

४३. प्राणायतनसंश्रिताः—प्राणायतनमाश्रिताः (ग. च.)
४४. काष्ठीभूत—काष्ठभूतः (ध.)

**प्राणैर्वियुज्यते शीघ्रं मुक्त्वा सद्यःफलाः क्रियाः ४४**

संन्यास- સંન્યાસથી संन्यासमे, संन्यस्तः ચેષ્ટારહિત चेष्टारहित, काष्ठीभूतः લાકડા જેવો થયેલો काष्ठरूप हुआ, मृतोपमः તથા મરી ગયેલા જેવો एवं मरा हुआ जैसा, सः તે वह, ना પુરુષ मनुष्य, सद्यःफलाः તાત્કાલિક અસર કરનાર सद्यःफलदायी, क्रियाः ઉપચારોને क्रियाके, मुक्त्वा મેળવ્યા વગર न मिलने पर, शीघ्रम् જલદી शीघ्र, प्राणैः પ્રાણથી प्राणसे, वियुज्यते મુક્ત થાય છે मुक्त होता है ॥ ४४ ॥

44. Such a man, who, being overcome by syncope, is turned as it were into a log of wood, and appears as if dead, will be soon deprived of his life, unless he receives emergency treatment.

संन्यासस्योपक्रमः —

**दुर्गेऽम्भसि यथा मज्जद्भाजनं त्वरया बुधः ।**
**गृह्णीयात्तलमप्राप्तं तथा संन्यासपीडितम् ॥४५॥**

यथा જેમ जिस प्रकार, बुधः સમજુ માણસ बुद्धिमान मनुष्य, दुर्गे અગાધ गहरे, अम्भसि પાણીમાં जलमें, मज्जत् ડૂબતા डूबते हुए, तलम् તથા તળે तल पर, अप्राप्तम् ન પહોંચેલા न पहुंचे हुए, भाजनम् પાત્રને पात्रको, त्वरया ઉતાવળથી शीघ्रतासे, गृह्णीयात् પકડી લે છે पकड़ लेता हैं, तथा તેવી રીતે બુદ્ધિમાન વૈદ્ય उसी प्रकार बुद्धिमान वैद्यको, संन्यास- સંન્યાસથી संन्याससे, पीडितम् પીડાયેલા મનુષ્યને ઉતાવળથી બચાવવો જોઈએ पीड़ित मनुष्यका शीघ्रतासे रक्षण करना चाहिए ॥ ४५ ॥

45. As in the case of a pitcher (that has slipped from the hand and is) sinking rapidly down a deep well, the prudent man hastens to retrieve it before it has reached the bottom, so it should be in the case of the man overcome with syncope.

**अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च ।**
**सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ॥४६॥**
**लुञ्चनं केशलोम्नां च दन्तैर्दशनमेव च ।**
**आत्मगुप्तावघर्षश्च हितं तस्यावबोधने ॥ ४७ ॥**

तस्य તેને इसको, अवबोधने શુદ્ધિમાં લાવવા માટે जागृत करनेके लिए. अञ्जनानि અંજન अंजन, अवपीडाः च અવપીડ નસ્ય अवपीड नस्य, धूमाः ધૂમ धूम, प्रधमनानि પ્રધમન (ચૂર્ણરૂપ) નસ્ય प्रधमन (चूर्णरूप) नस्य, सूचीभिः અને સોયોથી और सूईयोंसे, तोदनम् च પીડા કરવી पीड़ा करना, शस्तम् પ્રશસ્ત છે प्रशस्त हैं, दाहः દાહ दाह, नखान्तरे નખિયાંમાં नखोंके बीचमें, पीडा પીડા કરવી पीड़ा करना, केशलोम्नाम् વાળ અને રૂંવાડાંનું बाल और रोमोंका, लुञ्चनम् च ખેંચી કાઢવું खींचकर काढना, दन्तैः દાંતથી दांतोंसे, दशनम् एव च બટકું ભરવું काटना, आत्मगुप्ता- અને કૌવચનું और कौंचका, अवघर्षः ઘસવું घिसना, हितम् હિતકારી છે हितकारी हैं ॥ ४६-४७ ॥

46. The following are the measures prescribed for the resuscitation of the man overcome with syncope: eye-applications, nasal applications, inhalations, snuffs, pricking with needles or branding or piercing under the nails; plucking the hair on the head or the body, biting with the teeth, or rubbing the body with the seeds of cowage are helpful in awakening him.

**संमूर्च्छितानि तीक्ष्णानि मद्यानि विविधानि च ।**

---

४४. वियुज्यते—विमुच्यते (च.)
,, सद्यःफलाः क्रियाः—सद्यःफलां क्रियाम् (ग.ज.ठ.)

४६. धूमाः—धूमः (घ.)
,, शस्तम्—शस्त्रैः (ग.ठ.त.थ.द.)
४७. दन्तैः—दंशैः (ग.)
,, आत्मगुप्तावघर्षश्च- आत्मगुप्तावघर्षाश्च (घ.)
,, हितम्—हिताः (ब.च.छ.ज.)

प्रभूतकटुयुक्तानि तस्यास्ये गालयेन्मुहुः ॥ ४८ ॥

तस्य तेना इसके, आस्ये મોઢામાં मुखमें, प्रभूत- પુષ્કળ बहुत, कटुयुक्तानि તીખાં દ્રવ્યોથી कटु द्रव्योंसे, संमूर्च्छितानि મિશ્રિત કરેલાં मिश्रित, विविधानि વિવિધ પ્રકારનાં नाना प्रकारके, तीक्ष्णानि તીક્ષ્ણ तीक्ष्ण, मद्यानि च મદ્ય मद्य, मुहुः વારંવાર बारबार, गालयेत् પ્રયત્ન પૂર્વક રેડવાં प्रयत्नपूर्वक डालना चाहिए ॥ ४८ ॥

48. Various kinds of strong wines mixed copiously with pungent articles must be frequently poured into his mouth.

मातुलुङ्गरसं तद्वन्महौषधसमायुतम् ।
तद्वत्सौवर्चलं दद्याद्युक्तं मद्याम्लकाञ्जिकैः ॥४९॥
हिङ्गूषणसमायुक्तं यावत् संज्ञाप्रबोधनम् ।
प्रबुद्धसंज्ञमन्नैश्च लघुभिस्तमुपाचरेत् ॥ ५० ॥

तद्वत् તે પ્રમાણે उसी प्रकार, संज्ञाप्रबोधनम् यावत् શુદ્ધિ આવે ત્યાં સુધી संज्ञा प्राप्त होने तक, महौषध- સૂંઠથી सोंठसे, समायुतम् યુક્ત युक्त, मातुलुङ्ग- બીજોરાનો बिजौरके, रसम् રસ रस, तद्वत् એજ રીતે इसी तरह, मद्य- મદ્ય मद्य, अम्लकाञ्जिकैः ખાટી કાંજીથી अम्ल कांजीसे, युक्तम् યુક્ત युक्त, हिङ्गु- તેમજ હિંગ एवं हींग, ऊषण- અને મરીથી और मरीचसे, समायुक्तम् યુક્ત युक्त, सौवर्चलम् સૌવર્ચલ संचल, दद्यात् દેવું देवे, प्रबुद्धसंज्ञम् સંજ્ઞાને પ્રાપ્ત થયેલા चेतनाको प्राप्त हुए, तम् તેને उसको, लघुभिः લઘુ लघु, अन्नैः અન્નોથી अन्नसे, उपाचरेत् ઉપચાર કરવો उपचार करना चाहिए ॥ ४९-५० ॥

49-50. Similarly the juice of pomelo mixed with ginger, or sanchal salt mixed with wine and sour gruel together with asafetida and black pepper must be poured into the throat until consciousness returns. When consciousness has been restored, the patient must be given light foods.

विस्मापनैः स्मारणैश्च प्रियश्रुतिभिरेव च ।
पटुभिर्गीतवादित्रशब्दैश्चित्रैश्च दर्शनैः ॥ ५१ ॥
स्रंसनोल्लेखनैर्धूमैरञ्जनैः कवलग्रहैः ।
शोणितस्यावसेकैश्च व्यायामोद्धर्षणैस्तथा ॥५२॥
प्रबुद्धसंज्ञं मतिमाननुबन्धमुपक्रमेत् ।
तस्य संरक्षितव्यं हि मनः प्रलयहेतुतः ॥५३॥

प्रबुद्धसंज्ञम् શુદ્ધિમાં આવેલા તેના शुद्धिमें आये हुए उनको, विस्मापनैः આશ્ચર્યજનક વાતોથી आश्चर्यजनक बातोंसे, स्मारणैः च ગમતી બાબત યાદ દેવાથી रुचिकर बातें याद देनेसे, प्रियश्रुतिभिः एव च પ્રિય લાગે એવું સંભળાવવાથી प्रिय सुनानेसे, पटुभिः સુંદર सुंदर, गीत- ગીત गीत, वादित्र- અને વાજિંત્રોના वाद्योंके, शब्दैः શબ્દોથી शब्दोंसे, चित्रैः ચિત્ર વિચિત્ર चित्र विचित्र, दर्शनैः च દશ્યો દેખાડવાથી दृश्योंके दिखानेसे, स्रंसन- વિરેચનથી विरेचनसे, उल्लेखनैः વમનથી वमनसे, धूमैः ધૂમથી धूमसे, अञ्जनैः અંજનથી अञ्जनसे, कवलग्रहैः કવલગ્રહથી कवलग्रहसे, शोणितस्य રક્તના रक्तके, अवसेकैः च મોક્ષણથી मोक्षणसे, तथा તથા तथा, व्यायाम- વ્યાયામથી व्यायामसे, उद्धर्षणैः તેમજ ઉદ્ઘર્ષણથી एवं उद्घर्षणसे, अनुबन्धम् सतत निरन्तर, उपक्रमेत् ઉપચાર કરવા चिकित्सा करे, हि કારણકે क्योंकि, तस्य તેના उसके, मनः મનનું मनको, प्रलय- મોહના मोहके, हेतुतः કારણથી कारणसे, संरक्षितव्यम् રક્ષણ કરવું જોઈએ बचाना चाहिए ॥५१–५३॥

51-53. The wise physician, in order to protect the mind of the awakened

४८. प्रभूतकटुयुक्तानि–प्रभूतकटुतिक्तानि (ग. ध. प)
४९. सौवर्चलम्–सौवीरकम् (ग. घ. ड. प.)
५०. तमु–समु (ग.)

५१. विस्मापनैः–विस्मायनैः (प)
,, स्मारणैश्च–संस्मरणैः (ढ.)
,, पटुभिः–मधुरैः (ग. थ.)
५३. उपक्रमेत्–उपाचरेत् (ग. थ.)
,, तस्य संरक्षितव्यं हि मनःप्रलयहेतुतः–ततः संरक्षितव्यो हि मनःप्रलयहेतुतः (थ.)

patient from the evil consequences (of syncope) and from relapsing again into insensibility, should treat him with measures that excite wonder, and awaken the memory with delightful discourses, with pleasant vocal and instrumental music, with wonderful sights, with laxatives and emetics, with various inhalations, eye-paints, gargles, blood-letting, and with exercise and friction massage of the body.

मदमूर्च्छाययोरुपक्रमः—

**स्नेहस्वेदोपपन्नानां यथादोषं यथाबलम् ।**
**पञ्च कर्माणि कुर्वीत मूर्च्छायेषु मदेषु च ॥५४॥**

मूर्च्छायेषु મૂર્ચ્છામાં मूर्च्छामें, मदेषु च અને મદમાં और मदमें, स्नेह- સ્નેહન स्नेहन, स्वेद- તથા સ્વેદન तथा स्वेदन, उपपन्नानाम् પામેલાં મનુષ્યોનાં प्राप्त किये हुए मनुष्योंके, यथादोषम् દોષાનુસાર दोषानुसार, यथा-बलम् તેમજ બલાનુસાર एवं बलानुसार, पञ्चकर्माणि પંચકર્મ पंचकर्म, कुर्वीत કરવાં જોઈએ करने चाहिएं ॥५४॥

54. In all conditions of fainting and intoxication, the patients who have been prepared with the oleo-sudation procedure should, according to the measure both of their vitality and of morbidity, be administered the quinary purificatory treatment.

**अष्टाविंशत्यौषधस्य तथा तिक्तस्य सर्पिषः ।**
**प्रयोगः शस्यते तद्वन्महतः षट्पलस्य वा ॥५५॥**

अष्टाविंशति- અઠ્ઠાવીસ अट्ठाईस, औषधस्य ઔષધવાળા પાનીય કલ્યાણ (કલ્યાણ ઘૃત) નો औषधवाले पानीय कल्याण (कल्याण घृत) का, तिक्तस्य षट्पलस्य અથવા તિક્ત ષટ્પલક अथवा तिक्त षट्पलक, सर्पिषः ઘૃતનો घृतका, तद्वत् महतः वा અથવા મહાતિક્ત ઘૃતનો अथवा महातिक्त घृतका, प्रयोगः પ્રયોગ प्रयोग, शस्यते પ્રશસ્ત છે प्रशस्त है ॥५५॥

55. Further in these conditions a course of the medicated ghee prepared with the group of the twenty-eight drugs ( kalyana ghee ) or of the medicated ghee called " the great bitter ghee " or that called " the bitter shat-pala ghee " is recommended.

**त्रिफलायाः प्रयोगो वा सघृतक्षौद्रशर्करः ।**
**शिलाजतुप्रयोगो वा प्रयोगः पयसोऽपि वा ॥५६॥**

त्रिफलायाः ત્રિફળાનો त्रिफलाका, सघृत- ઘી घृत, क्षौद्र- મધ मधु, शर्करः અને સાકર સહિત और शर्कराके साथ, प्रयोगः वा પ્રયોગ प्रयोग, शिलाजतुः અથવા શિલાજિતનો अथवा शिलाजतुका, प्रयोगः वा પ્રયોગ प्रयोग, पयसः અથવા દૂધનો अथवा दूधका, प्रयोगः अपि वा પ્રયોગ प्रयोग ॥५६॥

56. Similarly a course of the three myrobalans with ghee, honey and sugar, or a course of mineral pitch, or a course of milk.

**पिप्पलीनां प्रयोगो वा पयसा चित्रकस्य वा ।**
**रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥५७॥**

पिप्पलीनाम् वा અથવા પીપરનો अथवा पिप्पलीका, पयसा અથવા દૂધ સાથે अथवा दूधके साथ, चित्रकस्य वा ચિત્રકનો चित्रकका, रसायनानाम् અથવા રસાયનનો अथवा रसायनोंका, कौम्भस्य सर्पिषः वा અથવા દશ વર્ષના જૂના ઘીનો अथवा दस वर्षका पुराना घीका, प्रयोगः પ્રયોગ प्रयोग, प्रशस्यते પ્રશસ્ત છે प्रशस्त है ॥५७॥

57. Or a course of long pepper or a course of white-flowered lead-wort

५४. स्नेहस्वेदोपपन्नानाम्—स्नेहस्वेदोपपन्नस्य ( क. ग. च. छ. )

५७. पयसा चित्रकस्य—पयसश्चित्रकस्य (ख. त.)
,, ,, —प्रयोगश्चित्रकस्य ( व. श्र. ढ. )

with milk or a course of vitalising drugs, or a course of the potted ghee of ten years' standing is recommended.

**रक्तावसेकाच्छास्त्राणां सतां सत्त्ववतामपि ।**
**सेवनान्मदमूर्च्छायाः प्रशाम्यन्ति शरीरिणाम् ॥५८॥**

रक्त- રક્તના रक्तके, अवसेकात् મોક્ષણથી मोक्षणसे, शास्त्राणाम् શાસ્ત્રોનાં शास्त्रोंके, सत्त्ववताम् તથા સત્ત્વગુણવાળા और सत्त्वगुणवाले, सताम् સત્પુરુષોના सत्पुरुषोंके, सेवनात् સેવનથી सेवनसे, अपि પણ भी, शरीरिणाम् મનુષ્યોનાં मनुष्योंके, मदमूर्च्छायाः મદ અને મૂર્છા मद और मूर्छा, प्रशाम्यन्ति શાન્ત થઈ જાય છે शान्त होते हैं ॥५८॥

58. The diseases of intoxication and fainting get alleviated by depletion of blood as also by devotion to scriptures and to good and righteous men.

अध्यायार्थसंग्रहः —

**तत्र श्लोकौ—**

**विशुद्धं चाविशुद्धं च शोणितं तस्य हेतवः ।**
**रक्तप्रदोषजा रोगास्तेषु रोगेषु चौषधम् ॥५९॥**

तत्र श्लोकौ તે વિષયમાં ઉપસંહારના બે શ્લોકો છે કે उस विषयमें उपसंहारके दो श्लोक हैं कि, विशुद्धम् च વિશુદ્ધ विशुद्ध, अविशुद्धम् च અને અવિશુધ્ધ और अविशुद्ध, शोणितम् રક્ત रक्त, तस्य તેના इसके, हेतवः હેતુઓ कारण, रक्त- રક્તના रक्तके, प्रदोषजाः દોષથી ઉત્પન્ન થતા दोषसे उत्पन्न होते, रोगाः રોગો रोग, तेषु તે इन, रोगेषु રોગોમાં रोगमें, औषधम् च ઔષધ औषध ॥ ५९ ॥

Here are the two recapitulatory verses—

59. The nature of the pure and of the impure blood, the causes thereof, the blood-born diseases and their remedies;

**मदमूर्च्छायसंन्यासहेतुलक्षणभेषजम् ।**
**विधिशोणितकेऽध्याये सर्वमेतत् प्रकाशितम् ॥६०॥**

मद- મદ मद, मूर्च्छाय- મૂર્છા मूर्छा, संन्यास- તથા સંન્યાસનાં एवं संन्यासके, हेतु- કારણ कारण, लक्षण- લક્ષણ लक्षण, भेषजम् અને ઔષધ और औषध, एतत् આ ये, सर्वम् સર્વ सब, विधिशोणितके વિધિશોણિતક विधिशोणितक, अध्याये અધ્યાયમાં अध्यायमें, प्रकाशितम् પ્રકાશિત કર્યું છે प्रकाशित किया है ॥ ६० ॥

60. and the etiology, symptoms and treatment, of intoxication, fainting and syncope have all been described in this chapter entitled "The blood derived through systematic regimen".

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने विधिशोणितीयो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥**

**समाप्तो योजनाचतुष्कः ॥ ६ ॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, श्लोकस्थाने સૂત્રસ્થાન વિષે सूत्रस्थानमें, विधिशोणितीयः 'વિધિશોણિતીય' 'विधिशोणितीय', नाम નામનો नामका, चतुर्विंशः ચોવીસમો चोवीसवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ २४ ॥

योजनाचतुष्कः છઠ્ઠો યોજનારૂપ વિષયવાળા ચાર અધ્યાયોનો સમૂહ छट्ठा योजनाविषयक चार अध्यायोंका समूह, समाप्तः સંપૂર્ણ થયો समाप्त हुआ ॥ ६ ॥

24. Thus in the section on General Principles in the treatise compiled by Agnivesa and revised by Caraka, the twenty-fourth chapter entitled "The blood derived through systematic regimen" is completed.

6. Thus ends the tetrad of chapters dealing with therapeutic procedures.

## पञ्चविंशोऽध्यायः।

પચીસમો અધ્યાય अध्याय पचीसवाँ

## Chapter XXV

यज्जःपुरुषीयाध्यायोपक्रमः —

**अथातो यज्जःपुरुषीयमध्यायं व्याख्यास्यामः ॥१॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**अथ अतः** હવે અહીંથી अब आगे, **यज्जःपुरुषीयम्** 'યજ્જઃપુરુષીય' નામના 'यज्जःपुरुषीय' नामके, **अध्यायम्** અધ્યાયનું अध्यायका, **व्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

**भगवान्** ભગવાન भगवान, **आत्रेयः** આત્રેયે आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણેજ इस विषयमें निम्न प्रकारसे ही, **आह स्म** કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled " The origin of man ( and disease )."

2. Thus declared the worshipful Atreya.

पुरुषमामयं चाधिकृत्य समेतानां महर्षीणां विवादाः —

**पुरा प्रत्यक्षधर्माणं भगवन्तं पुनर्वसुम् ।**
**समेतानां महर्षीणां प्रादुरासीदियं कथा ॥ ३ ॥**

**आत्मेन्द्रियमनोर्थानां योऽयं पुरुषसंज्ञकः ।**
**राशिरस्यामयानां च प्रागुत्पत्तिविनिश्चये ॥४॥**

**पुरा** પૂર્વે प्राचीन कालमें, **प्रत्यक्षधर्माणम्** જેણે ધર્મનો સાક્ષાત્કાર કર્યો હતો એવા जिसने धर्मका साक्षात्कार किया था ऐसे, **भगवन्तम्** ભગવાન भगवान, **पुनर्वसुम्** પુનર્વસુની પાસે पुनर्वसुके पास, **समेतानाम्** એકઠા થયેલા इकट्ठे हुए, **महर्षीणाम्** મહર્ષિઓમાં महर्षियोंमें, **आत्म** આત્મા आत्मा, **इन्द्रिय-** ઇન્દ્રિય इन्द्रिय, **मनः-** મન मन, **अर्थानाम्** અને વિષયોનો और विषयों-का, **यः अयम्** જે આ जो यह, **पुरुषसंज्ञकः** પુરુષ નામનો पुरुषनामक, **राशिः** સંઘાત છે संघात है, **अस्य** એના उसके, **आमयानाम् च** અને રોગોની और रोगोंकी, **प्रागुत्पत्ति-** પ્રથમ ઉત્પત્તિના કારણના प्रथम उत्पत्तिके कारणके, **विनिश्चये** નિર્ણયના સંબંધમાં निर्णयके सम्बन्धमें, **इयम् कथा** આ ચર્ચા यह चर्चा, **प्रादुरासीत्** ચાલી હતી हुई थी ॥ ३–४ ॥

3-4. Long ago among the great sages gathered about the worshipful Atreya to whom all knowledge was a matter of direct perception, there arose first the following discussion as to determining the truth concerning the primal origin of man who is the aggregate of the spirit, senses, mind and sense-objects, as also concerning the diseases affecting him.

**तदन्तरं काशिपतिर्वामको वाक्यमर्थवित् ।**
**व्याजहारर्षिसमितिमुपसृत्याभिवाद्य च ॥५॥**

**तदन्तरम्** તે સમયે उस समयमें, **अर्थवित्** અર્થવેત્તા अर्थवेत्ता, **काशिपतिः** કાશીરાજ काशीराज, **वामकः** વામકે वामकने, **ऋषिसमितिम्** ઋષિમંડળ ऋषियोंकी सभामें, **उपसृत्य** પાસે જઈને पहुंचकर, **अभिवाद्य च** અને પ્રણામ કરીને और प्रणाम करके, **व्याजहार** કહ્યું कहा ॥ ५ ॥

5. On this occasion, king Vamaka of Kasi, who was learned in the sciences, having approached the assembly of the sages and having duly saluted them, made this observation.

३. समेतानां—उपासतां (च. द. ध.)
,, समेतानां महर्षीणां प्रादुरासीदियं कथा—महर्षय उपासीनाः प्रादुश्चक्रुरिमां कथाम् (ग. थ. ध.)

५. तदन्तरं काशिपतिर्वामको वाक्यमर्थवित्—अथ काशिपतिर्वाक्यं वामकोऽर्थवदन्तरा (क. ध.)
,, वाक्यमर्थवित्—वाक्यमर्थवित (ध. च.)
,, वाक्य°—वाच° (त.)
,, °मुपसृत्य—°मभिसृत्य (ध.)
,, ,, —°मभिष्टुत्य (द.)

**किन्तु भोः पुरुषो यज्ञस्तज्ज्ञास्तस्यामयाः स्मृताः ।**
**न वेत्युक्ते नरेन्द्रेण प्रोवाचर्षीन् पुनर्वसुः ॥६॥**

भोः हे ऋषियो ! हे ऋषियों, ! किंतु शुं क्या, पुरुषः પુરુષ पुरुष, यज्ञः જેનાથી ઉત્પન્ન થાય છે जिससे उत्पन्न होता है, तज्जाः तस्य आमयाः તેનાથી તેના રોગો પણ ઉત્પન્ન થાય છે उसीसे उसके रोग भी उत्पन्न होते हैं, स्मृताः એમ માનવામાં આવે છે ऐसा माना जाता है, न वा કે નહિ ? या नहीं ?, इति એ પ્રમાણે इस प्रकार, नरेन्द्रेण રાજાએ राजाने, उक्ते કહ્યું ત્યારે कहा तब, पुनर्वसुः પુનર્વસુએ पुनर्वसुने, ऋषीन् ઋષિઓને ऋषियोंसे, प्रोवाच કહ્યું कहा ॥ ६ ॥

6. "What, O, Sirs, is the truth? Do the diseases afflicting man arise from the same source as he himself is derived from or is it otherwise?". When the king had thus spoken, Punarvasu addressing the sages, said—

**सर्वे एवामितज्ञानविज्ञानच्छिन्नसंशयाः ।**
**भवन्तश्छेत्तुमर्हन्ति काशिराजस्य संशयम् ॥७॥**

अमित- અગાધ अपरिमित, ज्ञान- જ્ઞાન ज्ञान, विज्ञान- તથા વિજ્ઞાનથી एवं विज्ञानसे, छिन्न- નષ્ટ થયા છે नष्ट हुए हैं, संशयाः સંશયો જેના એવા संशय जिनके ऐसे, भवन्तः આપ आप, सर्वे एव બધા જ सब ही, काशिराजस्य કાશિરાજનો काशिराजके, संशयम् સંશય संशयको, छेत्तुम् છેદવાને दूर करनेके लिए, अर्हन्ति યોગ્ય છો योग्य हैं ॥७॥

7. "It behoves you who have had all your doubts dispelled by your immeasurable sight into knowledge and science, to resolve the doubt raised by the king of Kasi."

**पारीक्षिस्तत्परीक्ष्याग्रे मौद्गल्यो वाक्यमब्रवीत् ।**
**आत्मजः पुरुषो रोगाश्चात्मजाः कारणं हि सः ॥८॥**

तत् તેનો उसका, परीक्ष्य વિચાર કરી विचार करके, मौद्गल्यः મૌદ્ગલ્ય ગોત્રના मौद्गल्य गोत्रके, पारीक्षिः પારીક્ષિ ઋષિએ पारीक्षि ऋषिने, अग्रे પહેલાં प्रथम, वाक्यम् વચન वचनको, अब्रवीत् કહ્યું कहा, पुरुषः પુરુષ पुरुष, आत्मजः આત્માથી ઉત્પન્ન થાય છે आत्मासे उत्पन्न होता है, रोगाश्च અને રોગો પણ और रोग भी, आत्मजाः આત્માથી ઉત્પન્ન થાય છે आत्मासे उत्पन्न होते हैं, हि કેમકે क्योंकि, सः તે वह, कारणम् કારણ છે कारण है ॥ ८ ॥

8. Parikshi Maudgalya having considered the question, was the first to formulate the answer. He said—"Man is born of the spirit, likewise all the diseases are born of the spirit. For the spirit is the source of everything.

**स चिनोत्युपभुङ्क्ते च कर्म कर्मफलानि च ।**
**नह्यृते चेतनाधातोः प्रवृत्तिः सुखदुःखयोः ॥९॥**

सः તે वह, कर्म કર્મોનો कर्मोंका, चिनोति સંચય કરે છે संचय करता है, कर्मफलानि च અને કર્મફળોને और कर्मफलोंको, उपभुङ्क्ते ભોગવે છે भोगता है, हि કેમકે क्योंकि, चेतनाधातोः ચેતનધાતુ आत्माके, ऋते સિવાય विना, सुखदुःखयोः સુખદુઃખની सुखदुःखकी, प्रवृत्तिः न પ્રવૃત્તિ થતી નથી प्रवृत्ति नहीं होती ॥ ९ ॥

9. It is the spirit that acquires and enjoys the merits of actions and their fruits respectively; for in the absence of the element of consciousness there is no activity either pleasurable or painful".

**शरलोमा तु नेत्याह न ह्यात्माऽऽत्मानमात्मना ।**
**योजयेद्व्याधिभिर्दुःखैर्दुःखद्वेषी कदाचन ॥१०॥**

६. किन्तु भोः--किन्तु स्यात् (त. ध.)
,, प्रोवाचर्षीन्--प्रोवाचर्षिः (ज. ध.)
८. परीक्ष्याग्रे--परीक्षायै (ज.)

९. स चिनोति--संचिनोति (ज.)
,, नह्यृते--लक्ष्यते (ध.)

शरलोमा तु પરંતુ શરલોમાએ परन्तु शरलोमाने, न इति 'એમ નથી' એ પ્રમાણે 'ऐसा नहीं' इस प्रकार, आह કહ્યું कहा, हि કેમકે क्योंकि, दुःखद्वेषी દુઃખનો દ્વેષ કરનાર दुःखोंका द्वेष करनेवाला, आत्मा આત્મા आत्मा, आत्मना પોતાની જાતે अपने आप, आत्मानम् પોતાને अपनेको, दुःखैः દુઃખદાયક दुःख देनेवाले, व्याधिभिः રોગો સાથે रोगोंसे, कदाचन કદી પણ कभी, न योजयेत् યુક્ત ન કરે युक्त न करे ॥ १० ॥

10. But the sage Saraloma, (intervening at this stage in the debate) said—" No, (this is not so); for surely the spirit, seeing that it dislikes pain, would never yoke itself of its own accord to diseases which cause pain."

**रजस्तमोभ्यां तु मनः परीतं सत्त्वसंज्ञकम् ।**
**शरीरस्य समुत्पत्तौ विकाराणां च कारणम् ॥११॥**

रजः- રજોગુણ रजोगुण, तमोभ्याम् અને તમોગુણથી और तमोगुणसे, परीतम् ઘેરાયલું व्याप्त, सत्त्वसंज्ञकम् સત્ત્વનામક सत्त्वसंज्ञावाला, मनः तु મન જ मन ही, शरीरस्य શરીર शरीर, विकाराणाम् च અને રોગોની और रोगोंकी, समुत्पत्तौ ઉત્પત્તિમાં उत्पत्तिमें, कारणम् કારણ છે कारण है ॥ ११ ॥

11. The real cause of the origin, both of the body and its afflictions, is the mind, known as 'Sattva', when it is enveloped by passion and ignorance."

**वार्योविदस्तु नेत्याह न ह्येकं कारणं मनः ।**
**नर्ते शरीराच्छारीररोगा न मनसः स्थितिः ॥१२॥**

वार्योविदः तु પરંતુ વાર્યોવિદે परन्तु वार्योविदने, न इति 'એમ નથી' એ પ્રમાણે 'ऐसा नहीं' इस प्रकार, आह કહ્યું कहा, हि કેમકે क्योंकि, एकम् એકલું अकेला, मनः મન मन, कारणम् न કારણ નથી कारण नहीं है, शरीरात् ऋते શરીર સિવાય शरीरके बिना, शारीररोगाः શરીરના રોગો शरीरके रोग, न ન થઈ શકે नहीं हो सकते, मनसः અને મનની और मनकी, स्थितिः સ્થિતિ પણ स्थिति भी, न ન હોઈ શકે नहीं हो सकती ॥ १२ ॥

12. But now Varyovida, (intervening) said— "No. (this, too, is not right). For the mind by itself cannot be the cause (of anything). Thus without the body there cannot (of course) be any disease of the body, nor (for that matter) the mind's very existence.

**रसजानि तु भूतानि व्याधयश्च पृथग्विधाः ।**
**आपो हि रसवत्यस्ताः स्मृता निर्वृत्तिहेतवः ॥१३॥**

भूतानि तु પ્રાણીઓ પણ प्राणी भी, रसजानि રસજ છે रसज हैं, पृथग्विधाः જુદી જુદી જાતના भिन्न भिन्न प्रकारके, व्याधयः च રોગો પણ રસથી ઉત્પન્ન થાય છે रोग भी रससे उत्पन्न होते हैं, आपः हि જળ जल, रसवत्यः રસવાળું છે रसवाला है, ताः તે वह, निर्वृत्ति- વ્યાધિ તથા પુરુષની ઉત્પત્તિમાં व्याधि और पुरुषकी उत्पत्तिमें, हेतवः કારણ कारण, स्मृताः માનેલું છે माना गया है ॥ १३ ॥

13. All creatures are born out of the fluid (pertaining to the embryonic and fetal life); so also the various kinds of diseases. The proto-element water indeed is the basis of all fluids and it is described to be the cause of their manifestation."

**हिरण्याक्षस्तु नेत्याह न ह्यात्मा रसजः स्मृतः ।**
**नातीन्द्रियं मनः सन्ति रोगाः शब्दादिजास्तथा १४**

हिरण्याक्षः तु ત્યારે હિરણ્યાક્ષે तब हिरण्याक्षने, न इति 'એમ નથી' એ પ્રમાણે 'ऐसा नहीं' इस प्रकार,

१२. नर्ते शरीराच्छारीर–नर्ते शरीराच्छारीरा (ज.)
,, शरीरा°–शरीरं° (ख. ग. छ.)
,, रोगा न–रोगाणां (ध.)

आह કહ્યું कहा, हि કેમકે क्योंकि, आत्मा આત્મા आत्मा, रसजः રસજન્ય रससे उत्पन्न होनेवाला, न स्मृतः માનેલો નથી नहीं माना गया, अतीन्द्रियम् જે ઇંદ્રિયોનો વિષય નથી એવું जो इन्द्रियोंका विषय नहीं ऐसा, मनः મન मन, न રસથી ઉત્પન્ન થતું નથી रससे उत्पन्न नहीं होता, तथा रोगाः તથા રોગો तथा रोग, शब्दादिजाः શબ્દ વગેરેથી પણ ઉત્પન્ન થાય છે शब्द आदिसे भी उत्पन्न होते हैं ॥ १४ ॥

14. (On hearing this, the sage) Hiranyaksha said—"No. For the spirit is not said to be born of the fluids nor even the mind which is supersensual. Besides, there are diseases which spring from sound etc, (which shows that not all diseases are born of the fluids).

**षड्धातुजस्तु पुरुषो रोगाः षड्धातुजास्तथा ।**
**राशिः षड्धातुजो ह्येष सांख्यैराद्यैः प्रकीर्तितः ॥१५॥**

पुरुषः तु પુરુષ તો पुरुष तो, षड्धातुजः ૭ ધાતુઓથી ઉત્પન્ન થાય છે छः धातुओंसे उत्पन्न होता है, तथा તેવી રીતે वैसे ही, रोगाः રોગો પણ रोग भी, षड्धातुजाः ૭ ધાતુઓથી ઉત્પન્ન થાય છે छः धातुओंसे उत्पन्न होते हैं, हि કેમકે क्योंकि, आद्यैः પ્રાચીન प्राचीन, सांख्यैः તત્ત્વજ્ઞાનીઓએ तत्त्ववेत्ताओंने, एषः राशिः આ રાશિપુરુષને इस राशिपुरुषको, षड्धातुजः ૭ ધાતુઓથી ઉત્પન્ન થતો छः धातुओंसे उत्पन्न होनेवाला, परिकीर्तितः કહેલો છે कहा है ॥ १५ ॥

15. Man, then, is the result of the six elements. The diseases, too, arise from six elements. Thus the individual was declared by the numerical physicians to be the aggregate resulting from (the union of) the six elements (the five proto-elements and consciousness)".

**तथा ब्रुवाणं कुशिकमाह तन्नेति कौशिकः ।**
**कस्मान्मातापितृभ्यां हि विना षड्धातुजो भवेत् १६**

तथा એ પ્રમાણે इस प्रकार, ब्रुवाणम् કહેતા कहते हुए, कुशिकम् હિરણ્યાક્ષને हिरण्याक्षसे, कौशिकः કૌશિક કૌશિકને, तत् તે वह, न इति 'એમ નથી' એ પ્રમાણે 'ऐसा नहीं' इस प्रकार, आह કહ્યું कहा, हि કારણ કે क्योंकि, मातापितृभ्याम् विना માતાપિતા સિવાય मातापिताके बिना, षड्धातुजः ૭ ધાતુઓથી ઉત્પન્ન થનારો छः धातुओंसे उत्पन्न होनेवाला, कस्मात् કેવી રીતે कैसे, भवेत् થઈ શકે? हो सकता है? ॥ १६ ॥

16. To Kusika (another name of the sage Hiranyaksha) who was thus propounding (his thesis), the sage *Saunaka* said–"No. That is not so. How can the individual spring from the six elements without the agency of the father and mother?

**पुरुषः पुरुषाद्गौर्गोरश्वादश्वः प्रजायते ।**
**पित्र्या मेहादयश्चोक्ता रोगास्तावत्र कारणम् ॥१७॥**

पुरुषात પુરુષથી पुरुषसे, पुरुषः પુરુષ पुरुष, गोः બળદથી बैलसे, गौः બળદ बैल, अश्वात् ઘોડાથી घोड़ेसे, अश्वः ઘોડો घोड़ा, प्रजायते ઉત્પન્ન થાય છે उत्पन्न होता है, मेहादयः च અને મેહાદિ और मेहादि, रोगाः રોગો रोग, पित्र्याः માતાપિતાથી ઉત્પન્ન થનારા मातापितासे उत्पन्न होनेवाले, उक्ताः કહ્યા છે कहे हैं,

१५. °ह्येष सांख्यैराद्यैः प्रकीर्तितः–°सांख्यैराद्यैः संपरिकीर्तितः (ख. ज. ठ.)
,, प्रकीर्तितः–परीक्षितः (ग. च. थ. ध.)

१६. तथा ब्रुवाणं–तदुक्तवन्तं (ज.)
,, कौशिकः–शौनकः (क. ख. छ झ. ढ.)
,, ,, –शौनकिः (च)
१७. पुरुषः पुरुषाद् गौर्गोरश्वादश्वः प्रजायते–पुरुषः पुरुषं गौर्गामश्वोऽश्वं तु प्रजायते (प.)
,, पित्र्या–पैत्र्या (छ. ध.)
,, ,, –पित्रो° (ज थ.)
,, पित्र्या मेहादयश्चोक्ता–मातापितृभवाश्चोक्ता (च. द. ध.)

तो આથી તે એ इसलिए ये दोनों, अत्र આ પુરુષની ઉત્પત્તિમાં इस पुरुषकी उत्पत्तिमें, कारणम् કારણ છે कारण हैं ॥ १७ ॥

17. Thus man is born of man, bull of bull, horse of horse, (and so forth). Thus diseases such as the urinary one and others have been said to be hereditary. Therefore, the parents are the origin (both of the individual and his disease)".

**भद्रकाप्यस्तु नेत्याह नह्यन्धोऽन्धात् प्रजायते ।**
**मातापित्रोरपि च ते प्रागुत्पत्तिर्न युज्यते ॥१८॥**

भद्रकाप्यः तु પરંતુ ભદ્રકાપ્યે परन्तु भद्रकाप्यने, न इति 'એમ નથી' એ પ્રમાણે 'ऐसा नहीं' इस प्रकार, आह કહ્યું कहा, हि કેમકે क्योंकि, अन्धात् આંધળાથી अन्धेसे, अन्धः આંધળો अन्धा, न उपजायते ઉત્પન્ન થતો નથી उत्पन्न नहीं होता, अपि च વળી और, ते તારા મતમાં तेरे मतमें, मातापित्रोः માતા-પિતાની मातापिताकी, प्राक् સૃષ્ટિથી પહેલાં सृष्टिसे पहिले, उत्पत्तिः ઉત્પત્તિ उत्पत्ति, न युज्यते થઈ શકતી નથી नहीं हो सकती ॥ १८ ॥

18. But Bhadrakapya said– "No. For the blind are not born of the blind. Nor can you account (on your thesis) for the origin of the first parents.

**कर्मजस्तु मतो जन्तुः कर्मजास्तस्य चामयाः ।**
**नह्यृते कर्मणो जन्म रोगाणां पुरुषस्य वा ॥१९॥**

जन्तुः तु પ્રાણી તો प्राणी तो, कर्मजः કર્મજન્ય कर्मजन्य, मतः માનેલ છે माना गया है, तस्य च અને તેના और उसके, आमयाः રોગો रोग, कर्मजाः કર્મજ માનેલા છે कर्मज माने गये हैं, हि કેમકે क्योंकि, कर्मणः ऋते કર્મ સિવાય कर्मके बिना, पुरुषस्य પુરુષની पुरुषकी, रोगाणाम् वा અથવા રોગોની या रोगोंकी, जन्म ઉત્પત્તિ उत्पत्ति, न થતી નથી नहीं होती ॥ १९ ॥

19. Therefore a creature is said to be born of the merits of action and from merits of action also arise the diseases afflicting him. In the absence of action, there is no rise either of man or of disease".

**भरद्वाजस्तु नेत्याह कर्ता पूर्वं हि कर्मणः ।**
**दृष्टं न चाकृतं कर्म यस्य स्यात् पुरुषः फलम् ॥२०॥**

भरद्वाजः तु ત્યારે ભરદ્વાજે तब भरद्वाजने, न इति 'એમ નથી' એ પ્રમાણે 'ऐसा नहीं' इस प्रकार, आह કહ્યું कहा, हि કેમકે क्योंकि, कर्मणः કર્મનો कर्मका, पूर्वम् પહેલાં पहिले, कर्ता કર્તા હોવો જોઈએ कर्ता होना चाहिए, कर्म च અને કર્મ और कर्म, अकृतम् न કરેલું હોય એવું न किया हो ऐसा, न दृष्टम् દેખવામાં નથી આવ્યું नहीं देखा गया, यस्य જેનું जिसका, फलम् ફળ परिणाम, पुरुषः પુરુષ હોય पुरुष होवे ॥ २० ॥

20. To this the sage Bharadwaja said– "No. For the doer always precedes the deed. Nor have we any valid knowledge of action that has not been performed, whereof it may be said that an individual is the result.

**भावहेतुः स्वभावस्तु व्याधीनां पुरुषस्य च ।**
**खरद्रवचलोष्णत्वं तेजोन्तानां यथैव हि ॥२१॥**

यथा જેવી રીતે जिस प्रकार, तेजोन्तानाम् પૃથ્વી આદિથી તેજ સુધીનાં દ્રવ્યોનો पृथ्वी आदिसे तेज पर्यन्त द्रव्योंका, खर- ખરત્વ खरत्व, द्रव- દ્રવત્વ द्रवत्व, चल- ચલત્વ चलत्व, उष्णत्वम् ઉષ્ણત્વ उष्णत्व, स्वभावः एव સ્વભાવ જ છે स्वभाव ही है, व्याधीनाम् તેવી જ રીતે રોગોની वैसे ही रोगोंकी, पुरुषस्य च અને પુરુષની और पुरुषकी, भावहेतुः तु ઉત્પત્તિનો હેતુ પણ उत्पत्तिका हेतु भी, स्वभावः સ્વભાવ જ છે स्वभाव ही है ॥ २१ ॥

21. Nature alone is the cause, then, of both man and his diseases just as roughness, fluidity, mobility and heat are respectively the nature of earth, water, air and fire".

84-(2). Having an exceedingly liquefacient action, the chilichima gives rise to the diseases mentioned, in a specially aggravated form; in addition, it produces intestinal toxemia.

**ग्राम्यानूपौदकपिशितानि च मधुतिलगुडपयोमाषमूलकबिसैर्विरूढधान्यैर्वा नैकध्यमद्यात्,**

**ग्राम्य-** ગ્રામ્ય ग्राम्य, **आनूप-** આનૂપ आनूप, **औदक-** તથા જલજ પશુપક્ષીઓનાં तथा जलज पशुपक्षियोंके, **पिशितानि च** માંસોને मांसको, **मधु-** મધ शहद, **तिल-** તલ तिल, **गुड-** ગોળ गुड़, **पयः-** દૂધ दूध, **माष-** અડદ ऊड़द, **मूलक-** મૂળા मूली, **बिसैः** તથા કમલનાલ સાથે तथा भिसके साथ, **विरूढधान्यैः वा** અથવા અંકુરિત અનાજ સાથે अथवा अङ्कुरित धान्योंके साथ, **ऐकध्यम्** એકત્ર કરીને मिला कर, **न अद्यात्** ખાવાં નહિ नहीं खाना चाहिए;

84-(3). The flesh of domesticated, wet-land or of aquatic creatures should not be eaten in conjunction with honey, til, gur, milk, black-gram, garden radish, lotus stalks or sprouted grains.

**तन्मूलं हि बाधिर्यान्ध्यवेपथुजाड्यकलमूकतामैण्मिण्यमथवा मरणमाप्नोति ।**

**हि** કારણકે क्योंकि, **तन्मूलम्** તેને લઈને (મનુષ્ય) इनसे (मनुष्य), **बाधिर्यं-** બહેરાપણું बधिरता, **आन्ध्य-** આંધળાપણું अन्धत्व, **वेपथु-** કંપ कम्पन, **जाड्य-** જડતા जड़ता, **कलमूकता** અસ્પષ્ટ વાણી अस्पष्ट वाणी, **मैण्मिण्यम्** નાકમાંથી બોલવાપણું अनुनासिक वाणी, **अथवा** અથવા अथवा, **मरणम्** મરણ मृत्यु, **आप्नोति** પામે છે पाता है;

८४. बाधिर्यान्ध्यवेपथुजाड्यकलमूकतामैण्मिण्यम्—बाधिर्यान्ध्यजाड्यवैकल्यमूकतामैण्मिण्यम् (च.)
,, जाड्यकलमूकता—जाड्यविकलमूकता (च)
,, —कण्ठजाड्यमूकता (प.)
,, मैण्मिण्य—मैन्मिन्य (द.)

84-(4). It is on account of such mixed diet that one develops deafness, blindness, tremors, idiocy, indistinctness of speech, nasal articulation, or comes by one's death.

**न पौष्करं रोहिणीकं शाकं कपोतान् वा सर्षपतैलभृष्टान्मधुपयोभ्यां सहाभ्यवहरेत्,**

**पौष्करम्** પુષ્કર पुष्करका, **रोहिणीकम्** અથવા રોહિણીના अथवा रोहिणीके, **शाकम्** શાકને शाकको, **सर्षपतैल-** અથવા સરસિયા તેલમાં अथवा सरसोंके तैलमें, **भृष्टान्** તળેલા भर्जित, **कपोतान् वा** કબૂતરના માંસને कबूतरके मांसको, **मधु-** મધ शहद, **पयोभ्याम्** તથા દૂધની तथा दूधके, **सह** સાથે साथ, **न अभ्यवहरेत्** ખાવાં નહિ न खाए;

84-(5). The leaves of gelmeniris, kurroa or the flesh of pigeon fried in rape-seed oil must not be eaten together with honey and milk.

**तन्मूलं हि शोणिताभिष्यन्दधमनीप्रवि(ति)चयापस्मारशङ्खकगलगण्डरोहिणीनामन्यतमं प्राप्नोत्यथवा मरणमिति ।**

**हि** કારણકે चूंकि, **तन्मूलम्** તેને કારણે इसके कारण, **शोणिताभिष्यन्द-** રક્તાભિષ્યન્દ रक्ताभिष्यन्द, **धमनी-** ધમનીઓનું धमनीका, **प्रविचय-** ફૂલીજવું विस्तृत होना, **अपस्मार-** અપસ્માર अपस्मार, **शङ्खक-** શંખક शङ्खक, **गलगण्ड-** ગલગંડ गलगण्ड, **रोहिणीनाम्** અને રોહિણી એઓમાંથી और रोहिणी इनमेंसे, **अन्यतमम्** કોઈએક રોગને किसी एक रोगको, **अथवा** અથવા अथवा, **मरणम्** મરણને मृत्युको, **प्राप्नोति इति** પામે છે प्राप्त करता है;

84-(6). It is from such mixed diet that one falls a victim to one or the other of the diseases such as increased liquidity of the blood, dilatation of the vessels, epilepsy, *sankhaka*,

८४. रोहिणीनाम्—रोहिणीकानाम् (च.)

deradenoncus, rohini or to death itself.

**न मूलकलशुनकृष्णगन्धार्जकसुमुखसुरसादीनि भक्षयित्वा पयः सेव्यं, कुष्ठाबाधभयात् ।**

मूलक- મૂળા मूली, लशुन- લસણ लहसन, कृष्णगन्धा- સરગવો सहिजन, अर्जक-અર્જક अर्जक, सुमुख- સુમુખ सुमुख, सुरसा- સુરસા सुरसा, आदीनि વગેરે आदि, भक्षयित्वा ખાઈને खा कर, कुष्ठ-आबाध-भयात् કુષ્ઠની પીડા થવાના ભયથી कुष्ठ रोग होनेका भय रहनेसे, पयः દૂધ दूधका, न सेव्यम् સેવવું નહિ सेवन नहीं करना चाहिए;

84-(7). One must not drink milk having eaten garden radish, garlic, moringa, large basil, holy basil, surasa, for fear of developing dermatosis.

**न जातुकशाकं न निकुचं पक्वं मधुपयोभ्यां सहोपयोज्यम्,**

जातुकशाकम् જાતુકશાકનો जातुकशाकका, मधु- મધ शहद, पयोभ्याम् અને દૂધ और दूधके, सह સાથે साथ, न उपयोज्यम् ઉપયોગ કરવો નહિ उपयोग नहीं करना चाहिए, पक्वम् તેમ પાકેલા पके हुए, निकुचम् લકુચનો પણ बड़हलका भी, न તેઓની સાથે ઉપયોગ કરવો નહિ उनके साथ उपयोग नहीं करना चाहिए;

84-(8). Jatuka-shaka and ripe lakoocha must not be eaten with honey or milk.

**एतद्धि मरणायाथवा बलवर्णतेजोवीर्योपरोधायालघुव्याधये षाण्ढ्याय चेति ।**

हि કારણકે चूंकि, एतत् એ यह, मरणाय મરણને માટે मृत्युके लिए, अथवा અથવા अथवा, बल- બળ बल, वर्ण- વર્ણ वर्ण, तेजः- તેજ तेज, वीर्य- તથા વીર્યની तथा वीर्यकी, उपरोधाय હાનિ માટે हानिके लिए, अलघुव्याधये મોટા વ્યાધિ માટે महा व्याधिके लिए, षाण्ढ्याय च इति અને નપુંસકતા માટે થાય છે और नपुंसकताके लिए होता है;

84-(9). For, such parctice brings about death or the loss of strength, complexion, radiance and virility or some other major disease or impotency.

**तदेव निकुचं पक्वं न माषसूपगुडसर्पिर्भिः सहोपयोज्यं वैरोधिकत्वात् ।**

तत् एव તેજ उसी प्रकार, पक्वम् પાકેલા पके हुए, निकुचम् લકુચને बड़हलको, वैरोधिकत्वात् વિરોધી હોવાથી विरोधी होनेसे, माष- અડદની उड़दकी, सूप- દાળ दाल, गुड- ગોળ गुड़, सर्पिर्भिः તથા ઘીની तथा घीके, सह સાથે साथ, न उपयोज्यम् ખાવું નહિ नहीं खाना चाहिए;

84-(10). Ripe lakoocha should not be used with black-gram soup or with gur and ghee as such combination is incompatible.

**तथाऽऽम्राम्रातकमातुलुङ्गनिकुचकरमर्दमोचदन्तशठबदरकोशाम्रभव्यजाम्बवकपित्थतिन्तिडीकपारावताक्षोडपनसनालिकेरदाडिमामलकान्येवं-प्रकाराणि चान्यानि द्रव्याणि सर्वं चाम्लं द्रवमद्रवं च पयसा सह विरुद्धम् ।**

तथा અને और, आम्र- આંબો आम, आम्रातक- અંબાડો अम्बाडा, मातुलुङ्ग- બિજોરું बिजौरा, निकुच- લકુચ बड़हल, करमर्द- કરમદાં करोंदा, मोच- કેળાં केला, दन्तशठ- દંતશઠ गलगल, बदर- બોર बेर, कोशाम्र- क्षुद्राम्र क्षुद्राम्र, भव्य- ભવ્ય कमरख, जाम्बव- જાંબુ जामुन, कपित्थ- કોઠ कैथ, तिन्तिडीक- તિંતિડી विषांबिल, पारावत- પારાવત पारावत, अक्षोड- અખરોટ अखरोट, पनस- પનસ कटहल, नालिकेर- નાળિયેર नारियल, दाडिम- દાડમ दाडिम, आमलकानि આમળાં आंवले,

८४. जातुकशाकम्—जातुशाकम् (ख.)
,, ,, —वास्तुशाकम् (ङ.)

८४. निकुचम्—लकुचम् (च. छ.)
८४. तथाऽऽम्राम्रातक—तथाम्रकाम्रातक (छ.)

**एवंप्रकाराणि च** અને એવા પ્રકારનાં और इस प्रकारके, **अन्यानि** બીજાં अन्य, **द्रव्याणि** દ્રવ્યો द्रव्य, **द्रवम्** તેમજ પ્રવાહી एवं द्रव, **अद्रवम् च** તથા અપ્રવાહી तथा अद्रव, **सर्वम्** બધાં सब, **अम्लम्** ખાટાં દ્રવ્યો खट्टे पदार्थ, **पयसा सह** દૂધની સાથે दूधके साथ, **विरुद्धम्** વિરોધી છે विरोधी हैं;

84-(11). Similarly, mango, Indian hog-plum, pomelo, lakoocha, Bengal currant, plantain, lemon, small jujube, Ceylon oak, showy dellenia, jambul, wood apple, tamarind, paravata, walnut, jack-fruit, coconut, pomegranate, emblic myrobalan and such other substances, and all sour things, either liquid or otherwise, are incompatible with milk.

**तथा कङ्गुवनकमकुष्ठककुलत्थमाषनिष्पावाः पयसा सह विरुद्धाः ।**

**तथा** તે પ્રમાણે इसी प्रकार, **कङ्गु-** કાંગ कंगनी, **वनक-** વનક वनक, **मकुष्ठक-** મઠ मोठ, **कुलत्थ-** કળથી कुलथी, **माष-** અડદ ऊड़द, **निष्पावाः** તથા વાલ तथा सेम, **पयसा सह** દૂધની સાથે दूधके साथ, **विरुद्धाः** વિરોધી છે विरोधी हैं;

84-(12). Similarly, Italian millet, wild common millet, moth-gram, horse-gram, black-gram, and lablab are equally incompatible with milk.

**पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं विरुद्धं वातं चातिकोपयति ।**

**पद्मोत्तरिकाशाकम्** કુસુમ્ભશાક कुसुम्भशाक, **शार्करः** સાકરનું મદ્ય शर्कराजन्य मद्य, **मैरेयः** મૈરેય મદ્ય मैरेय मद्य, **मधु** અને મધ और शहद, **सह** સાથે साथमें, **उपयुक्तम्** ઉપયોગમાં લેવામાં આવતાં उपयोगमें लिये जाने पर, **विरुद्धम्** વિરોધી છે विरोधी है, **वातम् च** તથા વાયુને तथा वायुको, **अतिकोपयति** અતિશય કુપિત કરે છે अति कुपित करता है;

84-(13). The pot-herb, safflower, sugar-wine, maireya, and honey, if taken together, become incompatible and provoke vata inordinately.

**हारिद्रकः सर्षपतैलभृष्टो विरुद्धः पित्तं चातिकोपयति ।**

**सर्षपतैल-** સરસીઆ તેલમાં सरसोंके तैलमें, **भृष्टः** તળેલ भूना हुआ, **हारिद्रकः** હારિદ્રક हारिद्रक, **विरुद्धः** વિરોધી છે विरोधी है, **पित्तम् च** તથા પિત્તને तथा पित्तको, **अतिकोपयति** અતિશય કુપિત કરે છે अति कुपित करता है;

84-(14). The flesh of parakeet bird, if fried in rape-seed oil, becomes incompatible and provokes pitta inordinately.

**पायसो मन्थानुपानो विरुद्धः श्लेष्माणं चातिकोपयति ।**

**मन्थानुपानः** મન્થના અનુપાનવાળો मन्थके अनुपानवाला, **पायसः** દૂધપાક पायस, **विरुद्धः** વિરોધી છે विरोधी है, **श्लेष्माणम् च** અને કફને और कफको, **अतिकोपयति** અતિ કુપિત કરે છે अति कुपित करता है;

84-(15). Milk-pudding is incompatible with a beverage of mantha and provokes kapha inordinately if so used.

**उपोदिका तिलकल्कसिद्धा हेतुरतीसारस्य ।**

**तिल-** તલના तिलके, **कल्क-** કલ્ક સાથે कल्कसे, **सिद्धा** સિદ્ધ કરેલ सिद्ध की, **उपोदिका** પોથી उपोदिका, **अतीसारस्य** અતિસારનું अतीसारका, **हेतुः** કારણ છે कारण है;

84-(16). Indian spinach prepared with til paste causes diarrhoea.

८४. वनक—वरक (ध.)

**बलाका वारुण्या सह कुल्माषैरपि विरुद्धा, सैव शूकरवसापरिभृष्टा सद्यो व्यापादयति ।**

बलाका બગલાનું માંસ बलाकाका मांस, वारुण्या વારુણી મદિરા वारुणी, कुल्माषैः તથા કુલ્માષની तथा कुल्माषके, सह अपि સાથે પણ साथ भी, विरुद्धा વિરોધી છે विरोधी है, शूकरवसा- સૂવરની વસામાં सूअरकी वसामें, परिभृष्टा તળેલું भूना हुआ, सा एव તે જ वही, सद्यः તરત જ शीघ्र, व्यापादयति પ્રાણ હરે છે प्राणनाशक है;

84-(17). Crane's flesh is incompatible with varuni wine or kulmasha pulse. If it is cooked in lard and eaten, it causes sudden death.

**मयूरमांसमेरण्डसीसकावसक्तमेरण्डाग्निप्लुष्टमेरण्डतैलयुक्तं सद्यो व्यापादयति ।**

एरण्डसीसकावसक्तम् એરંડાની લાકડીમાં પરોવી एरण्डकी लकड़ीमें पिरो कर, एरण्डाग्नि- એરંડાનાં લાકડાંના અગ્નિમાં एरण्डकी लकड़ीकी अग्निमें, प्लुष्टम् ભૂંજેલું भूना हुआ, एरण्डतैल- અને એરંડિયા તેલથી और एरण्डके तैलसे, युक्तम् યુકત युक्त, मयूरमांसम् મોરનું માંસ मोरका मांस, सद्यः તરત शीघ्र, व्यापादयति મરણ નિપજાવે છે मारता है;

84-(18). Peacock's flesh roasted on a spit made of the castor plant wood, or cooked over a fire of castor plant twigs, or prepared in castor oil, if eaten, will cause immediate death.

**हारिद्रकमांसं हारिद्रसीसकावसक्तं हारिद्राग्निप्लुष्टं सद्यो व्यापादयति;**

हारिद्रसीसक- હળદરવાની લાકડીમાં हल्दुकी लकड़ीमें, अवसक्तम् પરોવેલું पिरो कर, हारिद्राग्नि- હળદરવાના અગ્નિમાં हल्दुकी अग्निसे, प्लुष्टम् ભૂંજેલું भूना हुआ, हारिद्रक- હારિદ્રકનું हारिद्रकका, मांसम् માંસ मांस, सद्यः તરત शीघ्र, व्यापादयति મૃત્યુ કરે છે मारता है;

84-(19). The flesh of the parakeet bird, if eaten, having roasted it on a spit made of the turmeric plant wood or having cooked it over a fire of turmeric wood twigs, will cause immediate death.

**तदेव भस्मपांशुपरिध्वस्तं सक्षौद्रं सद्यो मरणाय ।**

भस्म- રાખ भस्म, पांशु- તથા ધૂળથી तथा पांसुसे, परिध्वस्तम् મલિન થયેલું मलिन हुआ, तत् एव તે જ वही, सद्यः તરત शीघ्र, मरणाय મૃત્યુ કરનાર થાય છે मृत्यु करनेवाला होता है;

84-(20). If the flesh of the parakeet, which is strewn with ashes and dust mixed with honey, is eaten, it causes immediate death.

**मत्स्यनिस्तालनसिद्धाः पिप्पल्यस्तथा काकमाची मधु च मरणाय ।**

मत्स्य- માછલાંની मछलीकी, निस्तालन- વસામાં वसामें, सिद्धाः સિદ્ધ કરેલ सिद्ध की हुई, पिप्पल्यः પીપર पिप्पली, तथा તથા और, काकमाची પીલુડી मकोय, मरणाय મરણ માટે થાય છે मरणके लिए होती हैं, मधु च તથા પીલુડી અને મધનું સાથે સેવન પણ મરણ માટે થાય છે एवं काकमाची और शहदका इकट्ठा सेवन भी मरणके लिए होता है;

84-(21). Long pepper, prepared in fish-oil, causes immediate death, and so does black-night shade in conjunction with honey.

**मधु चोष्णमुष्णार्तस्य च मधु मरणाय ।**

उष्णम् च ઊનું કરેલું गरम किया हुआ, मधु મધ मधु, मरणाय મરણ માટે થાય છે मरणके लिए होता है, उष्णार्तस्य અને ગરમીથી પીડાયેલાને और गरमीसे

८४. हारिद्रकमांसम्—हारीतकमांसम् (च.)

८४. निस्तालन—निस्तलन (च.)

पीडितका, मधु મધ મરણ માટે થાય છે मधु मृत्युके लिए होता है;

84-(22). The taking of honey which is heated, or of any honey by one who is afflicted with heat, results in death.

**मधुसर्पिषी समधृते, मधु वारि चान्तरिक्षं समधृतं, मधु पुष्करबीजं, मधु पीत्वोष्णोदकं, भल्लातकोष्णोदकं, तक्रसिद्धः कम्पिल्लकः, पर्युषिता काकमाची, अङ्गारशूल्यो भासश्चेति विरुद्धानि। इत्येतद्यथाप्रश्नमभिनिर्दिष्टं भवतीति ॥ ८४ ॥**

समघृते સમાન ભાગમાં લીધેલાં समान भागमें लिये गये, मधु- મધ मधु, सर्पिषी અને ઘી और घी, समधृतम् સમાન ભાગમાં લીધેલાં समान भागमें लिये गये, मधु મધ मधु, आन्तरिक्षम् અને અન્તરિક્ષનું और अन्तरिक्षका, वारि જળ जल, मधु મધ मधु, पुष्करबीजम् અને કમલબીજ એને પરસ્પર મેળવવાં और कमलबीज इनको परस्पर मिलाना, मधु મધ मधु, पीत्वा ચાટી चाट कर, उष्ण- ઉપર ગરમ ऊपरसे गरम, उदकम् પાણી પીવું पानी पीना, भल्लातक- ભિલામા भिलावा, उष्णोदकम् અને ગરમ પાણીનું એકઠું સેવન और गरम पानीका इकट्ठा सेवन, तक्रसिद्धः છાશમાં સિદ્ધ કરેલ छाछमें सिद्ध किया हुआ, कम्पिल्लकः કપીલો कमीला, पर्युषिता વાસી રાખેલી वासी रखी हुई, काकमाची પીલુડી मकोय, अङ्गारशूल्यः તથા અંગારા પર શૂળથી શેકેલ अङ्गारोंमें शूलसे भूना हुआ, भासः च इति ભાસ પક્ષીનું માંસ भास पक्षीका मांस, विरुद्धानि વિરુદ્ધ છે विरुद्ध हैं, इति एतत् આ પ્રમાણે આ इसी तरह यह, यथाप्रश्नम् પ્રશ્ન અનુસાર प्रश्नानुसार, अभिनिर्दिष्टम् કહી બતાવેલું कहा गया, भवति इति છે है ॥ ८४ ॥

84. Honey and ghee in equal quantity; honey and rain-water in equal quantity; honey and the seeds of the East Indian lotus; honey followed by a drink of hot water; the marking nut and hot water; kamala cooked in butter-milk; stale black-night shade, and the flesh of bearded vulture (Bhasa) roasted on a spit—all these are instances of dietetic incompatibility. Thus everythiug has been explained in accordance with the questions.

अहितस्याहारस्य लक्षणम् —

**भवन्ति चात्र श्लोकाः—**

**यत् किञ्चिद्दोषमास्राव्य न निर्हरति कायतः।**
**आहारजातं तत् सर्वमहितायोपपद्यते ॥ ८५ ॥**

अत्र च આ વિષયમાં इस विषयमें, श्लोकाः શ્લોકો श्लोक, भवन्ति છે કે हैं कि, यत् જે जो, किञ्चित् કોઈ कोई, आहारजातम् આહારનો સમૂહ आहारसमूह, दोषम् દોષનું दोषका, आस्राव्य સ્રાવણ કરી स्रावण करके, कायतः શરીરમાંથી शरीरमेंसे, न निर्हरति બહાર ન કાઢે बाहिर नहीं निकालता, तत् તે वह, सर्वम् સર્વ सब, अहिताय અહિત કરવા માટે अहित करनेके लिए, उपपद्यते થાય છે होता है ॥ ८५ ॥

Here are some verses again—

85. Whatever articles of food, having dislodged the morbid humors, do not eliminate them from the body, are to be regarded as unwholesome.

**यच्चापि देशकालाग्निमात्रासात्म्यानिलादिभिः।**
**संस्कारतो वीर्यतश्च कोष्ठावस्थाक्रमैरपि ॥ ८६ ॥**
**परिहारोपचाराभ्यां पाकात् संयोगतोऽपि च।**
**विरुद्धं तच्च न हितं हृत्संपद्विधिभिश्च यत् ॥ ८७ ॥**

अपि च વળી फिर भी, यत् જે जो, देश- દેશ देश, काल- કાળ काल, अग्नि- અગ્નિ अग्नि, मात्रा- માત્રા मात्रा, सात्म्य- સાત્મ્ય सात्म्य, अनिलादिभिः

८४. समधृते–तुल्ये (झ.)

८५. आस्राव्य–उत्क्लिश्य (त द. ध.)

८६. मात्रासात्म्या°–सात्म्यासात्म्या° (ख.)

८७. विरुद्धं तच्च–विरुद्धत्वाच्च (त.)

वायु वगेरे दोष वायु आदि दोष, संस्कारतः संस्कार संस्कार, वीर्यतः वीर्य वीर्य, कोष्ठ- कोष्ठ कोष्ठ, अवस्था- अवस्था अवस्था, क्रमैः अपि क्रम क्रम, परिहार- त्याग त्याग, उपचाराभ्याम् उपचार उपचार, पाकात् पाक पाक, संयोगतः च अपि संयोग संयोग, हृत्- हृदय हृदय, संपत्- संपत् (शुभगुण) संपत् (शुभगुण), विधिभिः च अने विधि एओथी और विधि इनसे, यत् जे जो, विरुध्धम् विरुध्ध छे विरुद्ध है, तत् च ते वह, हितम् न हितकारक नथी हितकारी नहीं होता ॥ ८६-८७ ॥

86-87 That substance is unwholesome which is incompatible from the point of view of country, season, gastric fire, measure, homologation, vata and other body humors, preparation, potency, bowel-tendency, state of the patient, rules of eating, things to be avoided or observed, cookery, combination, palatability, richness of quality, and rules of eating.

**विरुद्धं देशतस्तावद्रूक्षतीक्ष्णादि धन्वनि ।**
**आनूपे स्निग्धशीतादि भेषजं यन्निषेव्यते ॥८८॥**

धन्वनि मरुदेशमां मरुभूमिमें, रूक्षतीक्ष्णादि रूक्ष तीक्ष्ण वगेरे रूक्ष तीक्ष्ण आदि, आनूपे अने आनूप देशमां और आनूप देशमें, स्निग्ध- स्निग्ध स्निग्ध, शीतादि शीत वगेरे शीत आदि, भेषजम् औषधनुं औषधका, यत् जे जो, निषेव्यते सेवन करवामां आवे ते सेवन किया जाता है वह, देशतः तावत् देशथी देशसे, विरुद्धम् विरुद्ध छे विरुद्ध है ॥ ८८ ॥

88. The use of dry and acute drugs in an arid country and the use of unctuous and cold things in a wet country are examples of incompatibility of diet with reference to clime.

**कालतोऽपि विरुद्धं यच्छीतरूक्षादिसेवनम् ।**
**शीते काले, तथोष्णे च कटुकोष्णादिसेवनम् ॥८९॥**

शीते शीत शीत, काले काळमां कालमें, यत् जे जो, शीत- शीत शीत, रूक्ष- रूक्ष रूक्ष, आदि- वगेरेनुं आदिका सेवनम् सेवन सेवन, तथा अने और, उष्णे च उष्णकाळमां उष्णकालमें, कटुक- कटु कटु, उष्ण- उष्ण उष्ण, आदि- वगेरेनुं आदिका, सेवनम् सेवन ते सेवन वह, कालतः अपि काळथी कालसे, विरुद्धम् विरुद्ध छे विरुद्ध है ॥ ८९ ॥

89. The use of cold, dry and similar things in winter and the use of pungent, hot and similar things in summer are examples of incompatibility of diet with reference to season.

**विरुद्धमनले तद्वदन्नपानं चतुर्विधे ।**
**मधुसर्पिः समधृतं मात्रया तद्विरुध्यते ॥९०॥**

तद्वत् ते प्रमाणे उसी प्रकार, चतुर्विधे मृदु, मध्य, तीक्ष्ण तथा विषम ए चार प्रकारना चार प्रकारकी, अनले अग्निमां अग्निमें, विरुद्धम् तेनाथी विरुद्ध उससे विरुद्ध, अन्नपानम् जे अन्नपान ते अग्निथी विरुद्ध छे जो अन्नपान वह अग्निसे विरुद्ध है, समधृतम् सम प्रमाणमां लीधेलुं समान मात्रामें लिया हुआ, मधुसर्पिः जे मध अने घी जो मधु और घृत, तत् ते वह, मात्रया मात्राथी मात्रासे, विरुध्यते विरुद्ध छे विरुद्ध है ॥ ९० ॥

90. Food not taken in accordance with the given type of any of the four types of the gastric fire constitutes the incompatibility of diet with reference to the gastric fire The combination of ghee and honey in equal quantities is an example of the incompatibility of diet with reference to measure.

**कटुकोष्णादिसात्म्यस्य स्वादुशीतादिसेवनम् ।**
**यत्तत् सात्म्यविरुद्धं तु विरुद्धं त्वनिलादिभिः ॥९१॥**
**या समानगुणाभ्यासविरुद्धान्नौषधक्रिया ।**

८८. निषेव्यते–निषेवते (थ.)

९०. मात्रया तत्–मात्रयाऽपि (थ.)

९१. °सात्म्यस्य–सात्म्याय° (त.)

कटुक- કટુ कटु, उष्ण- ઉષ્ણ उष्ण, आदि- વગેરે आदि, सात्म्यस्य જેને સાત્મ્ય હોય તેને जिसे सात्म्य हो उसे, यत् જે जो, स्वादु- મધુર स्वादु, शीत- શીત शीत, आदि- વગેરેનું आदिका, सेवनम् સેવન सेवन, तत् તે वह, तु તો तो, सात्म्यविरुद्धम् સાત્મ્યવિરુદ્ધ છે सात्म्यविरुद्ध है, समानगुणा દોષના સમાન ગુણવાળી दोषके समान गुणवाली, अभ्यासविरुद्धा અને અભ્યાસથી વિરુધ્ધ और अभ्याससे विरुद्ध, या જે जो, अन्न- અન્ન अन्न, औषध- ઔષધ औषध, क्रिया तु તથા ક્રિયાનું નિરંતર સેવન તે તો तथा क्रियाका निरन्तर सेवन वह तो, अनिलादिभिः વાયુ વગેરેથી वात आदिसे, विरुद्धम् વિરુદ્ધ છે विरुद्ध है ॥ ९१½ ॥

91-91½. The taking of sweet and cold things by a person to whom only pungent and hot substances are homologous is an example of incompatibility of diet with reference to homologation. The use of articles of diet, drugs and procedures which are similar in quality to that of the susceptible body-humors constitutes humoral incompatibility.

**संस्कारतो विरुद्धं तद्यद्भोज्यं विषवद्भवेत् ॥९२॥**
**एरण्डसीसकासक्तं शिखिमांसं यथैव हि ।**

यथा एव જેમ जैसे, एरण्ड-सीसक- એરંડાની લાકડીમાં एरण्डकी लकड़ीमें, आसक्तम् પરોવી શેકેલું पिरो कर भूना हुआ, शिखिमांसम् हि મોરનું માંસ વિષ જેવું થઈ જાય છે તેમ मोरका मांस विषके समान हो जाता है वैसे, यत् જે जो, भोज्यम् ભોજ્ય પદાર્થ સંસ્કારથી भोज्य पदार्थ संस्कारसे, विषवत् વિષ જેવું विषके समान, भवेत् થઈ જાય हो जाये, तत् તે वह, संस्कारतः સંસ્કારથી संस्कारसे, विरुद्धम् વિરુદ્ધ છે विरुद्ध है ॥९२½॥

92-92½. The incompatibility of preparation is that where food is converted into poison during the course of preparation, as, for example, in the case of the peacock's flesh roasted on a spit made of a stick of the castor plant.

**विरुद्धं वीर्यतो ज्ञेयं वीर्यतः शीतलात्मकम् ॥९३॥**
**तत् संयोज्योष्णवीर्येण द्रव्येण सह सेव्यते ।**

वीर्यतः વીર્યથી वीर्यसे, शीतलात्मकम् શીતલ દ્રવ્યને शीत द्रव्यको, उष्णवीर्येण ઉષ્ણ વીર્યવાળા उष्णवीर्य, द्रव्येण सह દ્રવ્ય સાથે द्रव्यके साथ, संयोज्य યોજીને मिला कर, सेव्यते સેવવામાં આવે सेवन किया जाये, तत् તેને उसे, वीर्यतः વીર્યથી वीर्यसे, विरुद्धम् વિરુધ્ધ विरुद्ध, ज्ञेयम् જાણવું जानना चाहिए ॥९३½॥

93-93½. The use of substances of cold potency in combination with substances of hot potency is to be known as incompatibility of potency.

**क्रूरकोष्ठस्य चात्यल्पं मन्दवीर्यमभेदनम् ॥ ९४ ॥**
**मृदुकोष्ठस्य गुरु च भेदनीयं तथा बहु ।**
**एतत् कोष्ठविरुद्धं तु,**

क्रूरकोष्ठस्य ક્રૂર કોઠાવાળા પુરુષને क्रूरकोष्ठ पुरुषको, अत्यल्पम् અતિ અલ્પ बहुत थोड़ा, मन्दवीर्यम् મન્દ વીર્યવાળું मन्दवीर्य, अभेदनम् च તથા ભેદન ન કરે એવું અન્ન દેવું तथा भेदन न करनेवाला अन्न देना, तथा मृदुकोष्ठस्य અને મૃદુ કોઠાવાળા પુરુષને और मृदुकोष्ठ पुरुषको, गुरु ભારે गुरु, भेदनीयम् ભેદન કરનારું भेदन करनेवाला, बहु च તથા બહુ માત્રામાં અન્ન દેવું तथा बहुत मात्रामें अन्न देना, एतत् तु આ તો यह तो, कोष्ठविरुद्धम् કોઠવિરુદ્ધ છે कोष्ठविरुद्ध है ॥ ९४¾ ॥

94-94¾. That is known as incompatibility of bowel-tendency where a hard bowelled person is administered a drug, small in dose, weak in potency, and poor in laxative quality; or where a soft-bowelled person is given a drug heavy, cathartic and in large dose.

९२. भवेत्–त्यजेत् (त.)

९४¾. मृदु°–मन्द° (ग.)

**विरुद्धं स्यादवस्थया ॥ ९५ ॥**
**श्रमव्यवायव्यायामसक्तस्यानिलकोपनम् ।**
**निद्रालसस्यालसस्य भोजनं श्लेष्मकोपनम् ॥९६॥**

**श्रम-** શ્રમ श्रम, **व्यवाय-** મૈથુન मैथुन, **व्यायाम-** તથા વ્યાયામમાં तथा व्यायाममें, **सक्तस्य** આસક્ત પુરુષને **आसक्त** पुरुषको, **अनिलकोपनम्** વાયુકોપક वात-प्रकोपक, **निद्रालसस्य** તેમ જ અધિક નિદ્રા કરનારા अधिक निद्रा करनेवाले, **अलसस्य** આળસુ પુરુષને आलसी पुरुषको, **श्लेष्मकोपनम्** કફપ્રકોપક कफप्रकोपक, **भोजनम्** ભોજન આપવું એ भोजन देना यह, **अवस्थया** અવસ્થાથી अवस्थासे, **विरुद्धम्** વિરુદ્ધ विरुद्ध, **स्यात्** છે है ॥ ९५-९६ ॥

95-96. That is incompatibility with reference to the state of the patient, where a vata-provoking meal is given to one who is exhausted on account of fatigue, sexual act or physical strain. Similarly, if a kapha-provoking meal is given to one subject to the lethargy of sleep or indolence, it also constitutes this incompatibility.

**यश्चानुत्सृज्य विण्मूत्रं भुङ्क्ते यश्चाबुभुक्षितः ।**
**तच्च क्रमविरुद्धं स्याद्यच्चातिक्षुद्वशानुगः ॥ ९७ ॥**

**यत् च** જે जो, **विण्मूत्रम्** મળ અને મૂત્રનો मल और मूत्रका, **अनुत्सृज्य** ત્યાગ કર્યા વગર त्याग किये बिना, **यः च** તથા જે तथा जो, **अबुभुक्षितः** ભૂખ લાગ્યા વગર बिना भूख लगे, **भुङ्क्ते** ખાય છે खाता है, **यत् च** અને જે और जो, **अतिक्षुद्वशानुगः** અતિ ભૂખને વશ થયા છતાં પણ ખાતો નથી अति भूखके वश होने पर भी नहीं खाना, **तत् च** તે वह, **क्रमविरुद्धम्** ક્રમથી વિરુદ્ધ क्रमसे विरुद्ध, **स्यात्** છે है ॥ ९७ ॥

97. That is incompatibility of rules of eating when a person takes his meal without relieving himself of feces and urine or eats without the feeling of hunger or does not eat in spite of severe hunger.

**परिहारविरुद्धं तु वराहादीन्निषेव्य यत् ।**
**सेवेतोष्णं घृतादींश्च पीत्वा शीतं निषेवते ॥९८॥**

**यत्** જે जो, **तु** વળી फिर, **वराहादीन्** વરાહ વગેરેના માંસનું वराह आदिके मांसका, **निषेव्य** સેવન કરી सेवन करके, **उष्णम्** ઉષ્ણ પદાર્થનું उष्ण पदार्थोंका, **सेवेत** સેવન કરે છે તે सेवन करना है वह, **परिहार-विरुद्धम्** પરિહારથી વિરુદ્ધ છે परिहारसे विरुद्ध है, **घृतादीन् च** અને ઘી વગેરેને और घी आदिको, **पीत्वा** પીને पी कर, **शीतम्** શીતળ પદાર્થનું शीत पदार्थोंका, **निषेवते** સેવન કરે છે તે ઉપચારથી વિરુદ્ધ છે सेवन करना वह उपचारसे विरुद्ध है ॥ ९८ ॥

98. That is incompatibility of the rules of prohibition and injunction where a person takes hot substances after a meal of the flesh of a boar and similar animals, or eats cooling things after taking ghee and similar articles.

**विरुद्धं पाकतश्चापि दुष्टदुर्दारुसाधितम् ।**
**अपक्वतण्डुलात्यर्थपक्वदग्धं च यद्भवेत् ।**

**यत् च** જે जो, **दुष्ट-** દૂષિત दूषित, **दुर्दारु-** અને ખરાબ લાકડાંથી और खराब लकड़ीसे, **साधितम्** સિદ્ધ કરેલું सिद्ध किया हुआ, **अपक्व-** અપક્વ कच्चा, **तण्डुल-** ચોખા વગેરે અન્ન चावल आदि अन्न, **अत्यर्थपक्व-** અતિશય પાકેલું ચોખા વગેરે અન્ન अतिपक्व चावल आदि अन्न, **दग्धम् च** તથા દાઝી ગયેલ ચોખા વગેરે અન્ન तथा जला हुआ चावल आदि अन्न, **भवेत्** હોય होता है, **तत्**

---

९८. एतच्छ्लोकानन्तरम्–
पयो निषेवते यच्च वमनादि निषेव्य वा ।
रसायनविधौ वापि कुरुते नानुपालनम् ।
उपचारविरुद्धान्नमद्यादीन्युपयुज्य वा ॥
इत्यधिकः पाठः (ग.) पुस्तके

अपि ते પણ वह भी, पाकतः પાકથી पाकसे, विरुद्धम् વિરુદ્ધ છે विरुद्ध है;

99-(1). That is culinary incompatibility where food is prepared with bad and rotten fuel, or is undercooked or overcooked or burnt.

**संयोगतो विरुद्धं तद्यथाऽम्लं पयसा सह ॥९९॥**
**अमनोरुचितं यच्च हृद्विरुद्धं तदुच्यते ।**

यथा જે जो, अम्लम् ખટાઈને खटाईको, पयसा सह દૂધની સાથે મેળવવી दूधके साथ मिला देना, तत् તે वह, संयोगतः સંયોગથી संयोगसे, विरुद्धम् વિરુદ્ધ છે विरुद्ध है, यत् च અને જે और जो, अमनोरुचितम् મનને અરુચતા દ્રવ્યનું સેવન मनके लिये अरुचिकारक द्रव्यका सेवन, तत् તે वह, हृद्विरुद्धम् હૃદયથી વિરુદ્ધ हृदयसे विरुद्ध, उच्यते કહેવાય છે कहा जाता है ॥९९½॥

99-99½. That is incompatibility of combination where sour things are taken with milk. That is incombility of palatability where an article of food is unpleasant of taste.

**संपद्विरुद्धं तद्विद्यादसंजातरसं तु यत् ॥ १०० ॥**
**अतिक्रान्तरसं वाऽपि विपन्नरसमेव वा ।**

यत् तु જે जो, असंजातरसम् રસની ઉત્પત્તિથી રહિત હોય रसकी उत्पत्तिसे रहित हो, अतिक्रान्तरसम् वा अपि અથવા જેનો રસ ઉત્પન્ન થઈ નષ્ટ થઈ ગયો હોય अथवा जिसका रस उत्पन्न हो कर नष्ट हो गया हो, विपन्नरसम् एव वा અથવા જેનો રસ બગડી ગયો હોય अथवा जिसका रस बिगड़ गया हो, तत् તેને उसे, सम्पद्विरुद्धम् સંપદથી વિરુદ્ધ सम्पतसे विरुद्ध, विद्यात् જાણવું जानना चाहिए ॥ १००½ ॥

100-100½. That is incompatibility with reference to richness of quality where the juice is taken of unripe, over-ripe or putrified substances.

**ज्ञेयं विधिविरुद्धं तु भुज्यते निभृते न यत् ।**
**तदेवंविधमन्नं स्याद्विरुद्धमुपयोजितम् ॥ १०१ ॥**

यत् तु જે जो, निभृते એકાંતમાં एकान्तमें, न भुज्यते ખાવામાં આવતું નથી भोजन नहीं किया जाता, तत् તેને उसे, विधिविरुद्धम् વિધિથી વિરુદ્ધ विधिसे विरुद्ध, ज्ञेयम् જાણવું जानना चाहिए, एवंविधम् આવી જાતનું इस प्रकारका, उपयोजितम् ઉપયોગમાં લેવામાં આવેલું उपयोग किया हुआ, तत् તે वह, अन्नम् અન્ન अन्न, विरुद्धम् અહિતકર अहितकर, स्यात् થાય છે होता है ॥ १०१ ॥

101. That is incompatibility of the rules of eating where food is not taken in a solitary place. Food taken in any of the above-mentioned ways constitutes dietetic incompatibility.

विरुद्धाहारनिमित्तानां व्याधीनां निर्देशः—

**षाण्ढ्यान्ध्यवीसर्पदकोदराणां**
**विस्फोटकोन्मादभगन्दराणाम् ।**
**मूर्च्छामदाध्मानगलग्रहाणां**
**पाण्ड्वामयस्यामविषस्य चैव ॥ १०२ ॥**
**किलासकुष्ठग्रहणीगदानां**
**शोथाम्लपित्तज्वरपीनसानाम् ।**
**सन्तानदोषस्य तथैव मृत्यो-**
**र्विरुद्धमन्नं प्रवदन्ति हेतुम् ॥ १०३ ॥**

विरुद्धम् વિરુદ્ધ विरुद्ध, अन्नम् અન્નને अन्नको, षाण्ढ्य- નપુંસકતા नपुंसकता, आन्ध्य- અંધાપો अन्धत्व, वीसर्प- વીસર્પ वीसर्प, दकोदराणाम् જળોદર जलोदर, विस्फोटक- વિસ્ફોટક विस्फोटक, उन्माद- ઉન્માદ उन्माद, भगन्दराणाम् ભગન્દર भगन्दर, मूर्च्छा- મૂર્છા मूर्च्छा, मद- મદ मद, आध्मान- આધ્માન आध्मान, गलग्रहाणाम् ગલગ્રહ गलग्रह, पाण्ड्वामयस्य પાંડુરોગ पाण्डुरोग, आमविषयस्य च एव આમવિષ आमविष, किलास- કિલાસ किलास, कुष्ठ- કુષ્ઠ कुष्ठ, ग्रहणीगदानाम् ગ્રહણીરોગ

९९½. अमनोरुचितम्—अन्नं नो रुचितम् ( ग. थ. )

१०२. गलग्रहाणाम—गलामयानाम ( स. क. ज. )

१०३. शोथ—शोष ( द. ब. )

,, शोथाम्ल°—शोषास्र° ( ग झ. )

ग्रहणीरोग, शोथ- શોથ શોથ, अम्लपित्त- અમ્લપિત્ત अम्लपित्त, ज्वर- જ્વર ज्वर, पीनसानाम् પીનસ पीनस, सन्तानदोषस्य સન્તાનદોષ सन्तानदोष, तथा एव અને और, मृत्योः મૃત્યુનું मृत्युका, हेतुम् કારણ कारण, प्रवदन्ति કહે છે कहते हैं ॥ १०२-१०३ ॥

102-103. Impotency, blindness, acute spreading affections, abdominal affections, eruptions, insanity, fistula, fainting, intoxication, tympanitis, trismus, anemia, chyme, toxemia, leprosy, dermatosis, assimilation disorders, edema, acid dyspepsia, fever, rhinitis, fetal diseases and death—these are said to result from the incompatibility of diet.

विरुद्धाशनजानां व्याधीनां प्रतिकारः—

**एषां खल्वपरेषां च वैरोधिकनिमित्तानां व्याधीनामिमे भावाः प्रतिकारा भवन्ति ।**

वैरोधिक-निमित्तानाम् વિરુદ્ધ ભોજનથી ઉત્પન્ન થયેલા विरोधी भोजनसे उत्पन्न हुए, एषाम् આ इन, अपरेषाम् च खलु અને બીજા और अन्य, व्याधीनाम् રોગોના रोगोंके, इमे આ ये, भावाः ભાવો भाव, प्रतिकाराः પ્રતિકાર प्रतिकार, भवन्ति થાય છે होते हैं;

104-(1). The following are the counter-measures for these and other diseases caused by an incompatible dietary.

**तद्यथा—वमनं विरेचनं च, तद्विरोधिनां च द्रव्याणां संशमनार्थमुपयोगः, तथाविधैश्च द्रव्यैः पूर्वमभिसंस्कारः शरीरस्येति ॥ १०४ ॥**

तत् यथा જેમકે जैसे कि, वमनम् સંશોધનને માટે વમન संशोधनके लिए वमन, विरेचनम् च तथा વિરેચન तथा विरेचन, संशमनार्थम् સંશમનને માટે संशमनके लिए, तद्विरोधिनाम् નપુંસકતા વગેરેને હરનારાં नपुंसकता आदिको हरनेवाले, द्रव्याणाम् च દ્રવ્યોને। द्रव्योंका, उपयोगः ઉપયોગ उपयोग, तथाविधैः અને તેવી જાતનાં उसी प्रकारके, द्रव्यैः च દ્રવ્યોથી द्रव्योंसे, शरीरस्य શરીરને शरीरको, पूर्वम् પહેલેથી જ प्रथमसे ही, अभिसंस्कारः इति દૃઢ બનાવવું दृढ़ बनाना ॥ १०४ ॥

104. They are—vomition, purgation, the administration of sedatives that counteract the diseases mentioned, as also the prophylactic measures due to dietetic incompatibility.

भवतश्चात्र—

**विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् ।**
**वमनं शमनं चैव पूर्वं वा हितसेवनम् ॥१०५॥**

अत्र च भवतः આ વિષયમાં બે શ્લોક છે કે इस विषयमें दो श्लोक हैं कि, विरेचनम् વિરેચન विरेचन, वमनम् વમન वमन, शमनम् च एव સંશમન संशमन, पूर्वम् वा तथा પહેલેથી तथा प्रथमसे ही, हितसेवनम् હિતકર આહારવિહારનું સેવન हितकारी आहारविहारका सेवन, विरुद्ध- વિરુદ્ધ विरुद्ध, अशनजान् ભોજનથી ઉત્પન્ન થયેલા भोजनसे उत्पन्न हुए, रोगान् રોગોને रोगोंको, प्रतिहन्ति હણે છે नष्ट करते हैं ॥ १०५ ॥

Here are two verses again—

105. Purgation, vomition, sedation and prophylactic measures counteract the disorders born of the incompatibility of diet.

कदाचिद्विरुद्धस्य वितथत्वे कारणम्—

**सात्म्यतोऽल्पतया वाऽपि दीप्ताग्नेस्तरुणस्य च ।**
**स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥१०६॥**

सात्म्यतः સાત્મ્ય હોવાથી सात्म्य होनेसे, अल्पतया અલ્પ માત્રામાં હોવાથી अल्प मात्रामें होनेसे, अपि वा

१०४. व्याधीनाम्–द्रव्याणाम् (प.)
,, अपरेषाम्–परेषाम् (त.)
,, प्रतिकाराः–प्रतीघातकराः (ध.)

१०६. स्निग्धव्यायामबलिनाम्–स्नेहव्यायामबलिनो (त.)

अथवा अथवा, दीप्ताग्नेः પ્રદીપ્ત અગ્નિવાળાને प्रदीप्त अग्निवालोंमें, तरुणस्य च યુવાનને युवानमें, स्निग्ध- અને સ્નિગ્ધ और स्निग्ध पुरुषमें, व्यायाम- વ્યાયામ કરનારને व्यायाम करनेवाले, बलिनाम् તથા બળવાન મનુષ્યને तथा बलवान मनुष्यमें, विरुद्धम् વિરુદ્ધ અન્નપાન विरुद्ध अन्नपान, वितथम् નિષ્ફળ व्यर्थ, भवेत् થાય છે होता है ॥ १०६ ॥

106. Dietetic incompatibility becomes neutralised under the following circumstances: if the incompatibility is homologous to the person concerned, if it is slight, if the person concerned is of strong digestive power, if he is young, or if he has an abundance of the unctuous element in his body, and if he is strong from exercise.

अध्यायार्थसंग्रहः—

तत्र श्लोकाः—

**मतिरासीन्महर्षीणां या या रसविनिश्चये ।**
**द्रव्याणि गुणकर्मभ्यां द्रव्यसंख्या रसाश्रया ॥१०७॥**

तत्र તે વિષયમાં उस विषयमें, श्लोकाः ઉપસંહારના શ્લોકો છે કે उपसंहारके श्लोक हैं कि, रस- રસના रसके, विनिश्चये નિશ્ચયમાં निश्चयमें, महर्षीणाम् મહર્ષિઓની महर्षियोंके, या જે जो, या જે जो, मतिः માન્યતા मत, आसीत् હતી थे, गुणकर्मभ्याम् ગુણ અને કર્મ સાથે गुण और कर्मके साथ, द्रव्याणि દ્રવ્યો द्रव्य, रस-आश्रया રસને આશ્રયે રહેલી रसाश्रित, द्रव्य- દ્રવ્યની द्रव्योंकी, संख्या સંખ્યા संख्या ॥ १०७ ॥

Here are the recapitulatory verses—

107. Whatever were the views of the great sages in the determination of tastes, substances with their attributes and actions, the numerality of substances and tastes;

**कारणं रससंख्याया रसानुरसलक्षणम् ।**
**परादीनां गुणानां च लक्षणानि पृथक्पृथक् ॥१०८॥**

रस- રસની रसकी, संख्यायाः સંખ્યાનું संख्याका, कारणम् કારણ कारण, रस- રસ रस, अनुरस- તથા અનુરસનું तथा अनुरसका, लक्षणम् લક્ષણ लक्षण, पर-आदीनाम् પર વગેરે पर आदि, गुणानाम् च ગુણોનાં गुणोंके, पृथक् पृथक् જુદાં જુદાં पृथक् पृथक्, लक्षणानि લક્ષણ लक्षण ॥ १०८ ॥

108. The reason behind the enumeration, tastes, latent or after-tastes, the characteristics of each of the ten qualities beginning with priority etc;

**पञ्चात्मकानां षट्त्वं च रसानां येन हेतुना ।**
**ऊर्ध्वानुलोमभाजश्च यद्गुणातिशयाद्रसाः ॥१०९॥**

पञ्चात्मकानाम् પંચમહાભૂતથી ઉત્પન્ન થયેલા पञ्चमहाभूतोंसे उत्पन्न, रसानाम् च રસોનું रसोंका, येन જે जिस, हेतुना કારણથી कारणसे, षट्त्वम् છપણું छः होना, यद्गुण-अतिशयात् જે ગુણની અધિકતાથી जिन गुणोंकी अधिकतासे, रसाः च રસો रस, ऊर्ध्व-अनुलोमभाजः ઊર્ધ્વગામી અને અધોગામી થાય છે ऊर्ध्वगामी और अधोगामी होते हैं ॥ १०९ ॥

109. How the tastes of the five proto-elements become divided into six categories, and the preponderance of this or that quality by which they develop the tendency of going upwards or downwards;

**षण्णां रसानां षट्त्वे च सविभक्ता विभक्तयः ।**
**उद्देशश्चापवादश्च द्रव्याणां गुणकर्मणि ॥ ११० ॥**

षण्णाम् છ छः, रसानाम् રસોના रसोंका, षट्त्वे च છપણામાં छःपनमें, सविभक्ताः વિભાગો સહિત विभागोंके साथ, विभक्तयः ભેદ भेद, द्रव्याणाम् દ્રવ્યોનાં द्रव्योंके, गुण- ગુણ गुण, कर्मणि તથા કર્મમાં तथा कर्ममें,

११०. सविभक्ता–सातिभुक्ता (च, छ, थ.)

उद्देशः च ઉદ્દેશ उद्देश, अपवादः च તથા અપવાદ अपवाद ॥ ११० ॥

110. The various combinations and permutations of the tastes that are six in number, the recognition of attributes and actions through tastes and of the exceptions laid down to the rule;

**प्रवरावरमध्यत्वं रसानां गौरवादिषु ।**
**पाकप्रभावयोर्लिङ्गं वीर्यसंख्याविनिश्चयः ॥१११॥**

**गौरव–आदिषु** ગૌરવ વગેરેમાં गौरव आदिमें, **रसानाम्** રસોની रसोंकी, **प्रवर–अवर–मध्यत्वम्** અધિકતા, હીનતા તથા મધ્યમતા श्रेष्ठता, न्यूनता तथा मध्यता, **पाक-** વિપાક विपाक, **प्रभावयोः** તથા પ્રભાવનું तथा प्रभावका, **लिङ्गम्** લક્ષણ लक्षण, **वीर्यसंख्या-** વીર્યની સંખ્યાનો वीर्यकी संख्याका, **विनिश्चयः** નિશ્ચય निश्चय ॥१११॥

111. The maximum, moderate and minimum degrees of particular qualities like heaviness etc, in each taste; post-digestive effects or specific actions; determination of the actions of potency;

**षण्णामास्वाद्यमानानां रसानां यत् स्वलक्षणम् ।**
**यद्यद्विरुध्यते यस्माद्येन यत्कारि चैव यत् ॥११२॥**

**आस्वाद्यमानानाम्** ચાખવામાં આવતા आस्वाद लिये जाते, **षण्णाम्** ૭ छः, **रसानाम्** રસોનાં रसोंके, **यत्** જે जो, **स्वलक्षणम्** પોતપોતાનાં લક્ષણ अपने अपने लक्षण, **यत् यत्** જે જે દ્રવ્ય जो जो द्रव्य, **येन** જે જે કારણથી जिस जिस कारणसे, **यस्मात्** જેથી જેથી जिस जिससे, **विरुध्यते** વિરુદ્ધ થાય છે विरोधी होता है, **यत् च एव** અને જે વિરોધી દ્રવ્ય और जो विरोधी द्रव्य, **यत्-कारि** જે જે કોઈ રોગને કરે છે जो जो रोग करता है ॥ ११२ ॥

112. The specific characteristics of the six tastes on coming in contact with the organ of taste; What liquids are incompatible with what liquids and for what causes and what diseases are produced by what incompatible substances;

**वैरोधिकनिमित्तानां व्याधीनामौषधं च यत् ।**
**आत्रेयभद्रकाप्यीये तत् सर्वमवदन्मुनिः ॥११३॥**

**वैरोधिक-निमित्तानाम्** વિરોધી દ્રવ્યથી ઉત્પન્ન થનારા विरोधी द्रव्योंसे उत्पन्न होनेवाले, **व्याधीनाम् च** વ્યાધિઓનું रोगोंकी, **यत्** જે जो, **औषधम्** ઔષધ છે औषध हैं, **तत्** તે उस, **सर्वम्** સઘળું सबको, **मुनिः** આત્રેય મુનિએ आत्रेय मुनिने, **आत्रेय-भद्रकाप्यीये** આત્રેયભદ્રકાપ્યીય અધ્યાયમાં आत्रेयभद्रकाप्यीय अध्यायमें, **अवदत्** કહી દીધું છે कह दिया है ॥११३॥

113. And the diseases caused by such incompatibilities and their remedial measures— all these has the sage declared in the chapter entitled 'The discussion between Atreya and Bhadrakapya and others".

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने आत्रेयभद्रकाप्यीयो नाम षड्विंशोऽध्यायः ॥ २६ ॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, **श्लोकस्थाने** સૂત્રસ્થાન વિષે सूत्रस्थानमें, **आत्रेयभद्रकाप्यीयः** 'આત્રેયભદ્રકાપ્યીય' 'आत्रेयभद्रकाप्यीय', **नाम** નામનો नामका, **षड्विंशः** છવ્વીસમો छब्बीसवाँ, **अध्यायः** અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ २६ ॥

26. Thus in the section on General Principles in the treatise compiled by Agnivesa and revised by Caraka, the twenty-sixth chapter entitled "The discussion between Atreya and Bhadrakapya and others" is completed.

## सप्तविंशोऽध्यायः ।

## સત્તાવીસમો અધ્યાય अध्याय सताईसवाँ

## Chapter XXVII

अन्नपानविध्यध्यायोपक्रमः —

**अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ॥१॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**अथ अतः** હવે અહીંથી अब आगे, '**अन्नपानविधिम्**' '**અન્નપાનવિધિ**' નામના 'अन्नपानविधि' नामके, **अध्यायम्** અધ્યાયનું अध्यायका, **व्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

**भगवान्** ભગવાન भगवान, **आत्रेयः** આત્રેય आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, **आह स्म** કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "Diet and Dietetics".

2. Thus declared the worshipful Atreya.

विधिविहितस्यान्नपानस्य प्राणिनां प्राणत्वम् —

**इष्टवर्णगन्धरसस्पर्शं विधिविहितमन्नपानं प्राणिनां प्राणिसंज्ञकानां प्राणमाचक्षते कुशलाः, प्रत्यक्षफलदर्शनात्;**

**इष्ट-** મનગમતા प्रिय, **वर्ण-** વર્ણ वर्ण, **गन्ध-** ગન્ધ गन्ध, **रस-** રસ रस, **स्पर्शम्** અને સ્પર્શવાળા एवं स्पर्शवाले, **विधिविहितम्** વિધિ પ્રમાણે બનાવેલા विधिपूर्वक किये, **अन्नपानम्** અન્નપાનને खानपानको, **कुशलाः** કુશળ મનુષ્યો विद्वान लोग, **प्रत्यक्षफल-** પ્રત્યક્ષ ફળના प्रत्यक्ष फलके, **दर्शनात्** દર્શનથી दर्शनसे, **प्राणिसंज्ञकानाम्** પ્રાણી કહેવાતાં અર્થાત્ જંગમ प्राणि नामक अर्थात् जंगम, **प्राणिनाम्** પ્રાણીઓનાં प्राणियोंके, **प्राणम्** પ્રાણ प्राण, **आचक्षते** કહે છે कहते हैं;

3-(1). The experts hold that the articles of food and drink which are of pleasing color, smell, taste and touch, taken systematically, constitute 'the life' of living beings known also as creatures. This view is the result of practical observation.

**तदिन्धना ह्यन्तरग्नेः स्थितिः; तत् सत्त्वमूर्जयति, तच्छरीरधातुव्यूहबलवर्णेन्द्रियप्रसादकरं यथोक्तमुपसेव्यमानं, विपरीतमहिताय संपद्यते ॥३॥**

**हि** કારણ કે क्योंकि, **अन्तरग्नेः** અંદરના અગ્નિની अन्तरग्निकी, **स्थितिः** સ્થિતિ स्थिति, **तदिन्धना** તે બળતણને આધીન છે इस इन्धनके अधीन है, **तत् सत्त्वम्** તે મનને यह सत्त्वको, **ऊर्जयति** પ્રબળ કરે છે उत्तेजित करता है, **यथोक्तम्** કહ્યા પ્રમાણેના વિધિથી सम्यक् प्रकारसे, **उपसेव्यमानम्** સેવન કરાતું सेवन किया हुआ, **तत्** તે वह, **शरीरधातुव्यूह-** શરીરના ધાતુઓના સંઘાત शरीरके सम्पूर्ण धातुओंके समूह, **बल-** બલ बल, **वर्ण-** વર્ણ वर्ण, **इन्द्रिय-** અને ઇન્દ્રિયોની और इन्द्रियोंकी, **प्रसादकरम्** પ્રસન્નતા કરનાર છે निर्मलताको करता है, **विपरीतम्** તથા વિધિથી વિપરીત સેવન કરાતું તે तथा विधिसे विपरीत सेवन किया हुआ वह, **अहिताय** અહિત કરનાર अहितकर, **संपद्यते** બને છે होता है ॥३॥

3. That is the fuel for the maintenance of the gastric fire. It invigorates the mind. If used as directed, it promotes the proper distribution of body-elements, vitality, complexion and the acuity of the sense-organs. The contrary conduct would lead to unwholesome results.

तत्रोदकादीनां केषांचिद्द्रव्याणां स्वाभाविकगुणकीर्तनम्—

**तस्माद्धिताहितावबोधनार्थमन्नपानविधिमखिलेनोपदेक्ष्यामोऽग्निवेश ! ।**

**तस्मात्** તેથી इस लिए, **अग्निवेश !** હે અગ્નિવેશ ! हे अग्निवेश ! **हिताहित-** હિતકર અને અહિતકર हित और अहितको, **अवबोधनार्थम्** જણાવવા માટે बतानेके लिए,

१. विपरीतम्—विधिविपरीतम् (ह.)

**अन्नपानविधिम्** અન્નપાનની વિધિને अन्नपानविधिको, **अखिलेन** સંપૂર્ણપણે सम्पूर्णरूपमें, **उपदेक्ष्यामः** ઉપદેશ કરશું उपदेश करेंगे;

4-(1). O Agnivesa, we shall, therefore, describe in full the science of diet and dietetics for the sake of the knowledge of the wholesome and the unwholesome.

**तत् स्वभावादुदकं क्लेदयति, लवणं विष्यन्दयति, क्षारः पाचयति, मधु संदधाति, सर्पिः स्नेहयति, क्षीरं जीवयति, मांसं बृंहयति, रसः प्रीणयति, सुरा जर्जरीकरोति, शीधुरवधमति, द्राक्षासवो दीपयति, फाणितमाचिनोति, दधि शोफं जनयति, पिण्याकशाकं ग्लपयति,**

**तत्** જેમકે जैसेकि, **उदकम्** જલ जल, **स्वभावात्** સ્વભાવથી स्वभावसे ही, **क्लेदयति** ક્લેદ કરે છે क्लिन्नताको उत्पन्न करता है, **लवणम्** લવણ लवण, **विष्यन्दयति** વિષ્યન્દ કરે છે विष्यन्दकारक है, **क्षारः** ક્ષાર क्षार, **पाचयति** પાચન કરે છે पचानेवाला है, **मधु** મધ मधु, **संदधाति** સંધાન કરે છે संधानकारक है, **सर्पिः** ઘી घृत, **स्नेहयति** સ્નેહન કરે છે स्नेहनकारक है, **क्षीरम्** દૂધ दूध, **जीवयति** જીવન દે છે जीवनदायक है, **मांसम्** માંસ मांस, **बृंहयति** બૃંહણ કરે છે बृंहणकारक है, **रसः** માંસરસ मांसरस, **प्रीणयति** પ્રીણન કરે છે पुष्टि देता है, **सुरा** સુરા सुरा, **जर्जरीकरोति** જર્જરિત કરે છે जर्जरित करती है, **शीधुः** શીધુ सीधु, **अवधमति** કૃશતા કરે છે कृशताको उत्पन्न करता है, **द्राक्षासवः** દ્રાક્ષાસવ द्राक्षासव, **दीपयति** દીપન કરે છે अग्निको दीप्त करता है, **फाणितम्** ફાણિત फाणित, **आचिनोति** દોષોને એકત્ર કરે છે दोषोंको एकत्रित करता है, **दधि** દહીં दही, **शोफम्** સોજો शोथको, **जनयति** ઉત્પન્ન કરે છે उत्पन्न करती है, **पिण्याकशाकम्** પિણ્યાક શાક पिण्याक शाक, **ग्लपयति** ગ્લાનિ કરે છે हर्षका क्षय करता है;

4-(2). By its very nature, water moistens, salt liquefies, alkali digests, honey synthesises, ghee causes unctuousness, milk gives life, flesh causes roborance, flesh-juice nourishes, wine causes senile degeneration, seedhu wine causes emaciation, grape-wine stimulates digestion, liquid gur causes accumulation of morbid humors, curds cause edema, green pinyaka causes depression.

**प्रभूतान्तर्मलो माषसूपः, दृष्टिशुक्रघ्नः क्षारः, प्रायः पित्तलमम्लमन्यत्र दाडिमामलकात्, प्रायः श्लेष्मलं मधुरमन्यत्र मधुनः पुराणाच्च शालिषष्टिकयवगोधूमात्, प्रायस्तिक्तं वातलमवृष्यं**

४. रसः प्रीणयति-रसाः प्रीणयन्ति (प.)
,, शीधुरवधमति–सीधुरवधमयति (क.)
,, ,, –शीधुरवधमयति (ख. ठ. त.)
,, ,, –सीधुरवधमति (च.)
,, पिण्याक शाकं ग्लपयति–पिण्याको ग्लपयति (प.)

४. दृष्टिशुक्रघ्नः क्षारः इत्यनन्तरम्—
उदकेन प्लुतं शीघ्रमन्नं समवचार्यते। तेनाशु जीर्यते तस्मादुदकं क्लेदनं स्मृतम् ॥ स्नेहादौष्ण्याद् व्यवायित्वाद्विष्यन्दित्वाच्च मार्दवम्। जनयेल्लवणं तस्माद्विष्यन्दयति सेवितम् ॥ अग्नेः समानयोनित्वात्स वर्धयति सेवितः। कायाग्निं धीमता तस्मात्क्षारः प्रोक्तोऽन्नपाचनः ॥ रूक्षं कषायं मधुरं विशदं चाविदाहि च। यस्माच्चाश्लेष्मलं तस्मात्संदधाति क्षतं मधु॥ मधुरं गुर्वभिष्यन्दि वृष्यं चाप्यविदाहि च। पित्तानिलहरं तस्माद्देहं स्नेहयते घृतम् ॥ मधुरं बृंहणं वल्यं स्निग्धं पौरुषवर्धनम्। रक्तपित्तानिलघ्नं च तस्माज्जीवयते पयः ॥ सस्नेहं मधुरं स्वादु निर्मांसं बलवर्धनम्। तस्माद् बृंहयते मांसं सेव्यमानमभीक्ष्णशः ॥ व्यवायभावात्सौक्ष्म्याच्च द्रवत्वाच्चोपसेवितः। सर्वेन्द्रियाणि मर्त्यानां तस्मात्प्रीणयते रसः ॥ पर्वबन्धास्थ्यसृङ्मांसमौष्ण्यात्तैक्ष्ण्याच्च देहिनः। व्यवायित्वाच्च तस्मात्तु जर्जरीकुरुते सुरा ॥ औष्ण्यात्तैक्ष्ण्याच्च रौक्ष्याच्च मेदो मांसं बलं तथा। जन्तोरवधमत्याशु तस्मात्सीधुः प्रशस्यते ॥ इत्यधिकः पाठः (ग. थ. प.) पुस्तकेषु।
शालिषष्टिक–शालि (ख. च. ज. ड.)
प्रायस्तिक्तं–प्रायः सर्वं तिक्तं (च.)

**चान्यत्र वेत्राग्रामृतापटोलपत्रात्, प्रायः कटुकं वातलमवृष्यं चान्यत्र पिप्पलीविश्वभेषजात् ॥४॥**

**माषसूपः** અડદની રાંધેલી દાળ ऊड़दकी दाल, **प्रभूतान्तर्मलः** પુષ્કળ અંદરનો મળ કરે છે प्रचुर अन्दरके मलको उत्पन्न करती है, **क्षारः** ક્ષાર क्षार, **दृष्टिशुक्रघ्नः** દૃષ્ટિ અને વીર્યનો નાશ કરનાર છે दृष्टि और शुक्रका नाशक है, **दाडिमामलकात्** દાડમ અને આમળાં दाडिम और आंवलेको, **अन्यत्र** સિવાય छोड़ कर, **अम्लम्** બધી ખાટી ચીજો सब अम्ल, **प्रायः** ઘણું કરીને प्रायः करके, **पित्तलम्** પિત્ત કરનાર છે पित्तकारक है, **मधुनः** મધ शहद, **पुराणात्** અને જૂના और पुराने, **शालिषष्टिक-** શાલિ ચોખા, સાઠી ચોખા हेमन्त चावल और सांठी, **यवगोधूमात् च** જવ અને ઘઉં जौ एवं गेहूंको, **अन्यत्र** સિવાય छोड़ कर, **मधुरम्** સઘળાં મધુર દ્રવ્યો सब मधुर द्रव्य, **प्रायः** ઘણું કરીને प्रायः करके, **श्लेष्मलम्** કફ કરનાર છે कफवर्धक हैं, **वेत्राग्र-** નેતરનાં અગ્ર बेतके अग्रिम भाग, **अमृता-** ગળો गिलोय, **पटोलपत्रात् च** અને પરવળનાં પાન परवलके पत्तोंको, **अन्यत्र** સિવાય छोड़ कर, **तिक्तम्** સઘળાં તિક્ત દ્રવ્યો सब तिक्त द्रव्य, **प्रायः** ઘણું કરીને प्रायः करके, **वातलम्** વાત કરનાર वातकारक, **अवृष्यम् च** અને અવૃષ્ય છે एवं अवृष्य हैं, **पिप्पली-** પીપર पिप्पली, **विश्वभेषजात् च** તથા સૂંઠ और सोंठको, **अन्यत्र** સિવાય छोड़ कर, **कटुकम्** સઘળાં કટુ દ્રવ્ય सब कटु द्रव्य. **प्रायः** ઘણું કરીને प्रायः करके, **वातलम्** વાતકારક वातकारक, **अवृष्यम् च** અને અવૃષ્ય છે और अवृष्य हैं ॥ ४ ॥

4. The soup of black-gram increases fecal matter. The alkalis are injurious to vision and semen. All substances of acid taste except pomegranate and the emblic myrobalan are mostly pitta promoters. All substances of sweet taste, except honey, old sali rice, shashtika-rice, barley and wheat are generally kapha-promoters. All substances of bitter taste, except the sprouts of country-willow, guduch and the wild snake-gourd, are mostly vata-stimulants and anaphrodisiacs. All substances with pungent taste, except long pepper and ginger, are vata-stimulants and anaphrodisiacs.

वर्गसंग्रहेण द्रव्याणां तद्गुणानां चोपदेशे प्रतिज्ञा—

**परमतो वर्गसंग्रहेणाहारद्रव्याण्यनुव्याख्यास्यामः ॥ ५ ॥**

**अतः परम्** હવે અહીંથી આગળ इसके आगे, **वर्गसंग्रहेण** વર્ગનો સંગ્રહ કરીને वर्गोके संग्रहद्वारा, **आहारद्रव्याणि** આહારનાં દ્રવ્યોનું आहारद्रव्यों का, **अनुव्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥५॥

5. We shall now expound the different classifications of the articles of diet.

वर्गाणां संक्षेपेण निर्देशः—

**शूकधान्यशमीधान्यमांसशाकफलाश्रयान् ।**
**वर्गान् हरितमद्याम्बुगोरसेक्षुविकारिकान् ॥ ६ ॥**
**दश द्वौ चापरौ वर्गौ कृतान्नाहारयोगिनाम् ।**
**रसवीर्यविपाकैश्च प्रभावैश्च प्रचक्ष्महे ॥ ७ ॥**

**शूकधान्य-** શૂકધાન્યવર્ગ शूकधान्यवर्ग, **शमीधान्य-** શમીધાન્યવર્ગ शमीधान्यवर्ग, **मांस-शाक-** માંસ વર્ગ, શાકવર્ગ मांसवर्ग, शाकवर्ग, **फलाश्रयान्** ફલવર્ગ फलवर्ग, **हरितमद्याम्बु-** હરિતવર્ગ– મદ્યવર્ગ– જલવર્ગ हरितवर्ग– मद्यवर्ग– अम्बुवर्ग, **गोरस-** ગોરસવર્ગ गोरसवर्ग, **इक्षु- विकारिकान्** અને ઇક્ષુવિકારવર્ગ और इक्षुविकारवर्ग, **दश वर्गान्** આ દશ વર્ગ इन दस वर्गोको, **कृतान्न-** તથા કૃતાન્નવર્ગ तथा कृतान्नवर्ग, **आहारयोगिनाम्** તેમજ આહારયોગિવર્ગ एवं आहारयोगिवर्ग, **द्वौ च अपरौ**

४. पटोलपत्रात्—पटोलात् (ख. घ. ज. ढ.)
प्राय: कटुकं वातलमवृष्यं चान्यत्र पिप्पलीविश्वभेषजात्—प्रायः कटुकं वातलमवृष्यं स्तंभनं शीतं चान्यत्र हरीतक्याः प्रायो लवणं श्लेष्मलमवृष्यं चान्यत्र सैन्धवात् (क. द.)

५. वर्गसंग्रहेण—वर्गसंश्रयेण (घ.)
७. प्रचक्ष्महे—उपदेक्ष्यते (ष. त.)

આ બે બીજા इन दो अन्य, वर्गौं વર્ગો वर्गाको, रसवीर्य- રસ વીર્ય रस वीर्य, विपाकैः च વિપાક विपाक, प्रभावैः च અને પ્રભાવ અનુસાર और प्रभाव द्वारा, प्रचक्ष्महे કહેશું कहेगें ॥७॥

6-7. Corn, pulse, meat, vegetable, fruits, greens, wines, water, milk and its products, sugarcane and its products—these ten and two more, viz, cooked food and the adjuvants of foods: of these we shall now explain the taste, potency, post digestive qualities and specific properties.

**अथ शूकधान्यवर्गः—**

शालीनां सामान्यगुणाः—

**रक्तशालिर्महाशालिः कलमः शकुनाहृतः ।**
**तूर्णको दीर्घशूकश्च गौरः पाण्डुकलाङ्गुलौ ॥८॥**
**सुगन्धको लोहवालः सारिवाख्यः प्रमोदकः ।**
**पतङ्गस्तपनीयश्च ये चान्ये शालयः शुभाः ॥९॥**
**शीता रसे विपाके च मधुराश्चाल्पमारुताः ।**
**बद्धाल्पवर्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः ॥१०॥**

अथ शूकधान्यवर्गः શૂકધાન્ય વર્ગનો આરંભ કરવામાં આવે છે शूकधान्यवर्गका प्रारम्भ किया जाता है, रक्तशालिः લાલ ચોખા लाल शालि, महाशालिः મહાશાલિ महाशालि, कलमः કલમ कलम, शकुनाहृतः શકુનાહૃત शकुनाहृत, तूर्णकः તૂર્ણક तूर्णक, दीर्घशूकः દીર્ઘશૂક दीर्घशूक, गौरः ગૌર गौर, पाण्डुक–लाङ्गुलौ च પાંડુક લાંગુલ पाण्डुक लांगुल, सुगन्धकः સુગન્ધક सुगन्धक, लोहवालः લોહવાલ लोहवाल, सारिवाख्यः સારિવા નામનો सारिवानामक, प्रमोदकः પ્રમોદક प्रमोदक, पतङ्गः પતંગ पतंग, तपनीयः च તપનીય तपनीय, ये च अन्ये અને જે બીજી तथा जो अन्य, शुभाः शालयः શુભ શાળ उत्तम चावल हैं, शीताः તે શીતલ वे शीत. रसे विपाके च રસ તથા વિપાકમાં रस और विपाकमें, मधुराः મધુર मधुर, अल्पमारुताः થોડો વાયુ કરનાર वायुके अल्प प्रकोपक, बद्धाल्पवर्चसः બદ્ધ અને અલ્પ મળ કરનાર मलको बद्ध तथा अल्प करनेवाले, स्निग्धाः સ્નિગ્ધ स्निग्ध, बृंहणाः બૃંહણ बृंहण, शुक्रमूत्रलाः તથા શુક્રકારક અને મૂત્રવર્ધક છે तथा शुक्र एवं मूत्र केवर्धक हैं ॥ ८–१० ॥

8-10. The classification of the corn group (mono-cotledons).

The varieties of rice known as the red rice, the big rice (Maha sali). The kalama (kashmir), the sakunahrita, (grown in sravanti), the turnaka, the deerghasuka, (long-awned) the gaur, (white) the panduka, thel angula, the sugandhaka, the lohavala, the sarivakhya, the pramodaka, the patanga, the tapaniya and other good varities of rice are cooling, sweet in taste and post digestion, slightly vata-stimulant and form condensed and scanty stools. They are unctuous, roborant, seminiferous and diuretic.

रक्तशाल्यादीनां विशेषगुणाः—

**रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः ।**
**महांस्तस्यानु कलमस्तस्याप्यनु ततः परे ॥११॥**

तृष्णाघ्नः તૃષાનો નાશ કરનાર तृषानाशक, त्रिमलापहः અને ત્રણે દોષોને શાંત કરનાર और त्रिदोषनाशक, रक्तशालिः લાલ ચોખા लाल चावल, तेषाम् તેઓમાં इनमें, वरः શ્રેષ્ઠ છે श्रेष्ठ है, तस्य अनु તેનાથી

८. शकुनाहृतः — शकुलाहृतः (प.)
,, तूर्णको—चूर्णको (द. ध.)
,, पाण्डुकलाङ्गुलौ—पाण्डुकलाङ्गलौ (प.)
९. सुगन्धको—सुगन्धिका (ध.)
,, लोहवालः सारिवाख्यः प्रमोदकः — लोहवालाः सारिवाख्याः प्रमोदकाः (ग.)
,, प्रमोदकः — प्रमोहकाः (प.)
१०. मधुराश्चाल्पमारुताः — मधुराः स्वल्पमारुताः
११. तृष्णाघ्नस्त्रिमलापहः — तृष्णाघ्नश्च मलापहः (ध.)

હીન ગુણવાળો इससे हीनगुण, महान् મહાશાલિ છે महाशालि है, तस्य अपि अनु અને તેનાથી હીન ગુણવાળો और इससे भी कम गुणवाला, कलमः કલમ છે कलम है, ततः परे તથા તે પછીની બીજી બધી શાળ તેનાથી હલકી છે और इसके आगे अन्य सब शालि इससे कम गुणवाले हैं ॥ ११ ॥

11. The red rice is the best of them. It is adipsous and curative of tri-discordance. The next best is the big rice and next to it is the kalama and so on (in the order they are mentioned).

**यवका हायनाः पांसुवाप्यनैषधकादयः ।**
**शालीनां शालयः कुर्वन्त्यनुकारं गुणागुणैः ॥१२॥**

यवकाः યવક यवक, हायनाः હાયન हायन, पांसु- પાંસુ पांसु, वाप्य- વાપ્ય वाप्य, नैषधकादयः નૈષધક વગેરે नैषधक आदि, शालयः શાળો शालि, गुणागुणैः ગુણ અને દોષમાં गुण और अगुणकी दृष्टिसे, शालीनाम् ઉપર્યુક્ત શાળોનું उपर्युक्त शालियोंका, अनुकारम् અનુકરણ अनुकरण, कुर्वन्ति કરે છે करते हैं ॥१२॥

12. The yavaka, hayana, the pansu-vapya, (deep-water paddy), naishadhaka and other kinds of rice are similar to the (above-mentioned) rices with regard to both their good and bad qualities.

षष्टिकस्य गुणाः —

**शीतः स्निग्धोऽगुरुः स्वादुस्त्रिदोषघ्नः स्थिरात्मकः ।**
**षष्टिकः प्रवरो गौरः कृष्णगौरस्ततोऽनु च ॥१३॥**

षष्टिकः ષષ્ટિક षष्टिकधान्य, शीतः શીત शीतल, स्निग्धः સ્નિગ્ધ स्निग्ध, अगुरुः લઘુ लघु. स्वादुः મધુર मधुर, त्रिदोषघ्नः ત્રિદોષનાશક त्रिदोषनाशक, स्थिरात्मकः અને સ્થિર છે और दृढताकारक है, गौरः તેમાં ગૌર इनमें श्वेतवर्ण, षष्टिकः ષષ્ટિક षष्टिक, प्रवरः શ્રેષ્ઠ છે उत्तम है, कृष्णगौरः च અને કૃષ્ણગૌર ષષ્ટિક और कृष्णगौरवर्ण षष्टिक, ततः अनु તેનાથી ઉતરતો છે इससे हीनगुण है ॥ १३ ॥

13. Shashtika rice is cooling, unctuous, not heavy, sweet, curative of tri-discordance and stabilising. The white variety is the best of shashtika rices and the dark-white comes next in order.

वरकोद्दालक - चीन - शारदोज्ज्वल - दर्दुर - गन्धल - कुरुविन्दानां गुणाः—

**वरकोद्दालकौ चीनशारदोज्ज्वलदर्दुराः ।**
**गन्धनाः कुरुविन्दाश्च षष्टिकाल्पान्तरा गुणैः ॥१४॥**

वरक- વરક वरक, उद्दालकौ ઉદ્દાલક उद्दालक, चीन- ચીન चीन, शारद- શારદ शारद, उज्ज्वल- ઉજ્જ્વલ उज्ज्वल, दर्दुराः દર્દુર दर्दुर, गन्धनाः ગન્ધન गन्धन, कुरुविन्दाः च અને કુરુવિન્દ और कुरुविन्द शालि, गुणैः ગુણમાં गुणोंमें, षष्टिकाल्पान्तराः ષષ્ટિકથી થોડા ઓછા ગુણવાળા છે षष्टिकसे कुछ कम गुणवाले हैं ॥१४॥

14. Varaka, uddalaka, china, sarada, ujjvala, dardura, the fragrant rice and kuruvinda are slightly different in quality from the shashtika rice.

व्रीहेर्गुणाः, पाटलस्य गुणाः —

**मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।**
**बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥१५॥**

१२. यवकाः – यावकाः (ग.)
,, पांसुवाप्य–पांशुवाप्या (क.)
,, ,, –पांशुवाप्या (छ.)
,, पांसुवाप्य°–पांशुवाप्य° (च. ध.)
१३. अगुरुः – लघुः (ग. ज.)

१४. वरकोद्दालकौ–वराकोद्दालकौ (प.)
,, उज्ज्वल–उद्दाल (द.)
,, गन्धना – गन्धलाः (क. घ. ध.)
,, ,, – गन्धमाः (प.)
,, कुरुविन्दाश्च–कुरुविन्नाश्च (द.)

293. The safflower oil is hot, pungent in post-digestion and heavy. It is excessively irritant and provokes all body-humors.

अनुक्ततैलगुणसंग्रहः —

**फलानां यानि चान्यानि तैलान्याहारसंविधौ ।**
**युज्यन्ते गुणकर्मभ्यां तानि ब्रूयाद्यथाफलम् ॥२९४॥**

**फलानाम्** ફળોનાં फलोंके, **यानि च** જે जो, **अन्यानि** બીજાં अन्य, **तैलानि** તેલો तैल, **आहारसंविधौ** આહારની બનાવટોમાં आहारविधिमें, **युज्यन्ते** પ્રયોજાય છે बरते जाते हैं, **तानि** તેઓને उनको, **गुणकर्मभ्याम्** ગુણ અને કર્મથી गुण और कर्मोंसे, **यथाफलम्** તે તે ફળોને અનુસરનારાં उन उन फलोंके अनुसार, **ब्रूयात्** કહેવાં कहना चाहिए ॥ २९४ ॥

294. The qualities of other oils which are used in food and which are derived from fruits (not mentioned here) are to be known according to the qualities of the fruits themselves.

वसामज्ज्ञोर्गुणाः —

**मधुरो बृंहणो वृष्यो बल्यो मज्जा तथा वसा ।**
**यथासत्त्वं तु शैत्योष्णे वसामज्ज्ञोर्विनिर्दिशेत् २९५**

**मज्जा** મજ્જા मज्जा, **मधुरः** મધુર मधुर, **बृंहणः** બૃંહણ बृंहण, **वृष्यः** વૃષ્ય वृष्य, **बल्यः** અને બલપ્રદ છે और बलकारक है, **वसा** વસા वसा, **तथा** મજ્જા સમાન છે मज्जाके समान है, **वसामज्ज्ञोः** વસા અને મજ્જાની वसा और मज्जाकी, **शैत्योष्णे** શીતતા અને ઉષ્ણતા शीतलता और उष्णता, **तु** તો तो, **यथासत्त्वम्** તે તે પ્રાણી અનુસાર उस उस प्राणीके अनुसार, **विनिर्दिशेत्** કહેવી कहनी चाहिए ॥ २९५ ॥

295. The marrow and animal fat are sweet, roborant, aphrodisiac, strengthening and according to the nature of the animal, their nature is to be determined as cooling or hot.

विश्वभेषजस्य गुणाः —

**सस्नेहं दीपनं वृष्यमुष्णं वातकफापहम् ।**
**विपाके मधुरं हृद्यं रोचनं विश्वभेषजम् ॥२९६॥**

**विश्वभेषजम्** સૂંઠ सोंठ, **सस्नेहम्** કંઈક સ્નિગ્ધ ईषत् स्निग्ध, **दीपनम्** દીપન दीपक, **वृष्यम्** વૃષ્ય वृष्य, **उष्णम्** ઉષ્ણ उष्ण, **वातकफापहम्** વાત અને કફનો નાશ કરનાર वात एवं कफके नाशक, **विपाके** વિપાકમાં विपाकमें, **मधुरम्** મધુર मधुर, **हृद्यम्** હૃદ્ય हृद्य, **रोचनम्** અને રુચિકારક છે और रोचक है ॥ २९६ ॥

296. Ginger is slightly unctuous, digestive-stimulant, aphrodisiac, hot and curative of vata and kapha, sweet in post-digestion, cordial and appetising.

पिप्पल्या गुणाः —

**श्लेष्मला मधुरा चार्द्रा गुर्वी स्निग्धा च पिप्पली ।**
**सा शुष्का कफवातघ्नी कटूष्णा वृष्यसंमता ॥२९७॥**

**आर्द्रा** લીલી हरी, **पिप्पली** પીપર पीपल, **श्लेष्मला** કફકારક कफवर्धक, **मधुरा च** મધુર मधुर, **गुर्वी** ગુરુ गुरु, **स्निग्धा च** અને સ્નિગ્ધ છે एवं स्निग्ध है, **शुष्का सा** સૂકાઈ ગયેલી તે शुष्क पीपल, **कफवातघ्नी** કફ અને વાતનો નાશ કરનાર कफ एवं वातका नाश करनेवाली, **कटु-** કટુ कटु, **उष्णा** ઉષ્ણ उष्ण, **वृष्यसंमता** અને વૃષ્ય માનેલી છે और वृष्य मानी गई है ॥२९७॥

297. Green long pepper increases kapha, is sweet, heavy and unctuous. When dried, it is dispeller of kapha and vata, pungent and hot and is considered aphrodisiac.

मरिचस्य गुणाः —

**नात्यर्थमुष्णं मरिचमवृष्यं लघु रोचनम् ।**
**छेदित्वाच्छोषणत्वाच्च दीपनं कफवातजित् ॥२९८॥**

२९६. सस्नेहं दीपनं—स्नेहनं बृंहणम् (प.)
२९७. कफवातघ्नी—कफपित्तघ्नी (ग. प.)
,, कटूष्णा—कटुका (ड.)

**मरिचम्** મરી काली मिर्च, **अत्यर्थम्** અત્યંત अत्यन्त, **उष्णम् न** ઉષ્ણ નથી उष्ण नहीं है, **अवृष्यम्** વૃષ્ય નથી वृष्य नहीं है, **लघु** લઘુ છે लघु है, **रोचनम्** રુચિકર છે रोचक है, **छेदित्वात्** અને છેદન કરનાર હોવાથી और छेदन करनेवाली होनेसे, **शोषणत्वात् च** તથા શોષણ કરનાર હોવાથી एवं शोषण करनेवाली होनेसे, **दीपनम्** અગ્નિદીપક अग्निदीपक, **कफवातजित्** તથા કફ અને વાયુને જીતનાર છે तथा कफ एवं वातका नाश करती है ॥ २९८ ॥

298. Black pepper is not very hot, is an aphrodisiac, light, appetiser and being depletive and desiccant, it is a digestive-stimulant and cures kapha and vata.

हिङ्गुनो गुणाः —

**वातश्लेष्मविबन्धघ्नं कटूष्णं दीपनं लघु ।**
**हिङ्गु शूलप्रशमनं विद्यात् पाचनरोचनम् ॥२९९॥**

**हिङ्गु** હિંગ हींग, **वात-** વાત वायु, **श्लेष्म-** કફ कफ, **विबन्धघ्नम्** તથા વિબંધનો નાશ કરનાર एवं विबन्धका नाश करनेवाली, **कटु** કટુ कटु, **उष्णम्** ઉષ્ણ उष्ण, **दीपनम्** અગ્નિદીપક दीपक, **लघु** લઘુ लघु, **शूलप्रशमनम्** શૂલ શાંત કરનાર शूलशामक, **पाचन-** પાચક पाचक, **रोचनम्** અને રુચિકર और रुचिकारक, **विद्यात्** જાણવી जाननी चाहिए ॥ २९९ ॥

299. Asofetida is to be regarded as curative of vata, kapha and obstipation. It is pungent, hot, digestive-stimulant, light, alleviative of colicky pain, digestive and appetiser.

सैन्धवस्य गुणाः —

**रोचनं दीपनं वृष्यं चक्षुष्यमविदाहि च ।**
**त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम् ॥ ३०० ॥**

**सैन्धवम्** સૈન્ધવ सैन्धव, **रोचनम्** રુચિકર रोचक, **दीपनम्** અગ્નિદીપક दीपक, **वृष्यम्** વૃષ્ય वृष्य, **चक्षुष्यम्** આંખને હિતકારી चक्षुष्य, **अविदाहि** વિદાહ ન કરનાર अविदाहि, **त्रिदोषघ्नम्** ત્રિદોષશામક त्रिदोषनाशक, **समधुरम्** જરા મધુર थोडा मधुर, **लवणोत्तमम् च** અને લવણોમાં શ્રેષ્ઠ છે और सब लवणोंमें श्रेष्ठ है ॥ ३०० ॥

300. Rock salt is the best of salts; it is appetiser, digestive-stimulant, aphrodisiac, improves eye-sight and is non-irritant. It is curative of tridiscordance and slightly sweet.

सौवर्चलस्य गुणाः —

**सौक्ष्म्यादौष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।**
**सौवर्चलं विबन्धघ्नं हृद्यमुद्गारशोधि च ॥३०१॥**

**सौवर्चलम्** સંચળ सौवर्चल, **सौक्ष्म्यात्** સૂક્ષ્મતા सूक्ष्म, **औष्ण्यात्** ઉષ્ણતા उष्ण, **लघुत्वात् च** લઘુતા लघु, **सौगन्ध्यात् च** તથા સુગન્ધીપણાને લીધે एवं सुगन्धीयुक्त होनेसे, **रुचिप्रदम्** રુચિ કરનાર रुचिकारक; **विबन्धघ्नम्** કબજિયાત મટાડનાર मलबन्धनाशक, **हृद्यम्** હૃદ્ય हृद्य, **उद्गारशोधि च** અને ઓડકારનું શોધન કરનાર છે और उद्गारशोधक है ॥ ३०१ ॥

301. The sanchal salt being subtle, hot, light, fragrant and relish-giving, is deobstruent, cordial and purifies the eructations.

बिडस्य गुणाः —

**तैक्ष्ण्यादौष्ण्याद्व्यवायित्वाद्दीपनं शूलनाशनम् ।**
**ऊर्ध्वं चाधश्च वातानामानुलोम्यकरं बिडम् ॥३०२॥**

**बिडम्** બિડલવણ बिड़लवण, **तैक्ष्ण्यात्** તીક્ષ્ણતા तीक्ष्ण, **औष्ण्यात्** ઉષ્ણતા उष्ण, **व्यवायित्वात्** અને વ્યવાયીપણાને લીધે और व्यवायी होनेसे, **दीपनम्** અગ્નિદીપક दीपक, **शूलनाशनम्** શૂલનો નાશ કરનાર

---

२९९. विबन्धघ्नं—विकारघ्नं (प.)
,, कटूष्णं—कटुकं (झ. ह.)
३००. वृष्यं- हृद्यं (झ.)
३०२. तैक्ष्ण्यात्—सौम्यात् (ग.)

शूलनाशक, ऊर्ध्वम् च तथा ઉપર તથા ऊपर, अधः च અને નીચે और नीचेकी ओर, वातानाम् વાતોનું वायुका, आनुलोम्यकरम् અનુલોમન કરનાર છે अनुलोमन करता है ॥ ३०२ ॥

302. The bid-salt being sharp, hot and diffusive is a digestive-stimulant, cures colicky pain and regulates the upward and downward courses of vata.

औद्भिदलवणस्य गुणाः, काललवणस्य गुणाः —

**सतिक्तकटु सक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।**
**न काललवणे गन्धः सौवर्चलगुणाश्च ते ॥३०३॥**

औद्भिदम् ઔદ્ભિદ લવણ औद्भिद लवण, सतिक्त- જરાક તિક્ત ईषत् तिक्त, कटु કટુ कटु, सक्षारम् ક્ષારયુક્ત क्षारयुक्त, तीक्ष्णम् તીક્ષ્ણ तीक्ष्ण, उत्क्लेदि च અને શરીરમાં ભીનાશ કરનાર છે और शरीरमें गीलापन उत्पन्न करनेवाला है, काललवणे કાલલવણમાં काललवणमें, गन्धः न કેવળ ગંધ હોતી નથી केवल गन्ध नहीं होती, ते પરંતુ ઉપર કહેલા परन्तु पूर्वोक्त, सौवर्चलगुणाः સૌવર્ચલના સઘળા ગુણો તેમાં હોય છે सौवर्चल नमकके सब गुण उसमें होते हैं ॥ ३०३ ॥

303. The efflorescence salt is slightly bitter, pungent, slightly alkaline, sharp and liquefacient. Kalabag rock-salt has no smell. Its qualities are those of sanchal-salt.

सामुद्रलवणस्य गुणाः, पांशुजलवणस्य गुणाः, लवणानां सामान्यगुणाः —

**सामुद्रकं समधुरं, सतिक्तं कटु पांशुजम् ।**
**रोचनं लवणं सर्वं पाकि स्रंस्यनिलापहम् ॥३०४॥**

सामुद्रकम् સામુદ્ર લવણ सामुद्र लवण, समधुरम् જરાક મધુર ईषत् मधुर, पांशुजम् પાંશુજ લવણ पांशुज नमक, सतिक्त જરાક કડવું ईषत् तिक्त, कटु અને તીખું હોય છે और कटु होता है, सर्वम् સર્વ પ્રકારનાં सब, लवणम् લવણ लवण, रोचनम् રુચિકર रुचिकारक, पाकि પાચન કરનાર पाचक, स्रंसि સારક सारक, अनिलापहम् અને વાયુનાશક હોય છે और वायुनाशक होते हैं ॥ ३०४ ॥

304. The sea-salt is slightly sweet; the earth-salt is slightly bitter and pungent. All salts are appetising, digestive, laxative and curative of vata.

यवक्षारस्य गुणाः —

**हृत्पाण्डुग्रहणीरोगप्लीहानाहगलग्रहान् ।**
**कासं कफजमर्शांसि यावशूको व्यपोहति ॥३०५॥**

यावशूकः જવખાર यवक्षार, हृत्- હૃદ્રોગ हृद्रोग, पाण्डु- પાંડુરોગ पाण्डुरोग, ग्रहणीरोग-ગ્રહણીરોગ ग्रहणीरोग, प्लीह- બરોલ प्लीहा, आनाह- આનાહ आनाह, गलग्रहान् ગલગ્રહ गलग्रह, कफजम् કફની कफजन्य, कासम् ઉધરસ कास, अर्शांसि અને અર્શનો और अर्शको, व्यपोहति નાશ કરે છે नष्ट करता है ॥३०५॥

305. The barley alkali cures diseases of heart, anemia, assimilation disorders, splenic disorders, constipation, throat spasm, cough of the kapha type and piles.

सर्जिकादिक्षाराणां गुणाः —

**तीक्ष्णोष्णो लघुरूक्षश्च क्लेदी पक्ता विदारणः ।**
**दाहनो दीपनश्छेत्ता सर्वः क्षारोऽग्निसन्निभः ३०६**

सर्वः સર્વ પ્રકારના सब प्रकारके, क्षारः ક્ષાર क्षार, तीक्ष्ण- તીક્ષ્ણ तीक्ष्ण, उष्णः ઉષ્ણ उष्ण, लघु- લઘુ लघु, रूक्षः રૂક્ષ रूक्ष, क्लेदी ક્લેદકારક क्लेदी, पक्ता પાચન કરનાર व्रणोंको पकानेवाले, विदारणः તથા ફાડી નાખનાર एवं फाड़नेवाले, दाहनः દાહ કરનાર जलानेवाले,

३०६. पक्ता–पाकी (ग. ध.)
,, दाहनो–दहनो (क. घ. छ. द.)
,, सर्वः क्षारो–स्वर्जी क्षारो (ग. च. छ. ध. प.)
,, दाहनो... ... क्षारोऽग्निसन्निभः–दीपनो दहनः छेत्ता स्वर्जिक्षारोऽग्निसंनिभः (ब.)

दीपनः અગ્નિદીપન अग्निदीपन, छेत्ता છેદન કરનાર छेदन करनेवाले, अग्निसन्निभः च અને અગ્નિ જેવા હોય છે और अग्नि तुल्य होते हैं ॥ ३०६ ॥

306. All alkalis are like fire, acute, hot, light, dry, liquefacient, digestive, corrosive, caustic, digestive-stimulant and destructive of tissues.

कारवी-कुञ्चिकाजाजी-यवानी-धान्यतुम्बुरूणां गुणाः —

**कारवी कुञ्चिकाऽजाजी यवानी धान्यतुम्बुरु ।**
**रोचनं दीपनं वातकफदौर्गन्ध्यनाशनम् ॥३०७॥**

कारवी કાળીજીરી कालाजीरा, कुञ्चिका કલૌંજીરુ कलौंजी, अजाजी જીરું जीरा, यवानी અજમો अजवायन, धान्य- ધાણા धनियां, तुम्बुरु અને નેપાલી ધાણા और नेपाली धनियां, रोचनम् રુચિકર रोचक, दीपनम् અગ્નિદીપન दीपन, वात- તથા વાત तथा वात, कफ- કફ कफ, दौर्गन्ध्य- તથા દુર્ગન્ધીનો और दुर्गन्धका, नाशनम् નાશ કરનાર છે नाशक हैं ॥ ३०७ ॥

307. Celery seeds, black cumin, cumin, bishop's weed, corriander and Indian toothache are appetising, digestive-stimulants and dispellers of vata, kapha and fetor.

**आहारयोगिनां भक्तिनिश्चयो न तु विद्यते ।**
**समाप्तो द्वादशश्चायं वर्ग आहारयोगिनाम् ॥३०८॥**

आहारयोगिनाम् આહારયોગી દ્રવ્યોના आहारके उपयोगी द्रव्योंके, तु તો तो, भक्तिनिश्चयः વિભાગનો નિશ્ચય विभागका कोई निश्चय, न विद्यते નથી नहीं है, अयम् च આ यह, आहारयोगिनाम् આહારયોગીઓનો आहारके उपयोगी द्रव्योंका, द्वादशः બારમો बारहवाँ, वर्गः વર્ગ वर्ग, समाप्तः સંપૂર્ણ થયો છે संपूर्ण हुआ है ॥ ३०८ ॥

३०७. कारवी—कारव्यः (घ.)
,, यवानी—कारवीः (झ.)
,, ,, —कवरी (ड.)
,, ,, —यमानी (द्र.)
३०८. समाप्तो—पूर्यते (क. ग. च. छ. ध.)

308. Dietary adjuvants do not, however, admit of a rigid classification. Thus ends the twelfth section on the articles used in cooked foods.

द्वादशवर्गोक्तानां हेयोपादेयतानिर्देशः —

**शूकधान्यं शमीधान्यं समातीतं प्रशस्यते ।**
**पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु ॥३०९॥**

शूकधान्यम् શૂકધાન્ય शूकधान्य, शमीधान्यम् અને શમીધાન્ય और शमीधान्य, समातीतम् એક વર્ષના જૂનાં एक वर्षके पुराने, प्रशस्यते પ્રશસ્ત છે प्रशस्त माने जाते हैं. पुराणम् એક વર્ષથી વધારે જૂનાં एक वर्षसे अधिक पुराने धान्य, प्रायशः ઘણું કરીને प्रायः करके, रूक्षम् રૂક્ષ હોય છે रूक्ष होते हैं, अभिनवम् અને નવાં और नये, प्रायेण ઘણું કરીને प्रायः करके, गुरु ભારે હોય છે गुरु होते हैं ॥ ३०९ ॥

309. Corn and pulses that are one year old are recommended. The old grain is generally dry and the new generally heavy.

**यद्यदागच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम् ।**
**निस्तुषं युक्तिभृष्टं च सूप्यं लघु विपच्यते ॥३१०॥**

यत् यत् જે જે ધાન્ય વાવતાં जो जो धान्य बोने पर, क्षिप्रम् તરત जल्दी, आगच्छति ઊગે છે उगते हैं, तत् तत् તે તે वे वे, लघुतरम् બહુ હલકાં अधिक लघु, स्मृतम् માનેલ છે माने हैं, निस्तुषम् ફોતરાં વગરના तुषरहित, युक्तिभृष्टम् च તથા યુક્તિપૂર્વક શેકેલાં एवं युक्तिपूर्वक भूने, सूप्यम् દાળનાં ધાન્ય सूप्य धान्य, लघु તરત जल्दी, विपच्यते પચે છે पच जाते हैं ॥ ३१० ॥

310. That grain which grows quicker is considered lighter than the others. The decorticated and slightly roasted pulse is digested easily.

३१०. यद्यदागच्छति क्षिप्रम्—यज्जरां याति शीघ्रं तु (च.)

**मृतं कृशं चातिमेद्यं वृद्धं बालं विषैर्हतम् ।**
**अगोचरभृतं व्यालसूदितं मांसमुत्सृजेत् ॥३११॥**
**अतोऽन्यथा हितं मांसं बृंहणं बलवर्धनम् ।**

**मृतम्** મરેલ स्वयं मृत, **कृशम्** દૂબળા दुर्बल, **अतिमेद्यम्** બહુ મેદવાળા अति मेदयुक्त, **वृद्धम्** વૃદ્ધ वृद्ध, **बालम्** બાળક बालक, **विषैः** ઝેરથી લેપેલ શસ્ત્રથી विषसे लिप्त शस्त्रसे, **हतम्** મારેલ मारे, **अगोचरभृतम्** અસાત્મ્ય દેશમાં ઉછરેલ असात्म्य देशमें पुष्ट, **व्यालसूदितम् च** અને વાઘ વગેરેએ મારેલ પ્રાણીનું और व्याघ्र आदिने मारे प्राणीका, **मांसम्** માંસ मांस, **उत्सृजेत्** તજી દેવું જોઈએ त्याज्य है, **अतः** એથી इससे, **अन्यथा** જુદા પ્રકારનું विपरीत, **मांसम्** માંસ मांस, **हितम्** હિતકર हितकारी, **बृंहणम्** બૃંહણ કરનાર बृंहण, **बलवर्धनम्** અને બલ વધારનાર છે और बलवर्धक है ॥ ३११½ ॥

311-311½. The flesh of the animal which is dead, emaciated, very fat, old, too young, killed by poisoning, reared in unnatural habitat or killed by a tiger or snake, should be discarded. Flesh which is not of this description is wholesome, roborant and promotive of strength.

मांसरसस्य गुणाः—

**प्रीणनः सर्वभूतानां हृद्यो मांसरसः परम् ॥३१२॥**
**शुष्यतां व्याधिमुक्तानां कृशानां क्षीणरेतसाम् ।**
**बलवर्णार्थिनां चैव रसं विद्याद्यथामृतम् ॥३१३॥**

**मांसरसः** માંસરસ मांसरस, **सर्वभूतानाम्** સર્વ પ્રાણીઓને सब प्राणियोंको, **प्रीणनः** પ્રસન્ન કરનાર प्रसन्न करनेवाला, **परम्** અને પરમ और परम, **हृद्यः** હૃદ્ય છે हृद्य है, **शुष्यताम्** શોષરોગી सुखते हुए, **व्याधिमुक्तानाम्** તરતમાં સાજા થયેલ अभी रोगसे मुक्त हुए, **कृशानाम्** કૃશ कृश, **क्षीणरेतसाम्** ક્ષીણવીર્યવાળા क्षीणवीर्य, **बल-वर्ण-** અને બલ તથા વર્ણની तथा बल एवं वर्णको, **अर्थिनाम् च एव** ઇચ્છાવાળા પુરુષોને चाहनेवालोंके लिए **रसम्** માંસરસ मांसरसको, **अमृतम्** અમૃત अमृतके, **यथा** જેવો समान, **विद्यात्** જાણવો जाने ॥ ३१२-३१३ ॥

312-313. For all creatures the flesh-juice is most nourishing ( pleasant ) and cordial; and for those that are wasted, convalescing, emaciated, deficient in semen and desirous of enhanced strength and complexion, meat-juice is to be regarded as nectar itself.

**सर्वरोगप्रशमनं यथास्वं विहितं रसम् ।**
**विद्यात् स्वर्यं बलकरं वयोबुद्धीन्द्रियायुषाम् ॥३१४॥**

**यथास्वम्** વ્યાધિને અનુસરી रोगानुसार, **विहितम्** કહેવામાં આવેલા कहे हुए, **रसम्** માંસના રસને मांसरसको, **सर्वरोग-** ઘણા રોગોને बहुतसे रोगोंको, **प्रशमनम्** શાંત કરનાર शान्त करनेवाला, **स्वर्यम्** સ્વરવર્ધક स्वरकारक, **वयः-बुद्धि-** તથા વય-બુદ્ધિ वय-बुद्धि, **इन्द्रिय-** ઇન્દ્રિય इन्द्रिय, **आयुषाम्** અને આયુષ્યના एवं आयुके, **बलकरम्** બલને વધારનાર बलको बढ़ानेवाला, **विद्यात्** જાણવો जाने ॥ ३१४ ॥

314. Meat-juice administered as indicated is curative of most diseases. It should be regarded as promotive of voice and of youth, intelligence and sense faculties and longevity.

**व्यायामनित्याः स्त्रीनित्या मद्यनित्याश्च ये नराः ।**
**नित्यं मांसरसाहारा नातुराः स्युर्न दुर्बलाः ॥३१५॥**

**ये** જે जो, **नराः** પુરુષો पुरुष, **व्यायामनित्याः** નિત્ય વ્યાયામ કરનાર नित्य व्यायाम करनेवाले, **स्त्रीनित्याः** નિત્ય સ્ત્રી સેવન કરનાર नित्य स्त्रीका सेवन करनेवाले, **मद्यनित्याः च** અને નિત્ય મદ્ય સેવનારા છે और नित्य मद्यपान करनेवाले हैं, **नित्यम्** તેઓ नित्य

३११. व्यालसूदितम्—व्याडसूदितम् (ख.)

३१२. सर्वभूतानाम्—सर्वधातूनाम् (क. ग. घ. छ. द)

३१३. व्याधिमुक्तानाम्—व्याधियुक्तानाम् (छ. द.)

वे प्रतिदिन, मांसरसाहाराः માંસરસનો આહાર કરતાં मांसरसका आहार करने पर, आतुराः માંદા रोगी, न પડતા નથી नहीं होते, दुर्बलाः અને દુર્બળ और निर्बल, न स्युः થતા નથી नहीं होते ॥ ३१५ ॥

315. If those given to constant exercise and indulgence in women and wine take meat-juice daily, they will never fall ill or become weak.

वर्जनीयशाकानां निर्देशः —

**क्रिमिवातातपहतं शुष्कं जीर्णमनार्तवम् ।**
**शाकं निःस्नेहसिद्धं च वर्ज्यं यच्चापरिस्रुतम् ॥३१६॥**

क्रिमि- જીવડાં कृमि, वात- વાત वायु, आतप- અને તડકાથી और धूपसे, हतम् હીનવીર્ય हीनवीर्य, शुष्कम् સૂકાઈ ગયેલું शुष्क, जीर्णम् જૂનું जीर्ण, अनार्तवम् ઋતુ વગરનું बिना ऋतुके उत्पन्न, निःस्नेहसिद्धम् च સ્નેહ વગર સિદ્ધ કરેલું स्नेहके बिना सिद्ध किया, यत् च અને જેમાંથી तथा जिसमेंसे, अपरिस्रुतम् બાફવાનું પાણી કાઢી નાખવામાં આવ્યું ન હોય એવું उबालनेका जल निचोड़ा न गया हो ऐसा, शाकम् શાક शाक, वर्ज्यम् તજવા યોગ્ય છે त्याज्य है ॥ ३१६ ॥

316. Vegetables spoilt by maggots, wind or sun, or dried or decayed or grown out of season or cooked without unctuous substances, or with the boiled water not drained off, should be avoided.

वर्जनीयफलानां निर्देशः —

**पुराणमामं संक्लिष्टं क्रिमिव्यालहिमातपैः ।**
**अदेशकालजं क्लिन्नं यत्स्यात्फलमसाधु तत् ॥३१७॥**

पुराणम् જૂનું पुराना, आमम् કાચું कच्चा, क्रिमि- જીવડાં कृमि, व्याल- સર્પ सर्प, हिम- ટાઢ बर्फ, आतपैः અને તડકાથી और धूपसे, संक्लिष्टम् દૂષિત થયેલું नष्ट, अदेशकालजम् અયોગ્ય દેશમાં અને અયોગ્ય કાળમાં ઉત્પન્ન થયેલું स्वाभाविक देशके सिवा अन्यत्र उत्पन्न तथा बिना ऋतुके उत्पन्न, क्लिन्नम् તથા ક્લેદયુક્ત और गला हुआ, यत् જે जो, फलम् ફળ फल, स्यात् હોય होता है, तत् તે वह, असाधु સારું નથી उत्तम नहीं है ॥ ३१७ ॥

317. Fruits which are old or unripe or damaged by insects, snakes, frost or sunheat, and which are of improper season and place and putrified are to be regarded as not good for use.

वर्जनीयहरितानां निर्देशः, वर्जनीयमद्याम्बुगोरसादीनां निर्देशः—

**हरितानां यथाशाकं निर्देशः साधनादृते ।**
**मद्याम्बुगोरसादीनां स्वे स्वे वर्गे विनिश्चयः ॥३१८॥**

यथाशाकम् જે પ્રમાણે શાકના સંબંધમાં ત્યાજ્યતાનો નિર્દેશ કરવામાં આવ્યો છે, તે પ્રમાણે જ जिस तरह शाकके संबन्धमें त्याज्यताका निर्देश किया गया है उसी तरह, साधनात् પકવવાની विधि पकानेकी विधिके, ऋते સિવાય अतिरिक्त, हरितानाम् હરિતવર્ગની ત્યાજ્યતાનો हरितवर्गकी त्याज्यताका, निर्देशः નિર્દેશ છે निर्देश है, मद्य- મદ્ય मद्य, अम्बु- જલ जल, गोरसादीनाम् અને ગોરસ વગેરેનો और दूध आदिका, विनिश्चयः નિશ્ચય निश्चय, स्वे स्वे પોતપોતાના अपने अपने, वर्गे વર્ગમાં કરવામાં આવ્યો છે वर्गमें किया गया है ॥ ३१८ ॥

318. The rules regarding greens are the same as vegetables, except in the mode of preparation. As regards wine, water and milk etc, these have been described in their respective sections.

कीदृशमन्नानुपानं युक्तम्—

**यदाहारगुणैः पानं विपरीतं तदिष्यते ।**
**अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च ॥३१९॥**

यत् જે जो, पानम् પીણું अनुपान, आहारगुणैः આહારના ગુણોથી आहारके गुणोंके, विपरीतम् વિપરીત હોય विपरीत हो, तत् તે वह, इष्यते ઇષ્ટ છે इष्ट है, यत् च અને જે और जो, अन्न-अनुपानम् અન્નનું અનુપાન

३१८. मद्याम्बु-मद्याम्ल (प.)

अन्नका अनुपान, धातूनाम् ધાતુઓથી धातुओंके, विरोधि વિરુદ્ધ विरोधी, न ન હોય न हो, दृष्टम् તેનો સ્વીકાર કરવામાં આવ્યો છે उसका स्वीकार किया गया है ॥३१९॥

319. That drink which is opposite in quality to that of the food taken is the proper corrigent. Whatever drink is not deleterious to the body-elements is to be considered the right post-prandial drink.

**आसवानां समुद्दिष्टामशीतिं चतुरुत्तराम् ।**
**जलं पेयमपेयं च परीक्ष्यानुपिबेद्धितम् ॥३२०॥**

समुद्दिष्टाम् પહેલાં કહેવામાં આવેલા प्रथम कहे हुए, आसवानाम् चतुरुत्तराम् अशीतिम् ચોરાસી પ્રકારના આસવોની चौरासी प्रकारके आसवोंकी, पेयम् तथा પહેલાં કહેવામાં આવેલાં પીવા યોગ્ય पीनेयोग्य, अपेयम् च તેમજ પીવાને અયોગ્ય एवं पीनेमें अयोग्य, जलम् જલોની जलोंकी, परीक्ष्य પરીક્ષા કરીને परीक्षा करके, हितम् હિતકર हितकारी, अनुपिबेत् અનુપાન કરવું अनुपान बरतना चाहिए ॥३२०॥

320. One should take as his post-prandial drink that which is wholesome, having examined the eighty-four kinds of wines described previously and which water is fit to be drunk and which not.

वातादिप्रकोपेषु युक्तमनुपानम्, क्षये मांसरसस्यानुपानत्वम्—

**स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ।**
**कफेऽनुपानं रूक्षोष्णं क्षये मांसरसः परम् ॥३२१॥**

मारुते વાયુમાં वायुमें, स्निग्धोष्णम् સ્નિગ્ધ અને ઉષ્ણ स्निग्ध एवं उष्ण, पित्ते પિત્તમાં पित्तमें, मधुरशीतलम् મધુર અને શીતલ मधुर एवं शीतल, कफे તથા કફમાં तथा कफमें, रूक्षोष्णम् રૂક્ષ અને ઉષ્ણ रूक्ष एवं उष्ण, अनुपानम् અનુપાન अनुपान, शस्तम् શ્રેષ્ઠ છે उत्तम है, क्षये तथा ક્ષયમાં और क्षयमें, मांसरसः માંસરસનું અનુપાન मांसरसका अनुपान, परम् શ્રેષ્ઠ છે उत्तम है ॥३२१॥

321. Unctuous and hot drinks in conditions of vata, sweet and cooling ones in those of pitta, dry and hot ones in kapha, and meat-juices in wasting are considered the best.

उपवासादिषु पयसोऽनुपानत्वम्—

**उपवासाध्वभाष्यस्त्रीमारुतातपकर्मभिः ।**
**क्लान्तानामनुपानार्थं पयः पथ्यं यथाऽमृतम् ॥३२२॥**

उपवास- ઉપવાસ उपवास, अध्व- બહુ ચાલવું મુસાફરી, भाष्य- બહુ બોલવું अधिक बोलना, स्त्री- સ્ત્રીસેવન स्त्रीसेवन, मारुत- તથા પવન वायु, आतप- તડકો धूप, कर्मभिः અને કામથી और कार्यसे, क्लान्तानाम् થાકી ગયેલા મનુષ્યને थके हुए मनुष्योंके, अनुपानार्थम् અનુપાન માટે अनुपानके लिए, पयः દૂધ दूध, अमृतम् यथा અમૃત જેવું अमृतके समान, पथ्यम् પથ્ય છે पथ्य है ॥३२२॥

322. For those fatigued by fasting, travel, lecturing, society of women, wind, sun and exertion, milk as a post-prandial drink is as wholesome as nectar.

कृशानां सुरानुपानम्, स्थूलदेहानां मधूदकमनुपानम्—

**सुरा कृशानां पुष्ट्यर्थमनुपानं विधीयते ।**
**कार्श्यार्थं स्थूलदेहानामनु शस्तं मधूदकम् ॥३२३॥**

कृशानाम् કૃશ મનુષ્યોની कृश मनुष्योंकी, पुष्ट्यर्थम् પુષ્ટિ માટે पुष्टिके लिए, सुरा સુરાના सुराके, अनुपानम् અનુપાનનું अनुपानका, विधीयते વિધાન કરવામાં

३२०. समुद्दिष्टामशीतिं चतुरुत्तराम्—समुद्दिष्टा अशीतिश्चतुरुत्तरा (ग. ध.)
,, चतुरुत्तराम्—च गुणोत्तराम् (प.)

३२२. अध्वभाष्यस्त्री—अध्वभारस्त्री (थ.)
३२३. विधीयते—प्रशस्यते (क. ग. घ. छ. ज. ढ. त. थ.)
,, स्थूलदेहानाम्—अतिनिद्राणाम् (थ. प.)
,, अनुशस्तं मधूदकम्—अनुपानं मधूदकम् (ढ.)

આવે છે विधान किया जाता है, स्थूलदेहानाम् સ્થૂલ શરીરવાળાઓને स्थूल शरीरवालोंको, कार्श्यार्थम् કૃશ કરવા માટે कृश करनेके लिए, मधूदकम् મધૂદકનું मधूदकका, अनु અનુપાન अनुपान, शस्तम् પ્રશસ્ત છે उत्तम है ॥ ३२३ ॥

323. Sura wine is to be prescribed as a post-prandial drink for building up the emaciated. Hydromel (honey-water) is recommended as a post-prandial drink for reducing the corpulent.

मद्यानुपानस्याधिकारिणः—

**अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः ।**
**मद्यमांसोचितानां च मद्यमेवानुशस्यते ॥ ३२४॥**

तन्द्रा- તન્દ્રા तन्द्रा, शोक- શોક शोक, भय- ભય भय, क्लमैः તથા ક્લમથી एवं क्लमसे, अल्पाग्नीनाम् જેઓ મંદાગ્નિ હોય जिनको मंदाग्नि हो, अनिद्राणाम् જેઓને નિદ્રા આવતી ન હોય जिनको निंद न आती हो, मद्यमांसोचितानाम् च અને જેઓ મદ્ય તથા માંસના અભ્યાસીઓ હોય और जिनको मद्य तथा मांस सात्म्य हो उनके लिए, मद्यम् મદ્યનું मद्यका, एव જ ही, अनुशस्यते અનુપાન પ્રશસ્ત છે अनुपान उत्तम है ॥ ३२४ ॥

324. For those suffering from weak gastric fire and insomnia as the result of torpor, grief, fear and fatigue and for those accustomed to wine and meat, wine is prescribed as a post-prandial drink.

अनुपानस्य गुणाः—

**अथानुपानकर्मगुणान् प्रवक्ष्यामः-अनुपानं तर्पयति, प्रीणयति, ऊर्जयति, बृंहयति, पर्याप्तिमभिनिर्वर्तयति, भुक्तमवसादयति, अन्नसङ्घातं भिनत्ति, मार्दवमापादयति, क्लेदयति, जरयति, सुखपरिणामितामाशुव्यवायितां चाहारस्योपजनयतीति ॥ ३२५ ॥**

अथ હવે इसके आगे, अनुपानकर्म- અનુપાનનાં કર્મ अनुपानके कर्म, गुणान् અને ગુણો और गुणको, प्रवक्ष्यामः કહેશું कहेंगे, अनुपानम् અનુપાન अनुपान, तर्पयति તર્પણ કરે છે संतर्पण करता है, प्रीणयति પ્રસન્નતા કરે છે प्रसन्नता करता है, ऊर्जयति ઉત્સાહ આપે છે उत्साह देता है, बृंहयति બૃંહણ કરે છે बृंहण करता है, पर्याप्तिम् તૃપ્તિ तृप्ति, अभिनिर्वर्तयति કરે છે करता है, भुक्तम् ખાધેલ અન્નને खाये अन्नको, अवसादयति શિથિલ કરે છે शिथिल करता है, अन्नसङ्घातम् અન્નના સમૂહને अन्नके समूहको, भिनत्ति તોડે છે तोड़ता है, मार्दवम् મૃદુતા कोमलता, आपादयति લાવે છે उत्पन्न करता है, क्लेदयति ક્લેદ કરે છે क्लिन्न करता है, जरयति પચાવે છે पचाता है, आहारस्य અને આહારને एवं आहारका, सुख- સુખપૂર્વક सुखसे, परिणामिताम् પચનારો पच जाना, आशुव्यवायिताम् च અને શરીરમાં તુરત વ્યાપ્ત થનારો शीघ्र शरीरमें व्याप्त हो जाना, उपजनयति इति કરે છે उत्पन्न करता है ॥ ३२५ ॥

325. Now we shall speak of the qualities and actions of post-prandial drink. Post-prandial drink gives nourishment, pleasure, energy, roborance, sense of satisfaction, settles down the food eaten, breaks up the mass of food, imparts softness, liquefies, digests and brings about quick assimilation and diffusion in the body.

भवति चात्र—

**अनुपानं हितं युक्तं तर्पयत्याशु मानवम् ।**
**सुखं पचति चाहारमायुषे च बलाय च ॥३२६॥**

---

३२५. अथानुपानकर्मगुणान् प्रवक्ष्यामः—अथानुपानकर्म प्रवक्ष्यामि (ख.)
,, कर्मगुणान् प्रवक्ष्यामः—गुणकर्म वक्ष्यामि (ग.)

३२५. भुक्तमवसादयति—भक्तमवसादयति (ख.)
,, उपजनयति—जनयति (च.)

अत्र च આ વિષયમાં इस विषयमें, भवति શ્લોક છે કે श्लोक है कि, युक्तम् પ્રયોજેલું प्रयुक्त किया हुआ, हितम् હિતકર हितकारी, अनुपानम् અનુપાન अनुपान, मानवम् મનુષ્યને मनुष्यको, आशु જલદી शीघ्र, तर्पयति તૃપ્ત કરે છે तृप्त करता है, आहारम् च તથા આહારને एवं आहारको, आयुषे च આયુષ आयु, बलाय च અને બળની પ્રાપ્તિ માટે एवं बलकी प्राप्तिके लिए, सुखम् સુખેથી सुखपूर्वक, पचति પચાવે છે पचाता है ॥ ३२६ ॥

Here is a verse again :—

326. Post-prandial drink that is rightly administered satisfies the man immediately and digests the food happily and gives life and strength.

येषां जलानुपानं प्रतिषिद्धम्—

**नोर्ध्वाङ्गमारुताविष्टा न हिक्काश्वासकासिनः ।**
**न गीतभाष्याध्ययनप्रसक्ता नोरसि क्षताः ॥३२७॥**
**पिबेयुरुदकं भुक्त्वा तद्धि कण्ठोरसि स्थितम् ।**
**स्नेहमाहारजं हत्वा भूयो दोषाय कल्पते ॥३२८॥**

भुक्त्वा જમીને भोजन करके, उदकम् પાણી जल, ऊर्ध्वाङ्ग- ઉપલાં અંગોમાં ऊपरके अंगोमें, मारुत- વાયુના वायुका, आविष्टाः પ્રકોપવાળાઓએ प्रकोप होने पर, न ન नहीं, हिक्का- હેડકી हिक्का, श्वास- શ્વાસ श्वास, कासिनः અને ઉધરસવાળાઓએ और कासमें, न ન नहीं, गीत- ગીત गीत, भाष्य- ભાષણ भाषण, अध्ययन- અને ભણતરમાં तथा अध्ययनमें, प्रसक्ताः લાગેલાઓએ लगे रहनेवालोंको, न ન नहीं, उरसि क्षताः અને ઉર:ક્ષત-વાળાઓએ और उरःक्षतवालोंको, न ન नहीं, पिबेयुः પીવું જોઈએ पीना चाहिए, हि કારણકે क्योंकि, तत् તે પાણી वह पानी, कण्ठ-उरसि કંઠ અને છાતીમાં कंठ और उरमें, स्थितम् રહેલા स्थित, आहारजम् આહાર-જન્ય आहारजन्य, स्नेहम् સ્નેહનો स्नेहका, हत्वा નાશ કરી नाश करके, भूयः બહુ अधिक, दोषाय દોષ दोषको, कल्पते કરવા સમર્થ થાય છે करनेमें समर्थ होता है ॥ ३२७-३२८ ॥

३२८. हत्वा—गत्वा (च. ध.)

327-328. Neither those in whom the vata is provoked in the upper parts of the body nor those that suffer from hiccup, dyspnea or cough, nor those that are engaged in singing, lecturing or studying, nor those that are suffering from pectoral lesions should drink water after eating; for it takes away from the throat and chest the unctuous quality of the meal eaten and leads to great morbidity.

द्रव्याणां कार्त्स्न्येन नामनिर्देशस्याशक्यत्वादेकदेशेन कथनम्—

**अन्नपानैकदेशोऽयमुक्तः प्रायोपयोगिकः ।**
**द्रव्याणि न हि निर्देष्टुं शक्यं कार्त्स्न्येन नामभिः ॥३२९॥**

अयम् આ यह, अन्नपानैकदेशः અન્નપાનનો એક ભાગ अन्नपानका एक भाग, प्रायोपयोगिकः જે ઘણુંખરું ઉપયોગમાં આવે છે जो प्रायःकरके उपयोगमें लिया जाता है, उक्तः તે કહી બતાવ્યો છે वह कह दिया है, हि કારણકે क्योंकि, द्रव्याणि દ્રવ્યોનો द्रव्योंका, कार्त्स्न्येन સંપૂર્ણપણે संपूर्णतासे, नामभिः નામ લઈ લઈને पृथक् पृथक् नामद्वारा, निर्देष्टुम् નિર્દેશ કરવો निर्देश करना, न शक्यम् શક્ય નથી शक्य नहीं है ॥ ३२९ ॥

329. The foods and drinks that are generally in use are described; for it is not possible to indicate the totality of substances by their names.

अनुक्तानां द्रव्याणां गुणकर्मादीनां ज्ञाने उपायाः—

**यथा नानौषधं किंचिद्देशजानां वचो यथा ।**
**द्रव्यं तत्तत्तथा वाच्यमनुक्तमिह यद्भवेत् ॥३३०॥**

यथा જેથી क्योंकी, किंचित् કોઈપણ દ્રવ્ય कोई भी द्रव्य, अनौषधम् ઔષધ ન હોય એવું औषध न हो ऐसी

३२९. अन्नपानैक°—अनुपानैक° (ड. द. प.)
,, द्रव्याणि न हि—द्रव्यं तु न हि (क. ध. च. द.)

बात, न નથી नहीं है, यत् તેથી જેને જેને ततः जो जो, इह અહીં यहां, अनुक्तम् भवेत् ન કહ્યું હોય न कहा गया हो, तत् તે તે દ્રવ્યને उस उस द्रव्यको, यथा તેના સંબંધમાં જેવું उसके संबंधमें जैसा, देशजानाम् તે તે દેશના લોકોનું उस उस देशके मनुष्योंका, वचः કથન હોય कथन हो, तथा તે પ્રમાણે જ वैसा ही, वाच्यम् તેને કહેવું उसे कहना चाहिए ॥ ३३० ॥

330. Since there is no substance which may not be used as a medicine, the substances not spoken of here are to be assessed with reference to their qualities according to the opinion of the people in whose country they are found.

**चरः शरीरावयवाः स्वभावो धातवः क्रिया ।**
**लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ३३१**

अस्मिन् આ અન્નપાનના વિષયમાં इस अन्नपानके विषयमें, चरः દેશ અને ભક્ષ્ય देश और भक्ष्य, शरीरावयवाः શરીરના અવયવો शरीरके अवयव, स्वभावः સ્વભાવ स्वभाव, धातवः ધાતુઓ धातुएँ, क्रिया ક્રિયા क्रिया, लिङ्गम् સ્ત્રી, પુરુષ અથવા નપુંસક स्त्री, पुरुष अथवा नपुंसक, प्रमाणम् પ્રમાણ प्रमाण, संस्कारः સંસ્કાર संस्कार, मात्रा च અને માત્રાની और मात्राकी, परीक्ष्यते પરીક્ષા કરવામાં આવે છે परीक्षा की जाती है ॥ ३३१ ॥

331. An animal's food and habitat, body-parts, constitution, body elements, activity, sex, size, mode of preparation and measure are herein explained.

प्राणिनां देश-भक्ष्य-विशेषेण गुरुलाघवम्—

**चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः ।**
**जलजानूपजाश्चैव जलानूपचराश्च ये ॥ ३३२ ॥**
**गुरुभक्ष्याश्च ये सत्त्वाः सर्वे ते गुरवः स्मृताः ।**
**लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः ॥३३३॥**

३३१. चास्मिन्—चात्र (ज.)
३३३. सर्वे—प्रायः (ग.)

अनूप- આનૂપ आनूप, जल- જલ जल, आकाश- આકાશ आकाश, धन्व- અને જાંગલ और धन्व, आद्यः વગેરે દેશ आदि देश, भक्ष्यसंविधिः तथा ભક્ષ્ય तथा भक्ष्य, चरः એ ચર છે वह चर है, ये सत्त्वाः જે પ્રાણીઓ जो प्राणि, जलज- જલમાં જન્મેલાં जलज, आनूपजाः च एव અને આનૂપ દેશમાં જન્મેલાં और आनूपजन्य, जलानूपचराः च તેમજ જલચર અને આનૂપચર છે एवं जलचर तथा आनूपचर हैं, ये च અને જે પ્રાણીઓ और जो प्राणियों, गुरुभक्ष्याः ભારે ખોરાક ખાનારાં છે गुरु पदार्थ खाते हैं, ते सर्वे તે સર્વે वे सब, गुरवः પચવામાં ભારે गुरु, स्मृताः કહેવાય છે कहे गये हैं, धन्वजाः અને ધન્વદેશમાં ઉત્પન્ન થયેલાં और धन्वदेशमें उत्पन्न हुए, धन्वचारिणः તેમજ ધન્વદેશમાં ફરનારાં एवं धन्वदेशमें विचरनेवाले, लघुभक्ष्याः तु અને હલકું ખાનારાં પ્રાણીઓ और लघु पदार्थोंको खानेवाले प्राणि, लघवः પચવામાં હલકાં કહેવાય છે पचनेमें लघु कहे गये हैं ॥ ३३२-३३३ ॥

332-333. Wet-land, water, sky, arid-land and the feed constitute an animal's habitat and food. Animals which are native to water and wet-land or eat heavy things, are all to be regarded as heavy. The light feeders are light, such as those native to arid-land and moving in arid-land.

शरीरावयवेषु गुरुलाघवम्—

**शरीरावयवाः सक्थिशिरःस्कन्धादयस्तथा ।**
**सक्थिमांसाद्गुरुः स्कन्धस्ततः क्रोडस्ततः शिरः३३४**
**वृषणौ चर्म मेढ्रं च श्रोणी वृक्कौ यकृद्गुदम् ।**
**मांसाद्गुरुतरं विद्याद्यथास्वं मध्यमस्थि च ॥३३५॥**

३३४. सक्थि... ...शिरः—सक्थिमांसाद् गुरुतरं स्कन्धक्रोडशिरस्पदाम् (ग. च. भ.)
,, ततः शिरः—शिरस्पदम् (द.)
३३५. चर्म मेढ्रं—बस्तिमेढ्रं (प.)
,, श्रोणी वृक्कौ—श्रोणिवृक्कौ (च.)

यथा તથા तथा, सक्थि- સક્થિ सक्थि, शिरः- મસ્તક शिर, स्कन्ध- સ્કંધ स्कन्ध, आदयः વગેરે आदि, शरीरावयवाः શરીરના અવયવો છે शरीरके अवयव हैं, सक्थिमांसात् સક્થિના માંસથી सक्थिके मांससे, स्कन्धः સ્કન્ધ स्कन्ध, गुरुः ભારે છે भारी होता है, ततः તેનાથી स्कन्धसे, क्रोडः ક્રોડ क्रोड, ततः અને તેનાથી और क्रोडसे, शिरः મસ્તક ભારે છે शिर भारी है, यथास्वम् પોતપોતાના શરીરને અનુસરી જોતાં अपने अपने शरीरके अनुसार, मांसात् માંસથી मांसकी अपेक्षा, वृषणौ વૃષણ दोनों वृषण, चर्म ચર્મ चर्म, मेढ्रम् શિશ્ન मेढ्र, श्रोणी શ્રોણી श्रोणी, वृक्कौ બેઉ વૃક્ક दोनों वृक्क, यकृत् યકૃત્ यकृत्, गुदम् च ગુદા गुदा, मध्यम् મધ્ય દેહ मध्य देह, अस्थि च અને હાડકાં और अस्थि, गुरुतरम् વધારે ભારે अधिक भारी, विद्यात् જાણવાં जाने ॥ ३३४-३३५ ॥

334-335. The body-limbs are the thigh-bone, head, shoulder and others. The shoulder is heavier than the flesh of the thigh-bone. The chest is heavier than the shoulder and the head is heavier than the chest. The testes, skin, phallus, hips, kidneys, liver, rectum, trunk and bone-marrow are to be regarded as heavier than the flesh in the body of an animal.

स्वभाद् गुरुलाघवम्—

**स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः ।**
**स्वभावाद्गुरवो माषा वराहमहिषास्तथा ॥ ३३६ ॥**

मुद्गाः મગ मूंग, तथा તથા तथा, लावकपिञ्जलाः લાવાં અને કપિંજલ लाव और कपिञ्जल, स्वभावात् સ્વભાવથીજ स्वभावसे ही, लघवः હલકાં છે लघु हैं, माषाः અડદ उड़द, तथा તથા तथा, वराहमहिषाः સૂવર અને પાડા सूअर और भैंस, स्वभावात् સ્વભાવથીજ स्वभासे ही, गुरवः ભારે છે गुरु हैं ॥ ३३६ ॥

336. By nature green-gram is light; so, too, are quail and grey-partridge. Black-gram is by nature heavy and the fleshes of hog and buffalo too are likewise.

धातूनां गुरुलाघवम्—

**धातूनां शोणितादीनां गुरुं विद्याद्यथोत्तरम् ।**
**अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः ॥३३७॥**

शोणितादीनाम् રક્ત વગેરે रक्तादि, धातूनाम् ધાતુઓમાં धातुओंमें, यथोत्तरम् ઉત્તરોત્તર ધાતુને उत्तरोत्तर धातुको, गुरुम् વધારે ભારે अधिक गुरु, विद्यात् જાણવો जानना चाहिए, ये જે जो, बहुक्रियाः બહુ કામ કરનાર अधिक क्रियाशील, प्राणिनः પ્રાણીઓ હોય છે होते हैं, अलसेभ्यः તેઓ આળસુ પ્રાણીઓથી वे आलसी प्राणियोंकी, विशिष्यन्ते હલકાપણામાં ચઢી જાય છે अपेक्षा लघु होते हैं ॥ ३३७ ॥

337. The blood and the other body-elements should be regarded as increasingly heavy in their due order. Creatures that are given to much activity are lighter than those that are lethargic.

स्त्रीपुंसभेदेन गुरुलाघवम्—

**गौरवं लिङ्गसामान्ये पुंसां स्त्रीणां तु लाघवम् ।**
**महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा ॥ ३३८ ॥**

लिङ्गसामान्ये એકજ જાતનાં પ્રાણીઓમાં एक ही जातिके प्राणियोंमें, पुंसाम् નરનું नरका, गौरवम् ભારેપણું છે भारीपन है, स्त्रीणाम् तु અને સ્ત્રીનું और स्त्रीका, लाघवम् હલકાપણું છે हलकापन है, स्वजातौ પોતાની જાતમાં अपनी जातिमें, महाप्रमाणाः મોટા પ્રમાણવાળાં પ્રાણીઓ बड़े शरीरवाले प्राणि, गुरवः ગુરુ છે गुरु हैं, अन्यथा અને નાનાં શરીરવાળાં પ્રાણીઓ और छोटे शरीरवाले प्राणि, लघवः લઘુ હોય છે लघु होते हैं ॥ ३३८ ॥

338. Heaviness is the characteristic of the males in general, while lightness is the characteristic of females.

Those that are huge of size in each class are heavy and those that are otherwise are light.

संस्कारापेक्षं गुरुलाघवम्—

**गुरूणां लाघवं विद्यात् संस्कारात् सविपर्ययम् ।**
**व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डिकाः ३३९**

**संस्कारात्** સંસ્કારથી संस्कारसे, **गुरूणाम्** ગુરુ પદાર્થોનું गुरु पदार्थोंका, **लाघवम्** હલકાપણું हलकापन, **सविपर्ययम् विद्यात्** તથા હલકા પદાર્થોનું ભારેપણું જાણવું तथा हलके पदार्थोंका भारीपन जानना चाहिए, **यथा च** જેમકે जैसे कि, **व्रीहेः** ભારે વ્રીહિધાન્યમાંથી भारी व्रीहिधान्यसे, **लाजाः** સંસ્કારથી બનાવેલી લાજા संस्कारद्वारा बनाई हुई लाजा, **स्युः** વ્રીહિધાન્યથી હલકી થાય છે व्रीहिधान्यसे हलकी होती है, **सक्तूनाम्** અને હલકા સાથવામાંથી और हलके सत्तूओंसे, **सिद्धपिण्डिकाः** સંસ્કારથી બનાવેલાં પિંડિયાં સાથવાથી ભારે થાય છે संस्कार द्वारा बनाई हुई पिण्डिकायें सत्तूओंसे भारी होती हैं ॥ ३३९ ॥

339. The heavy articles, it should be known, become light by preparation and the light ones become heavy just as rice becomes light when roasted and roasted corn flour becomes heavy when prepared into balls and cooked.

गुरुलाघवे मात्रायाः कारणत्वम्—

**अल्पादाने गुरूणां च लघूनां चातिसेवने ।**
**मात्रा कारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥ ३४० ॥**

**गुरूणाम्** ગુરુ પદાર્થોને गुरु पदार्थोंके, **अल्प-आदाने** થોડા ખાવામાં थोड़ा खानेमें, **लघूनाम् च** તેમજ લઘુ પદાર્થોને एवं लघु पदार्थोंके, **अति-सेवने** અધિક ખાવામાં अधिक खानेमें, **द्रव्याणाम्** દ્રવ્યનું द्रव्यका, **गुरु-लाघवे** જે ગુરુપણું કે લઘુપણું થાય છે તેમાં जो गुरुत्व वा लघुत्व होता है उसमें, **मात्रा** માત્રાને જ मात्राको ही, **कारणम्** કારણ कारण, **उद्दिष्टम्** કહ્યું છે कहा है ॥ ३४० ॥

340. The proper measure of heavy and light articles of diet has been described as intake of heavy articles in small measure and of light ones in a large measure.

**गुरूणामल्पमादेयं लघूनां तृप्तिरिष्यते ।**
**मात्रां द्रव्याण्यपेक्षन्ते मात्रा चाग्निमपेक्षते ॥ ३४१ ॥**

**गुरूणाम्** ગુરુ પદાર્થો गुरु पदार्थोंका, **अल्पम्** થોડા પ્રમાણમાં थोड़ा, **आदेयम्** ખાવા सेवन करना चाहिए, **लघूनाम्** અને લઘુ પદાર્થો लघु द्रव्योंका, **तृप्तिः** તૃપ્તિપર્યંત तृप्तिपर्यंत, **इष्यते** ખાવા જોઈએ सेवन करना चाहिए, **द्रव्याणि** દ્રવ્યો द्रव्य, **मात्राम्** માત્રાની मात्राकी, **अपेक्षन्ते** અપેક્ષા રાખે છે अपेक्षा करते हैं, **मात्रा च** અને માત્રા और मात्रा, **अग्निम्** અગ્નિની अग्निकी, **अपेक्षते** અપેક્ષા રાખે છે अपेक्षा करती है ॥ ३४१ ॥

341. Hence heavy articles should be taken in small measure and light ones to full satisfaction. Articles of diet should be taken in proper measure and the proper measure should be in accordance with the strength of gastric fire.

मात्राया अग्निबलापेक्षित्वम्—

**बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः ।**
**अन्नपानेन्धनैश्चाग्निर्ज्वलति व्येति चान्यथा ॥ ३४२ ॥**

**बलम्** બળ बल, **आरोग्यम्** આરોગ્ય आरोग्य, **आयुः च** આયુષ્ય आयु, **प्राणाः च** અને પ્રાણ और प्राण, **अग्नौ** અગ્નિને ये अग्निके, **प्रतिष्ठिताः** આશ્રયે રહેલા છે आश्रित हैं, **अग्निः च** અને અગ્નિ और अग्नि, **अन्नपान-इन्धनैः** અન્નપાનરૂપ બળતણથી अन्नपानरूप

३३९. सिद्धपिण्डिकाः—सिद्धपिण्डकाः (घ.)

३४१. मात्रां द्रव्याण्यपेक्षन्ते—मात्रामपेक्षते द्रव्यम् (च. थ.)

३४२. ज्वलति व्येति चान्यथा—दीप्यते शाम्यतेऽन्यथा (क. ग. घ. च. थ. ब.)

इन्धनसे, ज्वलति પ્રદીપ્ત રહે છે जलती रहती है; अन्यथा च અને ન મળવાથી और इसके न मिलनेसे, व्येति ક્ષીણ થાય છે बुझ जाती है ॥ ३४२ ॥

342. Strength, health, longevity and the vital breath are dependent on the state of the gastric fire, and the gastric fire burns, fed by the fuel of food and drink, or dwindles when deprived of them.

गुरुलाघवचिन्ता यैः कार्या यैश्च न कार्या—

**गुरुलाघवचिन्तेयं प्रायेणाल्पबलान् प्रति ।**
**मन्दक्रियाननारोग्यान् सुकुमारान्सुखोचितान् ३४३**

प्रायेण ઘણું કરીને प्रायः करके, अल्पबलान् અલ્પ બળવાળા अल्प बलवाले, मन्दक्रियान् ધીમું કામ કરનાર मन्दक्रियाशील, अनारोग्यान् આરોગ્યરહિત रोगी, सुकुमारान् કોમળતાવાળા सुकुमार, सुखोचितान् प्रति અને સુખના અભ્યાસીઓ માટે तथा आरामकी जिन्दगी बितानेवालोंके लिए, इयम् આ इस, गुरुलाघव- ગુરુ અને લઘુનો गुरु और लघुका, चिन्ता વિચાર છે विचार है ॥ ३४३ ॥

343. This consideration of heavy and light articles is with reference to those that are generally weak, indolent, unhealthy, delicate of health and given to luxury.

**दीप्ताग्नयः खराहाराः कर्मनित्या महोदराः ।**
**ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरुलाघवम् ॥३४४॥**

ये જે जिन, नराः મનુષ્યો मनुष्योंकी, दीप्ताग्नयः પ્રદીપ્ત અગ્નિવાળા अग्नि दीप्त है, खर-आहाराः કઠોર પદાર્થ ખાનારા जो कठिन भोजन करनेवाले हैं, कर्म-नित्याः નિત્ય કામ કરનાર परिश्रमी हैं, महोदराः અને મોટાં પેટવાળા છે और विशाल उदरवाले हैं, तान् તેઓની उनके, प्रति બાબતમાં विषयमें, गुरुलाघवम् ગુરુતા અને લઘુતા गुरुलघुका भाव, अवश्यम् અવશ્ય अवश्य, न चिन्त्यम् વિચાર કરવા યોગ્ય નથી विचारणीय नहीं है ॥ ३४४ ॥

344. With reference to those whose digestive fire is inflamed, who are accustomed to hard articles of diet, who are given to constant labour and have huge capacity for the consumption of food, the consideration of heavy and light qualities of things is not necessary.

हितान्नपानसेवायाः फलम्—

**हिताभिर्जुहुयान्नित्यमन्तरग्निं समाहितः ।**
**अन्नपानसमिद्भिर्ना मात्राकालौ विचारयन् ॥३४५॥**

ना પુરુષે पुरुषको, मात्राकालौ માત્રા અને કાળનો मात्रा एवं कालका, विचारयन् વિચાર કરી विचार करते हुए, समाहितः સાવધાન થઈ सावधान होकर, अन्तरग्निम् જઠરાગ્નિમાં अन्तरग्निमें, हिताभिः હિતકર हितकर, अन्नपान- અન્નપાનરૂપ अन्नपानरूप, समिद्भिः સમિધવડે समिधाओंसे, नित्यम् નિત્ય नित्य, जुहुयात् હોમ કરવો જોઈએ हवन करना चाहिए ॥ ३४५ ॥

345. The self-controlled man should always feed his gastric fire with the fuel of wholesome food and drink, mindful of the consideration of measure and time.

**आहिताग्निः सदा पथ्यान्यन्तरग्नौ जुहोति यः ।**
**दिवसे दिवसे ब्रह्म जपत्यथ ददाति च ॥३४६॥**
**नरं निःश्रेयसे युक्तं सात्म्यज्ञं पानभोजने ।**
**भजन्ते नामयाः केचिद्भाविनोऽप्यन्तरादृते ॥३४७॥**

आहिताग्निः સાત્મ્યથી અગ્નિને વ્યવસ્થિત ટકાવી રાખનાર सात्म्यसे व्यवस्थायुक्त अग्निवाला, यः જે મનુષ્ય जो मनुष्य, अन्तरग्नौ અંદરના અગ્નિમાં अन्तरग्निमें, सदा હંમેશાં सदा, पथ्यानि પથ્ય પદાર્થો पथ्य वस्तुओंसे,

३४३. प्रायेणाल्पबलान्–प्रायेणाल्पधनान् (प.)
,, मन्दक्रियाननारोग्यान्–मन्दक्रियानलारोग्यान् (क.)
,, ,, –मन्दकर्मानलारोग्यान् (ग. च.)

३४६. जपति–वजति (ग.)

जुहोति હોમે છે हवन करता है, दिवसे दिवसे રોજ રોજ प्रतिदिन, ब्रह्म ઓંકાર આદિમંત્રનો ओंकार आदि मंत्रका, जपति જપ કરે છે जप करता है, अथ ददाति च અને દાન દેછે और दान करता है, निःश्रेयसे તે કલ્યાણ માટે कल्याणके लिए, युक्तम् લાગેલા लगे, पानभोजने અને પીવા તથા ખાવામાં और खानपानमें, सात्म्यज्ञम् સાત્મ્યને જાણનાર सात्म्यको समझनेवाले, नर પુરુષને उस मनुष्यको, अन्तरात् ખાસ કારણ विशेष कारणके, ऋते વગર बिना, भाविनः ભવિષ્યમાં થનારા भविष्यमें होनेवाले, केचित् કોઈ कोई, अपि પણ भी, आमयाः રોગ रोग, न भजन्ते થતા નથી नहीं होते ॥ ३४६-३४७॥

346-347. The man whose gastric fire is well tended, who feeds it duly with wholesome diet, who is given to daily meditation, charity and the pursuit of spiritual salvation, and who takes food and drinks that are homologatory to him, will not fall victim to diseases even in his succeeding birth except for special reasons.

**षट्त्रिंशतं सहस्राणि रात्रीणां हितभोजनः ।**
**जीवत्यनातुरो जन्तुर्जितात्मा संमतः सताम् ॥३४८॥**

हितभोजनः હિતકર ભોજન કરનાર हितभोजन करनेवाला, जितात्मा જિતેન્દ્રિય जितेन्द्रिय, जन्तुः પુરુષ पुरुष, सताम् સત્પુરુષોનું साधु जनोंसे, संमतः સંમાન પામી पूजित, अनातुरः તેમજ નીરોગી બનીને एवं नीरोगी होकर, रात्रीणाम् षट्त्रिंशतम् છત્રીસ હજાર રાત્રિઓ અર્થાત્ સો વર્ષ સુધી छत्तीस हजार रात्रियों अर्थात् सौ वर्षतक, जीवति જીવે છે जीता है ॥ ३४८॥

348. The disciplined man that practises wholesome diet lives for a period of 36000 nights (hundred years), blessed by good men and free from disease.

अन्नप्रशंसा—

**प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ।**
**वर्णः प्रसादः सौस्वर्यं जीवितं प्रतिभा सुखम् ॥३४९॥**
**तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम् ।**

अन्नम् અન્ન अन्न, प्राणभृताम् પ્રાણધારીઓના प्राणधारियोंके लिए, प्राणाः પ્રાણ છે प्राणरूप है, अन्नम् અન્ન તરફ अन्नके पीछे, लोकः લોક संसार, अभिधावति દોડે છે दोड़ता है, वर्णः વર્ણ वर्ण, प्रसादः પ્રસન્નતા प्रसन्नता, सौस्वर्यम् સુંદર સ્વર उत्तम स्वर, जीवितम् જીવિત जीवन, प्रतिभा પ્રતિભા प्रतिभा, सुखम् સુખ सुख, तुष्टिः સંતોષ तुष्टि, पुष्टिः પુષ્ટિ पुष्टि, बलम् બલ बल, मेधा અને મેધા और मेधा, सर्वम् એ સર્વ ये सब, अन्ने અન્નમાં अन्नमें, प्रतिष्ठितम् રહેલ છે आश्रित हैं ॥ ३४९½ ॥

349-349½. The life of all living things is food and all the world seeks food. Complexion, clarity, good voice, long life, understanding, happiness, satisfaction, growth, strength and intelligence are all established in food.

**लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम् ॥३५०॥**
**कर्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम् ।**

वृत्तौ વૃત્તિ માટે जीवननिर्वाहके लिए, यत् જે जो, लौकिकम् વ્યાવહારિક કર્મ लौकिक कर्म, स्वर्गतौ સ્વર્ગની પ્રાપ્તિ માટે स्वर्गकी प्राप्तिके लिए, यत् च જે जो, वैदिकम् વૈદિક કર્મ वैदिक कर्म, अपवर्गे અને મોક્ષને માટે और मोक्षके लिए, यत् च જે जो, कर्म કર્મ कर्म, उक्तम् કહ્યું છે कहा है, तत् च अपि તે બધું वे सब, अन्ने અન્ન ઉપરજ अन्नमें ही, प्रतिष्ठितम् આધાર રાખે છે आश्रित हैं ॥ ३५०½ ॥

350. Whatever is beneficial for worldy happiness, whatever pertains to the vedic sacrifices leading to heaven and whatever action leads to

३४८. षट्त्रिंशतं—षट्त्रिंशच्च (ग. च,)

३४९. सौस्वर्यं—ऐश्वर्यं (ग.)
३५०. स्वर्गतौ—सद्वृत्तं (द.)

spiritual salvation is said to be established in food.

अध्यायार्थसंग्रहः —

तत्र श्लोकः—

**अन्नपानगुणाः साग्र्या वर्गा द्वादश निश्चिताः ॥३५१॥**
**सगुणान्यनुपानानि गुरुलाघवसंग्रहः ।**
**अन्नपानविधावुक्तं तत् परीक्ष्यं विशेषतः ॥३५२॥**

तत्र તે વિષયમાં उस विषयमें, श्लोकः ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, अन्नपानगुणाः અન્નપાનના ગુણો अन्नपानके गुण, निश्चिताः અને નક્કી કરેલા और निश्चित, साग्र्याः પ્રધાન દ્રવ્યોવાળા प्रधान द्रव्योंवाले, द्वादश બાર बारह, वर्गाः વર્ગ वर्ग, सगुणानि ગુણસહિત गुणोंके साथ, अनुपानानि અનુપાનો अनुपान, गुरु-लाघव ગુરુતા અને લઘુતાનો गुरु और लघुको, संग्रहः સંગ્રહ संग्रह, विशेषतः ખાસ કરીને विशिष्टतासे, परीक्ष्यम् પરીક્ષા કરવામાં આવેલા ગુણો परीक्षाके विषयभूत गुण, तत् તે સઘળું वे सब, अन्नपानविधौ આ 'અન્નપાનવિધિ' અધ્યાયમાં इस 'अन्नपान-विधि' अध्यायमें, उक्तम् કહી દેખાડયું છે कहे गये हैं ॥ ३५१-३५२ ॥

Here is the recapitulatory verse.

351-352. The characteristics of eats and drinks, the twelve classifications of articles of diet together with the foremost of them, the post-prandial drinks with their characteristics and the statement in brief regarding heaviness and lightness of the articles of diet, have all been described in this chapter on diet and dietetics. This subject is worthy of special study.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽन्नपानविधिर्नाम सप्तविंशोऽध्यायः ॥२७॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, श्लोकस्थाने સૂત્રસ્થાન વિષે सूत्रस्थानमें, अन्नपानविधिः 'અન્નપાનવિધિ' 'अन्नपानविधि', नाम નામનો नामका, सप्तविंशः સતાવીસમો सताईसवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ २७ ॥

27. Thus in the section on General Principles in the treatise compiled by Agnivesa and revised by Caraka, the twenty-seventh chapter entitled "The Regimen of Diet and Dietetics" is completed.

## अष्टाविंशोऽध्यायः ।

### અઠ્ઠાવીસમો અધ્યાય अध्याय अट्ठाईसवाँ

### Chapter XXVIII

विविधाशितपीतीयाध्यायोपक्रमः —

**अथातो विविधाशितपीतीयमध्यायं व्याख्यास्यामः ॥१॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

अथ अतः હવે અહીંથી अब आगे, विविधाशितपीतीयम् 'વિવિધાશિતપીતીય' નામના 'विविधाशितपीतीय' नामके, अध्यायम् અધ્યાયનું अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The various kinds of foods and drinks".

2. Thus declared the worshipful Atreya.

३५१. निश्चिताः—दर्शिताः (च.)

३५२. तत परीक्ष्यम्—तत्परीक्ष्य (च. व.)

१. अशितपीतीयम्—अशितपानीयम् (ग.)

अशितपीतादीनां फलम्, धातव एव धातूनामाहारः —

**विविधमशितं पीतं लीढं खादितं जन्तोर्हितमन्तरग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानं कालवदनवस्थितसर्वधातुपाकमनुपहतसर्वधातूष्ममारुतस्रोतः केवलं शरीरमुपचयबलवर्णसुखायुषा योजयति शरीरधातूनूर्जयति च। धातवो हि धात्वाहाराः प्रकृतिमनुवर्तन्ते ॥३॥**

**जन्तोः** પ્રાણીને मनुष्यके, **हितम्** હિતકર हितकारी, **विविधम्** વિવિધપ્રકારનું नाना प्रकारका, **अशितम्** ખાધેલું ભોજ્ય चावलादि भोज्य, **पीतम्** પીધેલું पेय दुग्धादि, **लीढम्** ચાટેલું चटनीआदि लेह, **खादितम्** જમેલું અને भक्ष्य और लड्डूआदि भक्ष्य, **अन्तरग्नि-** અંતરના અગ્નિથી जठराग्निसे, **संधुक्षित-** પ્રદીપ્ત प्रदीप्त, **बलेन** બળવાળી बलशाली, **यथास्वेन** પોતપોતાની अपनी अपनी, **ऊष्मणा** ગરમીથી गरमीसे, **सम्यक्** સરખી રીતે अच्छी प्रकार, **विपच्यमानम्** વિપાક પામતાં पकता हुआ, **कालवत्** કાળની પેઠે कालके समान, **अनवस्थित-** અવિશ્રાંતપણે अविश्रान्त गतिसे, **सर्वधातुपाकम्** સર્વ ધાતુઓના પાક જેમાં થયા કરે છે એવા सब धातुओंका पाक जिसमें होता रहता है, **अनुपहत-** હાનિરહિત છે हानिरहित है, **सर्वधातूष्म-** સર્વ ધાતુઓની ગરમી सब धातुओंकी गरमी, **मारुतस्रोतः** તથા વાયુ અને સ્રોતો જેમાં એવા एवं वायु और स्रोतवाले, **केवलम्** આખા संपूर्ण, **शरीरम्** શરીરને शरीरमें, **उपचय-** પુષ્ટિ वृद्धि, **बल-** બલ बल, **वर्ण-** વર્ણ वर्ण, **सुख-** સુખ सुख, **आयुषा** અને આયુષ્યથી और आयुसे, **योजयति** યુક્ત કરે છે युक्त करता है, **शरीरधातून्** અને શરીરના ધાતુઓને एवं शरीरकी धातुओंका, **ऊर्जयति च** પોષે છે पोषण करता है, **हि** કારણકે क्योंकि, **धात्वाहाराः** ધાતુઓનો આહાર કરીને धातुओंका आहार करती हुई, **धातवः** ધાતુઓ धातुएं, **प्रकृतिम्** સમ અવસ્થામાં अपनी प्रकृतिमें, **अनुवर्तन्ते** રહે છે बनी रहती हैं ॥ ३ ॥

3. The various kinds of wholesome nourishment taken by man viz., eatables, drinks, electuaries and masticables, on being well-digested by the heat of the particular body-element concerned, whose strength is kept active by the (inner) gastric fire, imbue the entire body wherein the metabolic processes of all the body-elements are constantly going on like the process of time and wherein the circulation of the body-elements and the body-channels is unimpeded—with growth, strength, complexion, happiness and life as well as replenish the body-elements. It is by being nourished with corresponding elements that the body-elements are able to maintain the body in the normal condition.

आहारस्य परिणामः —

**तत्राहारप्रसादाख्यो रसः किट्टं च मलाख्यमभिनिर्वर्तते। किट्टात् स्वेदमूत्रपुरीषवातपित्तश्लेष्माणः कर्णाक्षिनासिकास्यलोमकूपप्रजननमलाः केशश्मश्रुलोमनखादयश्चावयवाः पुष्यन्ति।**

**तत्र** તેમાં इनमें, **आहारप्रसादाख्यः** આહારનો પ્રસાદ કહેવાતો आहारसे प्रसादभागरूप, **रसः** રસ रस, **मलाख्यम्** અને મલ કહેવાતો और मलरूप, **किट्टम् च** કિટ્ટ किट्ट, **अभिनिर्वर्तते** બને છે बनता है, **किट्टात्** કિટ્ટથી किट्टसे, **स्वेद-मूत्र-** પરસેવો-મૂત્ર स्वेद-मूत्र, **पुरीष-** મળ मल, **वात-** વાત वात, **पित्त-** પિત્ત पित्त, **श्लेष्माणः** કફ कफ, **कर्ण-** કાન कान, **अक्षि-** આંખ आँख, **नासिका-** નાક नासिका, **आस्य-** મુખ मुख, **लोमकूप-** રોમકૂપ लोमकूप, **प्रजननमलाः** તથા જનનેન્દ્રિયના મળ तथा जननेन्द्रियके मल, **केश-** અને વાળ एवं केश, **श्मश्रु-** દાઢીમૂછ श्मश्रु, **लोम-** રુંવાડાં लोम, **नख-** નખ नख, **आदयः** વગેરે आदि, **अवयवाः च** અવયવો अवयव, **पुष्यन्ति** પોષણ પામે છે पुष्ट होते हैं;

३. शरीरधातूनूर्जयति—शरीरधातनर्जयति अपि दूषयति (प.)

४. तत्रा... .... ...निर्वर्तते। —तत्राहारः प्रसादाख्यं रसं किट्टं च मलाख्यमभिनिर्वर्तयति।

,, नासिकास्य—नासास्य (च.)

the throat, the blood, the semen, the vital essence and the rectum.

तानीन्द्रियाणि विज्ञानं चेतनाहेतुमामयान् ।
जानीते यः स वै विद्वान् प्राणाभिसर उच्यते ॥४॥

तानि તેઓને इनको, इन्द्रियाणि ઇન્દ્રિયોને इन्द्रियों-को, विज्ञानम् વિજ્ઞાનને विज्ञानको, चेतनाहेतुम् આત્માને आत्माको, आमयान् અને રોગોને तथा रोगोंको, यः જે जो, जानीते જાણે છે जानता है, सः वै તે वह, विद्वान् વિદ્વાન विद्वान, प्राणाभिसरः પ્રાણાભિસર प्राणाभिसर, उच्यते કહેવાય છે कहाता है ॥ ४ ॥

4. He who understands these ten resorts, the sense organs, the intellect, the spirit and the diseases (in all their aspects)—that learned man alone is said to be the saviour of life.

द्विविधभिषजः—

द्विविधास्तु खलु भिषजो भवन्त्यग्निवेश !
प्राणानामेकेऽभिसरा हन्तारो रोगाणां, रोगाणा-मेकेऽभिसरा हन्तारः प्राणानामिति ॥ ५ ॥

अग्निवेश ! હે અગ્નિવેશ ! हे अग्निवेश !, भिषजः तु खलु વૈદ્યો તો वैद्य तो, द्विविधाः બે જાતના दो प्रकारके, भवन्ति થાય છે होते हैं, एके કેટલાએક વૈદ્યો कई एक वैद्य, प्राणानाम् પ્રાણોને प्राणोंको, अभिसराः લાવનારા लानेवाले, रोगाणाम् અને રોગોને और रोगों-का, हन्तारः હણનારા હોય છે नाश करनेवाले होते हैं, एके અને કેટલાએક और कई एक, रोगाणाम् રોગોને रोगोंको, अभिसराः લાવનારા लानेवाले, प्राणानाम् च અને પ્રાણોને और प्राणोंको, हन्तारः इति હણનારા હોય છે नष्ट करनेवाले होते हैं ॥ ५ ॥

5. Of two kinds, O Agnivesa, are physicians. Saviours of life and destroyers of diseases are the one kind. The other kind are the votaries of diseases and destroyers of life."

४ चेतनाहेतुमामयान्–चेतनाहेतुमामयम् । (ख.)

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—
भगवंस्ते कथमस्माभिर्वेदितव्या भवेयुरिति ॥ ६ ॥

एवंवादिनम् આ પ્રમાણે કહેતા इस प्रकार कहते हुए, भगवन्तम् ભગવાન भगवान, आत्रेयम् આત્રેયને आत्रेयको, अग्निवेशः અગ્નિવેશે अग्निवेशने, उवाच કહ્યું कहा, भगवन् ભગવન્ ! हे भगवन् ! ते તેઓને इनको, अस्माभिः અમે हम लोग, कथम् કેવી રીતે किस प्रकारसे, वेदितव्याः भवेयुः इति જાણી શકીએ जानें ॥ ६ ॥

6. Unto the worshipful Atreya thus discoursing, Agnivesa said, "O! worshipful one, how are they to be recognised by us?"

प्राणाभिसरभिषजां लक्षणम्—

भगवानुवाच—य इमे कुलीनाः पर्यवदातश्रुताः परिदृष्टकर्माणो दक्षाः शुचयो जितहस्ता जितात्मानः सर्वोपकरणवन्तः सर्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञाश्च ते ज्ञेयाः प्राणानामभिसरा हन्तारो रोगाणां;

भगवान् ભગવાને भगवान आत्रेयने, उवाच કહ્યું कहा, ये इमे જે વૈદ્યો जो वैद्य, कुलीनाः કુલીન कुलीन, पर्यवदात-श्रुताः વિશુદ્ધ શાસ્ત્રજ્ઞાનવાળા विशुद्ध शास्त्र-ज्ञानवाले, परिदृष्टकर्माणः ચિકિત્સા કર્મને સારી રીતે જોનારા चिकित्सा कर्मको अच्छी तरहसे देखनेवाले, दक्षाः ચતુર चतुर, शुचयः પવિત્ર पवित्र, जितहस्ताः શસ્ત્ર-ક્રિયામાં સ્થિર હાથવાળા शस्त्रक्रियामें स्थिर हाथवाले, जितात्मानः જિતેન્દ્રિય जितेन्द्रिय, सर्वोपकरणवन्तः સર્વ સાધનવાળા संपूर्णसाधनसम्पन्न, सर्वेन्द्रियोपपन्नाः સર્વ ઇન્દ્રિયોથી યુક્ત सब इन्द्रियोंसे युक्त, प्रकृतिज्ञाः પ્રકૃતિ જાણનારા प्रकृतिको समझनेवाले, प्रतिपत्तिज्ञाः च અને તાત્કાલિક ઉપચાર જાણનારા હોય છે और तात्कालिक उपचारके जाननेवाले होते हैं, ते તેઓને उनको, प्राणानाम् પ્રાણોને प्राणोंके, अभिसराः લાવનારા लानेवाले, रोगा-णाम् અને રોગોને और रोगोंका, हन्तारः હણનારા नाश करनेवाले, ज्ञेयाः જાણવા जानना चाहिए;

७. प्रतिपत्तिज्ञाश्च ते ज्ञेयाः–प्रतिपत्तिज्ञास्ते (ग.)

7-(1). The worshipful one answered, "They are well-born, of wide learning, of wide practical experience, skilful, pure, practised of hand, self-controlled, fully equipped with all the appurtenances (of healing), in full possession of their faculties, conversant with the normal course of nature; able to take prompt and appropriate decisions—these are to be known as the saviours of life and destroyers of diseases.

**तथाविधा हि केवले शरीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः, सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानां च रोगाणां समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषज्ञाने व्यपगतसंदेहाः, त्रिविधस्यायुर्वेदसूत्रस्य ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः,**

हि કારણકે क्योंकि, तथाविधाः તેવી જાતના વૈદ્યો इस प्रकारके वैद्य, केवले સંપૂર્ણ संपूर्ण, शरीरज्ञाने શરીરજ્ઞાનમાં शरीरविज्ञानमें, शरीर- अभिनिर्वृत्तिज्ञाने શરીરની રચનાના જ્ઞાનમાં शरीररचनाविज्ञानमें, प्रकृति- विकारज्ञाने च તથા પ્રકૃતિ અને તેના વિકારના જ્ઞાનમાં तथा प्रकृति और विकारके ज्ञानमें, निःसंशयाः સંશયરહિત હોય છે सन्देहरहित होते हैं, सुखसाध्य- સુખસાધ્ય सुखसाध्य, कृच्छ्रसाध्य- કષ્ટસાધ્ય कृच्छ्रसाध्य, याप्य- યાપ્ય याप्य, प्रत्याख्येयानाम् અને પ્રત્યાખ્યેય तथा प्रत्याख्येय, रोगाणाम् च રોગોના रोगोंके, समुत्थान- નિદાન कारण, पूर्वरूप- પૂર્વરૂપ पूर्वरूप, लिङ्ग- લક્ષણ लक्षण, वेदना- વેદના वेदना, उपशय- અને ઉપશયના और उपशयके, विशेषज्ञाने વિશેષ જ્ઞાનમાં विशेष ज्ञानमें, व्यपगतसन्देहाः સંદેહરહિત હોય છે सन्देहरहित होते हैं, ससंग्रह-व्याकरणस्य સંગ્રહ અને વિસ્તારયુક્ત संग्रह और विस्तारसे युक्त, सत्रिविध- औषधग्रामस्य તથા ત્રણ પ્રકારના ઓષધસમૂહથી યુક્ત तथा तीन प्रकारके औषधसमूहसे युक्त, त्रिविधस्य ત્રણ પ્રકારના तीन प्रकारके, आयुर्वेदसूत्रस्य આયુર્વેદનાં સૂત્રો પર आयुर्वेदके सूत्रों पर, प्रवक्तारः પ્રવચન કરનારા હોય છે प्रवचन करनेवाले होते हैं;

७. शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च–शरीरनिर्वृत्तिज्ञाने प्रकृतिविकृतिविज्ञाने च (ठ.)
,, प्रकृतिविकारज्ञाने–प्रकृतिविकृतिज्ञाने (क. च. छ.)
,, विशेषज्ञाने–विशेषविज्ञाने (ज.)

7-(2). Indeed it is persons of such description that are never at fault with regard to their understanding of the entire body (anatomy), the growth and function of its parts (physiology) and its condition in health and disease (pathology) It is these again that are never perplexed in their understanding of the distinctions in etiological factors, premonitory symptoms, actual signs and symptoms, descriptions of pain and the homologatory signs (i. e. full clinical picture of the disease) in relation to the different classes of diseases easily curable, formidable, palliable and irremediable (i. e. prognosis). It is these that are the exponents of the three departments of the science of life (viz. etiology, symptomatology and therapeutics) both in brief and *in extenso*, as well as of the three categories of drugs (animal, vegetable and mineral).

**पञ्चत्रिंशतो मूलफलानां चतुर्णां च स्नेहानां पञ्चानां च लवणानामष्टानां च मूत्राणामष्टानां च क्षीराणां क्षीरत्वग्वृक्षाणां च षण्णां शिरोविरेचनादेश्च पञ्चकर्माश्रयस्यौषधगणस्याष्टाविंशतेश्च**

७. स्नेहानां–महास्नेहानां (घ. च. छ. झ.)

**यवागूनां द्वात्रिंशत्चूर्णप्रदेहानां षण्णां च विरेचनशतानां पञ्चानां च कषायशतानां प्रयोक्तारः,**

पञ्चत्रिंशतः च પાંત્રીસ पैंतीस प्रकारके, मूलफलानाम् મૂળ તથા ફળોના मूल एवं फलोंका, चतुर्णाम् च ચાર પ્રકારના चार प्रकारके, स्नेहानाम् સ્નેહોના स्नेहोंका, पञ्चानाम् च પાંચ પ્રકારના पांच प्रकारके, लवणानाम् લવણોના लवणोंका, अष्टानाम् च આઠ પ્રકારનાં आठ प्रकारके, मूत्राणाम् મૂત્રોના मूत्रोंका, अष्टानाम् च આઠ પ્રકારનાં आठ प्रकारके, क्षीराणाम् દૂધના दूधका, षण्णाम् च અને ૭ જાતના और छः, क्षीरत्वग्वृक्षाणाम् દૂધવાળાં અને છાલની પ્રધાનતાવાળાં વૃક્ષોના क्षीरवाले और त्वचाप्रधान वृक्षोंका, शिरोविरेचनादेः च શિરોવિરેચનાદિક કર્મના शिरोविरेचनादि कर्मका, पञ्चकर्माश्रयस्य च પંચકર્મના આધારરૂપ पञ्चकर्मके उपयोगी, औषधगणस्य ઔષધસમૂહના औषधसमूहका, अष्टाविंशतेः च તથા અઠ્ઠાવીસ और अट्ठाईस प्रकारकी, यवागूनाम् યવાગૂઓના यवागूओंका, द्वात्रिंशतः च બત્રીસ बत्तीस प्रकारके, चूर्णप्रदेहानाम् ચૂર્ણપ્રદેહોના चूर्णप्रदेहोंका, षण्णाम् च विरेचनशतानाम् છસો વિરેચનોના छः सौ विरेचनोंका, पञ्चानाम् च कषायशतानाम् અને પાંચસો કષાયોના और पांचसौ कषायोंका, प्रयोक्तारः પ્રયોગ કરવાવાળા प्रयोग करनेवाले;

7-(3). It is these, moreover, that are conversant with the therapeutic use of the thirty-five rooters and fruiters, the four groups of the unctuous substances, the five kinds of common salts, the eight kinds of urines, the eight kinds of milk, the milks and the barks of the six plants, the group of drugs used in the five purificatory procedures, viz., the errhines, the twenty-eight kinds of medicated gruels, the thirty-two varieties of powders and applications, the six hundred purgatives and the five hundred decoctives.

**स्वस्थवृत्तविहितभोजनपाननियमस्थानचङ्क्रमणशयनासनमात्राद्रव्याञ्जनधूमनावनाभ्यञ्जनपरिमार्जनवेगाविधारणविधारणव्यायामसात्म्येन्द्रियपरीक्षोपक्रमणसद्वृत्तकुशलाः,**

स्वस्थवृत्त-विहित- સ્વસ્થવૃત્તમાં કહેલ स्वस्थवृत्तमें कहे, भोजन- ભોજન भोजन, पान- પાન पान, नियम- નિયમ नियम, स्थान- સ્થાન स्थान, चङ्क्रमण- ફરવું फिरना भ्रमण, शयन- શયન शयन, आसन- આસન बैठना, मात्रा- માત્રા मात्रा, द्रव्य- દ્રવ્ય द्रव्य, अञ्जन- અંજન अंजन, धूम- ધૂમપાન धूमपान, नावन- નસ્ય नावन, अभ्यञ्जन- અભ્યંગ अभ्यंग, परिमार्जन- પરિમાર્જન परिमार्जन, वेगाविधारण- વેગો ધારણ ન કરવા वेगोंके न रोकने, विधारण- અને ધારણ કરવા और रोकने, व्यायाम- વ્યાયામ व्यायाम, सात्म्य- સાત્મ્ય सात्म्य, इन्द्रियपरीक्षा ઇન્દ્રિયોની પરીક્ષા इन्द्रियोंकी परीक्षा, उपक्रमण- ઇન્દ્રિયોના જ્ઞાન इन्द्रियोंके ज्ञान, सद्वृत्त-कुशलाः તથા સદ્વૃત્તમાં કુશળ तथा सद्वृत्तमें कुशल;

7-(4). It is these, moreover, that are proficient in the science of personal hygiene as it relates to the rules of diet and drink, station, movement, lying down, posture, measure, articles of diet, eye-salves, smokes, nasal medication, inunction, cleansing, the non-suppression of natural urges and the suppression of evil impulses, physical exercise, the discrimination of what is agreeable to one's system and sense-faculties, and walking according to such discrimination in the path of right conduct.

७. द्वात्रिंशत्चूर्ण°–द्वात्रिंशच्चूर्ण° (द.)

,, पञ्चानां च कषायशतानां–पञ्चानाञ्च पञ्चकानां (द.)

७. स्वस्थवृत्तविहित–स्वस्थवृत्तावपि च (क. घ. छ. ध)

,, धूमन–धूमपान (ग. च.)

**चतुष्पादोपगृहीते च भेषजे षोडशकले सविनिश्चये सत्रिपर्येषणे सवातकलाकलज्ञाने व्यपगतसन्देहाः,**

**सत्रिपर्येषणे** ત્રણ એષણાઓસહિત तीन प्रकारकी एषणाओंके साथ, **सवातकलाकलज्ञाने** વાતના અંશ તથા અશાંશના જ્ઞાનમાં वातके अंश तथा अशांशके ज्ञानमें, **चतुष्पाद-उपगृहीते** ચિકિત્સાના ચારે પાદોદ્વારા ગ્રહણ કરેલ चिकित्साके चारे अंगोसे युक्त, **सविनिश्चये** નિશ્ચયયુક્ત सन्देहरहित, **षोडशकले** અને સોળ ગુણવાળા और सोलह गुणयुक्त, **भेषजे च** ઔષધમાં औषधमें, **व्यपगतसन्देहाः** સન્દેહરહિત सन्देहरहित;

7-(5). It is these, moreover, that are unbewildered in their understanding of the four basic factors of therapeutics, the sixteen qualities of these four factors, the differential diagnosis of diseases, as also of the three pursuits of man and the salutary and unsalutary aspects of Vayu.

**चतुर्विधस्य च स्नेहस्य चतुर्विंशत्युपनयस्योपकल्पनीयस्य चतुःषष्टिपर्यन्तस्य च व्यवस्थापयितारः,**

**चतुर्विंशति-उपनयस्य च** ચોવીસ વિચારણાવાળા चौवीस विचारणावाले, **चतुःषष्टि-पर्यन्तस्य च** તથા ચોસઠની સંખ્યા પર્યંત રસની और चौसठ संख्या पर्यन्त रसकी, **उपकल्पनीयस्य** પ્રવિચારણાવાળા प्रविचारणावाले, **चतुर्विधस्य च स्नेहस्य** ચાર પ્રકારના સ્નેહની चार प्रकारके स्नेहोंकी, **व्यवस्थापयितारः** વ્યવસ્થા કરનારા व्यवस्था करनेवाले;

7-(6). It is these, moreover, that are expert contrivers of the four kinds of oleation in conjunction with their twenty-four preparations and the sixty-four fold classification according to categories of taste.

**बहुविधविधानयुक्तानां च स्नेहस्वेदवम्यविरेच्यविविधौषधोपचाराणां च कुशलाः,**

**बहुविध-** બહુ પ્રકારના बहुत प्रकारके, **विधानयुक्तानाम् च** વિધાનોથી યુક્ત विधानोंसे युक्त, **स्नेह्य-** સ્નેહન કરવાને स्नेहन करनेके, **स्वेद्य-** સ્વેદન કરવાને स्वेदन करनेके, **वम्य-** વમન આપવાને वमनदेनेके, **विरेच्य-** અને વિરેચન આપવાને યોગ્ય પુરુષોના और विरेचन देनेके योग्य पुरुषोंके, **विविध-** વિવિધ नाना प्रकारके, **औषध-उपचाराणाम् च** ઔષધોના ઉપચારોમાં औषधोपचारोंमें, **कुशलाः** કુશળ कुशल;

7-(7). It is these, again, that are skilled in the application in various modes and methods of the drugs and processes connected with the procedure of oleation, sudation, vomition and purgation.

**शिरोरोगादेर्दोषांशविकल्पजस्य च व्याधिसंग्रहस्य सक्षयपिडकाविद्रधेस्त्रयाणां च शोफानां बहुविधशोफानुबन्धानामष्टचत्वारिंशतश्च रोगाधिकरणानां चत्वारिंशदुत्तरस्य च नानात्मजस्य व्याधिशतस्य तथा विगर्हितातिस्थूलातिकृशानां सहेतुलक्षणोपक्रमाणां स्वप्नस्य च हिताहितस्यास्वप्नातिस्वप्नस्य च सहेतूपक्रमस्य षण्णां च लङ्घनादीनामुपक्रमाणां संतर्पणापतर्पणजानां च रोगाणां सरूपप्रशमनानां शोणितजानां च व्याधीनां मदमूर्च्छायसंन्यासानां च सकारणरूपौषधोपचाराणां कुशलाः, कुशलाश्चाहारविधिविनिश्चयस्य,**

---

७. बहुविधविधानयुक्तानां—बहुविधानामुक्तानां (ख.)
,, विरेच्यविविधौषधोपचाराणां—विरेच्यौषधोपचाराणां (क.घ.)
,, विविधौषधोपचाराणां—औषधोपचाराणां (छ. ज.)
७. रोगाधिकरणानां—रोगाधिकाराणां (झ.)
,, नानात्मजस्य—नानान्वयस्य (प.)
,, अतिस्थूलातिकृशानां—अतिस्थूलकृशानां (ग.)
,, पिडका°—पिडक° (घ.)
,, °रूपौषधोपचाराणां—°रूपौषधानां (घ.)

शिरोरोगादेः तथा શિરોરોગ વગેરેના और शिरारोग आदिके, सक्षय- पिडका- विद्रधेः च क्षय, પિડકા અને વિદ્રધિસહિત क्षय, पिड़का और विद्रधिसमेत, दोषांश-विकल्पजस्य દોષોના અંશની કલ્પનાથી ઉત્પન્ન થનાર दोषोंके अंशकी कल्पनासे उत्पन्न, व्याधिसंग्रहस्य વ્યાધિઓના સંગ્રહના रोगसमूहके, बहुविध- शोफानुबन्धानाम् च બહુ પ્રકારના શોફના અનુબન્ધવાળા बहुत प्रकारके शोफके अनुबन्धोंवाले, त्रयाणाम् शोफानाम् ત્રણ પ્રકારના સોજાઓનો तीन प्रकारके शोथोंकी, अष्टचत्वारिंशतः च અને અડતાલીસ और अड़तालीस, रोगाधिकरणानाम् રોગાધિકરણોના रोगोंके अधिकरणोंकी, नानात्मजस्य च અને વિવિધ પ્રકારે ઉત્પન્ન થયેલા और नाना प्रकारसे उत्पन्न, चत्वारिंशदुत्तरस्य व्याधिशतस्य એકસો ચાલીસ વ્યાધિઓના एकसौ चालीस रोगोंकी, तथा તથા तथा, विगर्हित- નિન્દિત निन्दित, अतिस्थूल- અતિસ્થૂલ अतिस्थूल, अतिकृशानाम् અને અતિકૃશ પુરુષોના और अतिकृश पुरुषोंकी, स-हेतु-लक्षण-उपक्रमाणाम् હેતુલક્ષણપૂર્વક ઉપચારમાં हेतुलक्षणपूर्वक चिकित्सामें, हिताहितस्य હિતકર અને અહિતકર એવી हितकर और अहितकर ऐसी, स्वप्नस्य નિદ્રાના निद्राकी, अस्वप्न-अतिस्वप्नस्य च અનિદ્રાના અને અતિનિદ્રાના नींदके न आनेकी और नींदके अधिक आनेकी, सहेतूपक्रमस्य હેતુપૂર્વક ઉપચારમાં हेतुपूर्वक चिकित्सामें, लङ्घनादीनाम् લંઘન વગેરે लंघन आदि, षण्णाम् च ૭ છઃ, उपक्रमाणाम् ઉપચારોમાં उपक्रमोंमें, संतर्पण- સંતર્પણ संतर्पण, अपतर्पणजानाम् અને અપતર્પણથી ઉત્પન્ન થનાર एवं अपतर्पणजन्य, रोगाणाम् રોગોના रोगोंकी, सरूपप्रशमनानाम् च લક્ષણોના જ્ઞાનસહિત ઉપચારમાં लक्षणसहित ज्ञानपूर्वक चिकित्सामें, शोणितजानाम् च તથા રક્તજન્ય और रक्तजन्य, व्याधीनाम् વ્યાધિઓના रोगोंके, मद- તથા મદ तथा मद, मूर्च्छाय- મૂર્ચ્છા मूर्च्छा, संन्यासानाम् અને સંન્યાસના और संन्यासके, सकारण–रूप–औषध–उपचाराणाम् કારણ તથા લક્ષણ સહિત ઔષધોપચારમાં कारण और लक्षणसहित औषधोपचारमें, कुशलाः કુશળ कुशल, आहारविधि-विनिश्चयस्य च તથા આહારવિધિના નિર્ણયમાં और आहारविधिके निश्चयमें, कुशलाः કુશળ कुशल;

7-(8). It is these, again, that are conversant with the diseases of the head, the sum-total of the morbid conditions resulting from the various permutations and commutations of the three humors, together with the various kinds of wasting, inflammatory swelling and abscesses, three kinds of edema, with diverse kinds of swelling that occur as sequelle, with the forty-eight groups of diseases, with the sum of diseases numbering one hundred and forty arising from the discordance of one specific humor; similarly with the censured conditions of excessive corpulence and excessive emaciation, including their causation, symptoms and treatment, with wholesome and unwholesome sleep, sleeplessness and excessive sleep, including their causation and treatment, with the six therapeutic measures of lightening etc., with the disorders arising from repletion and depletion and alleviation, with the disorders arising from (vitiated) blood, with intoxication, fainting and syncope including their causation, description and remedial measures. Skilled likewise are these in the determination both of the rules of diet,

प्रकृत्या हिताहितानामाहारविकाराणामग्र्यसंग्रहस्यासवानां च चतुरशीतेर्द्रव्यगुणकर्मविनिश्चयस्य रसानुरससंश्रयस्य सविकल्पवैरोधिकस्य द्वादशवर्गाश्रयस्य चान्नपानस्य सगुणप्रभावस्य

७. आहारविकाराणां–आहारविहाराणां (च)
,, द्रव्यगुणकर्मविनिश्चयस्य- द्रव्यगुणविनिश्चयस्य (क. ख.)
,, गुणकर्मविनिश्चयस्य–गुणविनिश्चयस्य (ग.)
,, ,, –द्रव्यगुणकर्मविधिविनिश्चयस्य (प.)

**सानुपानगुणस्य नवविधस्यार्थसंग्रहस्याहारगतेश्च हिताहितोपयोगविशेषात्मकस्य च शुभाशुभविशेषस्य धात्वाश्रयाणां च रोगाणां सौषधसंग्रहाणां दशानां च प्राणायतनानां यं च वक्ष्याम्यर्थेदशमहामूलीये त्रिंशत्तमाध्याये तत्र च कृत्स्नस्य तन्त्रोद्देशलक्षणस्य तन्त्रस्य च ग्रहणधारणविज्ञानप्रयोगकर्मकार्यकालकर्तृकरणकुशलाः,**

**प्रकृत्या** સ્વભાવથી स्वभावसे, **हिताहितानाम्** હિતકર અને અહિતકર हितकारी और अहितकारी, **आहारविकाराणाम्** આહારની બનાવટોના आहारकी अनेकविध रचनाओंके, **अग्र्यसंग्रहस्य** પ્રધાન દ્રવ્યોના સંગ્રહના श्रेष्ठ द्रव्योंके संग्रहके, **चतुरशीतेः च** ચોર્યાસી चौरासी प्रकारके, **आसवानाम्** આસવોના आसवोंके, **रस- अनुरस- संश्रयस्य** રસ અને અનુરસના આશ્રયે રહેલા रस और अनुरसमें आश्रित, **द्रव्य- गुण- कर्म- विनिश्चयस्य** દ્રવ્ય-ગુણ અને કર્મના નિશ્ચયના द्रव्यगुण और कर्मके निश्चयके, **सविकल्प-वैरोधिकस्य** વિકલ્પ-સહિત વિરોધી આહારના विकल्पसहित विरोधी आहारके, **द्वादशवर्ग-** બાર વર્ગોમાં बारह वर्गोंमें, **आश्रयस्य च** ગણાવેલા कहे हुए, **सगुणप्रभावस्य** ગુણ અને પ્રભાવ-સહિત गुण एवं प्रभाववाले, **अन्नपानस्य** અન્નપાનના अन्नपानके, **सानुपानगुणस्य च** અને અનુપાનના ગુણો સહિત और अनुपानके गुणसमेत, **नवविधस्य** નવ પ્રકારના नौ प्रकारके, **अर्थसंग्रहस्य** પરીક્ષ્ય વિષયોના સમૂહના परीक्ष्य विषयोंके समूहके, **आहारगतेः च** આહારગતિના आहारगतिके, **हित-अहित-** હિત અને અહિતના हित और अहितके, **उपयोग- विशेषात्मकस्य** ઉપયોગથી ઉત્પન્ન થતા વિશેષ સ્વરૂપવાળા हिताहितके उपयोगसे उत्पन्न हुए विशेष स्वरूपसे युक्त, **शुभ- अशुभ- विशेषस्य च** શુભ તથા અશુભ પરિણામના शुभ तथा अशुभ परिणामके, **सौषधसंग्रहाणाम्** અને ઔષધના સંગ્રહસહિત औषधके समूहसहित, **धात्वाश्रयाणाम्** ધાતુઓમાં રહેનારા धातुओंमें रहनेवाले, **रोगाणाम् च** રોગોના रोगोंके, **दशानाम् च** અને દશ और दस, **प्राणायतनानाम्** પ્રાણાયતનોના જ્ઞાનમાં प्राणायतनोंके ज्ञानमें, **अर्थेदश- महामूलीये** 'અર્થેદશમહામૂલીય' નામના 'अर्थेदश-महामूलीय' नामके, **त्रिंशत्तमाध्याये च** ત્રીસમા અધ્યાયમાં तीसवें अध्यायमें, **यम् च** જેને जिनका, **वक्ष्यामि** કહીશ वर्णन किया जायेगा, **तत्र च** તેઓમાં उनमें, **कृत्स्नस्य** સઘળા संपूर्ण, **तन्त्र- उद्देश- लक्षणस्य** તન્ત્રના ઉદ્દેશ તથા લક્ષણ तन्त्रके उद्देश और लक्षण, **तन्त्रस्य च** તેમજ શાસ્ત્રનાં शास्त्रके, **ग्रहण-** ગ્રહણ ग्रहण, **धारण-** ધારણ धारण, **विज्ञान-** વિજ્ઞાન विज्ञान, **प्रयोग-** પ્રયોગ प्रयोग, **कर्म-** ચિકિત્સાનાં કર્મ चिकित्साके कर्म, **कार्य-** ધાતુની સમતા धातुकी समता, **काल-** કાલ काल, **कर्तृ-** કર્તા कर्ता, **करण-** અને કરણ એઓમાં और करण इनमें, **कुशलाः** કુશળ कुशल;

7-(9). and what food-stuffs are by nature most wholesome and unwholesome, what are foremost of their class, and of the eighty-four important kinds of wines; similarly in the determination of substances, properties and actions based on primary and secondary tastes of the several varieties of incompatible food-stuffs; in the matter of foods and drinks coming under the twelve categories, including their properties and actions as also the properties of corrigent drinks and their modifications due to nine factors; in the metabolic process as affected by the wholesome and unwholesome use of food, resulting in good and ill effects; in diseases resulting from the morbid condition of body-elements including their remedies, and in the ten resorts of life. Skilled likewise are they in what I shall declare in the thirtieth chapter entitled "The ten great-rooted arteries in the heart", as also

७. नवविधस्य-विविधस्य (प.)
,, महामूलीये त्रिंशत्तमाध्याये-महामूलीयत्रिंशत्तमाध्यायं (क.)
,, ग्रहणधारण°-श्रवणग्रहणधारण° (छ.)
,, ग्रहणधारणविज्ञान°-श्रवणग्रहणविज्ञान° (च. ध.)
,, धारणविज्ञान°-धारणवचनविज्ञान° (म.)

in the purpose and nature of the whole science and with regard to grasp, retention, understanding, application, endeavour, aim, time, agent and instruments as these bear upon the science of medicine.

**कुशलाश्च स्मृतिमतिशास्त्रयुक्तिज्ञानस्यात्मनः शीलगुणैरविसंवादनेन च संपादनेन सर्वप्राणिषु चेतसो मैत्रस्य मातापितृभ्रातृबन्धुवत्, एवंयुक्ता भवन्त्यग्निवेश ! प्राणानामभिसरा हन्तारो रोगाणामिति ॥ ७ ॥**

**स्मृति-** અને સ્મૃતિ और स्मृति, **मति-** મતિ मति, **शास्त्रयुक्ति-** શાસ્ત્રયુક્તિ शास्त्रयुक्ति, **ज्ञानस्य** તથા જ્ઞાનની एवं ज्ञानकी, **आत्मनः** પોતાની अपने, **शीलगुणैः** શીલ અને ગુણોની સાથે शील तथा गुणोंके साथ, **अविसंवादनेन** એકતા કરી एकता कर, **सर्वप्राणिषु** સર્વ પ્રાણીઓમાં सब प्राणियोंमें, **माता-पितृ-भ्रातृ-बन्धुवत्** માતા પિતા ભાઈ તથા બન્ધુની પેઠે माता पिता भाई और बन्धुके समान, **मैत्रस्य** મિત્રભાવવાળું मित्रतापूर्ण, **चेतसः** ચિત્ત મન, **संपादनेन च** કરવાથી सम्पादन करनेमें, **कुशलाः च** કુશળ થયેલા कुशलताको प्राप्त किये हुए, **एवंयुक्ताः** આ પ્રકારના ગુણોથી યુક્ત વૈદ્યો इस प्रकारके गुणोंसे युक्त वैद्य, **अग्निवेश !** હે અગ્નિવેશ ! हे अग्निवेश !, **प्राणानाम्** પ્રાણોને प्राणोंको, **अभिसराः** લાવનારા लानेवाले, **रोगाणाम्** અને રોગોના और रोगोंका, **हन्तारः** હણનારા नाश करनेवाले, **भवन्ति इति** થાય છે होते हैं ॥ ७ ॥

7. Skilled, too, are they in imbuing themselves by the cultivation of memory, intelligence, theoretical and practical knowledge, with virtue and ability, and in cultivating good will for all creatures by behaving as their mother, father, brother and friend. It is such persons, O Agnivesa, that are the saviours of life and destroyers of diseases.

रोगाभिसरभिषजां लक्षणम्—

**अतो विपरीता रोगाणामभिसरा हन्तारः प्राणानां, भिषक्छद्मप्रतिच्छन्नाः कण्टकभूता लोकस्य प्रतिरूपकसधर्माणो राज्ञां प्रमादाच्चरन्ति राष्ट्राणि ॥ ८ ॥**

**अतः** એઓથી इससे, **विपरीताः** વિપરીત विपरीत, **रोगाणाम्** રોગોને रोगोंको, **अभिसराः** લાવનારા लानेवाले, **प्राणानाम्** તથા પ્રાણોને और प्राणोंका, **हन्तारः** હણનારા नाश करनेवाले, **भिषक्-छद्म-प्रतिच्छन्नाः** વૈદ્યના વેષમાં છૂપાયેલા वैद्यवेषमें छिपे हुए, **लोकस्य** લોકોને માટે लोगोंके लिए, **कण्टकभूताः** કંટકરૂપ कण्टकरूप, **प्रतिरूपकसधर्माणः** અને બ્રહ્મચારી વગેરેના વેષથી ફરનારા और ब्रह्मचारी आदिका वेष धारण करनेवाले, **राज्ञाम्** રાજાઓની राजाओंकी, **प्रमादात्** બેદરકારીથી असावधानताके कारण, **राष्ट्राणि** રાષ્ટ્રોમાં राष्ट्रोंमें, **चरन्ति** ફરે છે विचरते हैं ॥ ८ ॥

8. Opposed to these are the votaries of diseases and the destroyers of life. These charlatans in the robes of doctors, thorns in the flesh of the whole world, with talents similar to those of mimes and mountebanks, move about in the land through the want of vigilance in the rulers.

**तेषामिदं विशेषविज्ञानं भवति—अत्यर्थं वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति कर्मलोभात्, श्रुत्वा च कस्यचिदातुर्यमभितः परिपतन्ति, संश्रवणे चास्यात्मनो वैद्यगुणानुच्चैर्वदन्ति, यश्चास्य**

---

७. सर्वप्राणिषु चेतसः–सर्वप्राणिषु च (क्ष.)

,, एवंयुक्ता–एवमुक्ता (च.)

८ विपरीता–विपर्ययेण (ब. त.)

,, भिषक्छद्मप्रतिच्छन्नाः–भिषक्छद्मप्रच्छन्नाः (च.)

,, प्रतिरूपकसधर्माणो–प्रतिरूपकत्वकधर्माणो (ध.)

,, ,, –प्रतिरूपेण-इत्युक्तधर्माणो (द.)

९. विशिखान्तर°–रथ्यान्तर° (द.)

**वैद्यः प्रतिकर्म करोति तस्य च दोषान्मुहुर्मुहुरुदाहरन्ति, आतुरमित्राणि च प्रहर्षणोपजापोपसेवादिभिरिच्छन्त्यात्मीकर्तुं, स्वल्पेच्छुतां चात्मनः ख्यापयन्ति, कर्म चासाद्य मुहुर्मुहुरवलोकयन्ति दाक्ष्येणाज्ञानमात्मनः प्रच्छादयितुकामाः,**

**तेषाम्** તેઓની इनकी, **इदम्** આ यह, **विशेषविज्ञानम्** વિશેષ ઓળખ विशेष पहिचान, **भवति** હોય છે होती है, **वैद्यवेशेन** વૈદ્યના વેષમાં वैद्यवेषको धारण करके, **अत्यर्थम्** અતિશય अत्यंत, **श्लाघमानाः** પોતાના વખાણ કરતા अपनी प्रशंसा करते हुए, **कर्मलोभात्** કામકાજ મેળવવાના લોભથી कर्मके लोभसे, **विशिखान्तरम्** એક શેરીમાંથી બીજી શેરીમાં एक गलीसे दूसरी गलीमें, **अनुचरन्ति** ફર્યા કરે છે फिरा करते हैं **कस्यचित्** **च** અને કોઈની और किसीकी, **आतुर्यम्** બીમારીને बीमारीको, **श्रुत्वा** સાંભળીને सुनकर, **अभितः** તેના પર ચારે બાજુથી उस पर चारों ओरसे. **परिपतन्ति** ટૂટી પડે છે टूट पड़ते हैं, **अस्य च** એ રોગીના इस रोगी, **संश्रवणे** સાંભળવામાં આવે તેમ सुन सके इस प्रकार, **आत्मनः** પોતાના अपनेमें, **वैद्यगुणान्** વૈદ્ય તરીકેના ગુણોને वैद्यके गुणोंको, **उच्चैः** ઊંચે સાદે जोरसे, **वदन्ति** કહી બતાવે છે कह बताते हैं, **यः च** જે जो, **वैद्यः** વૈદ્ય वैद्य, **अस्य** એ રોગીની इस रोगीमें, **प्रतिकर्म** ચિકિત્સા चिकित्साकर्म, **करोति** કરતો હોય છે करता है, **तस्य च** તેના દોષો उसके दोषोंको, **मुहुः मुहुः** વારંવાર बारबार, **उदाहरन्ति** કાઢી બતાવે છે दोहराते हैं. **आतुरमित्राणि च** રોગીના મિત્રોને रोगीके मित्रोंको, **प्रहर्षण-** હુલાવી ફૂલાવી हंसाकर, **उपजाप-** કાન ભંભેરી चुगली, **उपसेवन-आदिभिः** ખુશામત વગેરે કરીને खुशामद आदिसे, **आत्मीकर्तुम्** પોતાના બનાવી લેવા માટે अपने करनेके लिए, **इच्छन्ति** ઇચ્છે છે चाहते हैं, **आत्मनः च** પોતાનું अपने, **स्वल्पेच्छुताम्** અતિ અલ્પથી પણ સંતોષીપણું अति अल्पसे भी संतोषको, **ख्यापयन्ति** કહી બતાવે છે कह बताते हैं, **कर्म च** અને રોગીના ચિકિત્સાકર્મને और चिकित्साका काम, **आसाद्य** મેળવીને मिल जाने पर, **आत्मनः** પોતાનું अपनी, **अज्ञानम्** અજ્ઞાન अज्ञानताको, **प्रच्छादयितुकामाः** છુપાવવાની ઇચ્છા કરતા તેઓ छिपानेकी इच्छा रखनेवाले वे, **दाक्ष्येण** ચતુરાઈથી चतुराईसे, **मुहुः मुहुः** વારંવાર बारबार, **अवलोकयन्ति** અહીં તહીં અવલોકન કર્યા કરે છે इधर उधर देखा करते हैं;

९. उपजाप°–उपजल्प° (द.)

9-(1). Here is a detailed account of their character. Tricking themselves out in the height of medical fashion, they walk the streets with a view to picking up practice. Immediately on hearing that somebody is ill, they swoop down on him from all quarters, and in his hearing speak loudly of their medical attainments. If a doctor is already in attendance on him, they make repeated mention of his failings. They try to ingratiate themselves with the friends of the patient by suave manners, knowing whispers and officiousness. They make it known that they expect little (by way of remuneration). On being entrusted with a case they look about on all sides repeatedly, trying to cloak their ignorance.

**व्याधिं चापावर्तयितुमशक्नुवन्तो व्याधितमेवानुपकरणमपरिचारकमनात्मवन्तमुपदिशन्ति, अन्तगतं चैनमभिसमीक्ष्यान्यमाश्रयन्ति देशमपदेशमात्मनः कृत्वा, प्राकृतजनसन्निपाते चात्मनः कौशलमकुशलवद्वर्णयन्ति, अधीरवच्च धैर्यमपवदन्ति धीराणां, विद्वज्जनसन्निपातं (चाभिसमीक्ष्य) प्रतिभयमिव कान्तारमध्वगाः परिहरन्ति दूरात्, यश्चैषां कश्चित् सूत्रावयवो भवत्युपयुक्तस्तमप्रकृते प्रकृतान्तरे वा सततमुदाहरन्ति, न चानुयोगमिच्छन्त्यनुयोक्तुं वा, मृत्योरिव चानुयोगादुद्विजन्ते,**

१. अपावर्तयितुम्–अपवर्तयितुम् (छ. ज. त.)
,, अपरिचारकम्–अपचारिकम् (ध.)
,, उपदिशन्ति–उद्दिशन्ति (ख.)

**न चैषामाचार्यः शिष्यः सब्रह्मचारी वैवादिको वा कश्चित् प्रज्ञायत इति ॥ ९ ॥**

**व्याधिम् च** વ્યાધિને रोगको, **अपावर्तयितुम्** મટાડવાને हटानेंमें, **अशक्नुवन्तः** શક્તિમાન ન થતાં તેઓ असमर्थ होने पर वे, **व्याधितम् एव** રોગીનેજ रोगीको ही, **अनुपकरणम्** સાધન વિનાનો साधनरहित, **अपरिचारकम्** પરિચારક વિનાનો सेवकरहित, **अनात्मवन्तम्** અને સંયમ વગરનો असंयमी, **उपदिशन्ति** કહ્યા કરે છે कहने लगते हैं, **एनम् च** અને આ રોગીને और इस रोगीको, **अन्तगतम्** મરવાની અણી ઉપર આવેલો मरता हुआ, **अभिसमीक्ष्य** જોઈને देख कर, **आत्मनः** પોતાનું अपना, **अपदेशम् कृत्वा** નામ વગેરે બદલાવી नाम आदि बदलकर, **अन्यम् देशम्** બીજા દેશમાં दूसरे देशमें, **आश्रयन्ति** જતા રહે છે चले जाते हैं, **प्राकृतजन- सन्निपाते च** અને સાધારણ મનુષ્યોના સમૂહમાં और साधारण लोगोंके समूहमें, **आत्मनः** પોતાની अपनी, **कौशलम्** કુશળતાને कुशलताको, **अकुशलवत्** અકુશળ પુરુષોની પેઠે अकुशल पुरुषोंकी तरह, **वर्णयन्ति** વર્ણવે છે वर्णन करते हैं, **अधीरवत् च** અને અધીર પુરુષોની પેઠે अधीर पुरुषोंकी तरह, **धीराणाम्** ધૈર્યવાળા પુરુષોના धीर पुरुषोंके, **धैर्यम्** ધૈર્યની धैर्यकी, **अपवदन्ति** નિન્દા કરે છે निन्दा करते हैं, **अध्वगाः** મુસાફરો मुसाफिर, **प्रतिभयम्** ભયંકર जिस प्रकार भयंकर, **कान्तारम् इव** અરણ્યને જેમ દૂરથીજ તજી દે છે તેમ जंगलको दूरसे ही छोड़ देते हैं उसी प्रकार, **विद्वज्जन- सन्निपातम्** વિદ્વાન મનુષ્યોના સમૂહને विद्वान पुरुषोंके समूहको, (**च अभिसमीक्ष्य** જોઈને देख कर), **दूरात्** દૂરથીજ दूरसे ही, **परिहरन्ति** તજી દે છે छोड़ देते हैं, **यः च कश्चित्** અને જે કોઈ और जो कोई, **सूत्रावयवः** શાસ્ત્રના સૂત્રનો અંશ शास्त्रके सूत्रका अंश, **उपयुक्तः** ઉપયોગી उपयोगी, **भवति** હોય છે होता है, **तम्** તે સૂત્રના અંશને उस सूत्रांशको, **अप्रकृते** પ્રસંગ વિનાના સ્થલ પર प्रसंगके रहित स्थल पर, **प्रकृतान्तरे वा** અથવા અન્ય પ્રસંગમાં या दूसरे प्रसङ्गमें, **सततम्** નિરંતર निरंतर, **उदाहरन्ति** બોલી દેખાડે છે दुहराते रहते हैं, **अनुयोगम्** કોઈ પ્રશ્ન કરે તેને कोई इनसे पूछे उसको, **अनुयोक्तुम् च वा** અથવા તો અન્યને પૂછવા માટે પણ अथवा तो अन्यसे पूछनेके लिए भी, **न इच्छन्ति** પોતે ઇચ્છતા નથી स्वयं नहीं चाहते हैं, **अनुयोगात्** કોઈના પ્રશ્નથી प्रश्नोंके पूछे जानेसे, **मृत्योः इव** મૃત્યુથી જેમ પામે તેમ मृत्युकी भांति, **उद्विजन्ते** ઉદ્વેગ પામે છે उद्वेगको प्राप्त होते हैं, **एषाम् च** અને એઓનો और इनका, **कश्चित्** કોઈ कोई, **आचार्यः** આચાર્ય आचार्य, **शिष्यः** શિષ્ય शिष्य, **सब्रह्मचारी** સહાધ્યાયી सहाध्यायी, **वैवादिकः वा** અથવા વિવાદ કરનાર या तो विवाद करनेवाला, **न प्रज्ञायते इति** જાણવામાં આવતો નથી नहीं जाना जाता ॥ ९ ॥

9. Finding themselves unable to check the course of the disease, they give it out that it is the patient himself who is wanting in the necessary appurtenances, in attendants and in self–control. When they realise that the patient is at death's door, they make themselves scarce and seek another neighbourhood. In the presence of uncultured people, they brag about their adroitness in the most unadroit manner, and like the ignoramuses that they are, they run down the learning of the savants. But if they sight a company of the learned, they slink away from a distance, like a roadster at (the sight of) a dark wood. If by any chance they happen to have conned a stray maxim, they constantly quote it in season and out of season. They can brook neither being questioned nor questioning others. They dread all questions, as if they were the very devil. People such as these reck not for either teacher, disciple, co-student or disputant.

रोगाभिसरभिषजां वर्जने हेतुः —

**भवन्ति चात्र—**

**भिषक्छद्म प्रविश्यैवं व्याधितांस्तर्कयन्ति ये ।**
**वीतंसमिव संश्रित्य वने शाकुन्तिका द्विजान् ॥१०॥**
**श्रुतदृष्टक्रियाकालमात्राज्ञानबहिष्कृताः ।**
**वर्जनीया हि ते मृत्योश्चरन्त्यनुचरा भुवि ॥११॥**

अत्र च આ વિષયમાં इस विषयमें, भवन्ति શ્લોકો છે કે શ્લોક हैं कि, वीतंसम् જાળને जालको, संश्रित्य ફેલાવીને फैलाकर, शाकुन्तिकाः પારાધિઓ शिकार करनेवाले, वने વનમાં जंगलमें, द्विजान् इव જેમ પક્ષીઓને ફસાવે છે जैसे पक्षियोंको फंसाते है, श्रुत- दृष्ट- क्रिया- काल- मात्रा- ज्ञान- बहिष्कृताः તેમ શાસ્ત્રશ્રવણ- કર્મદર્શન- ચિકિત્સાજ્ઞાન- કાલજ્ઞાન- અને માત્રાજ્ઞાનથી દૂર રહેલા वैसे शास्त्रज्ञान- एवं कर्मदर्शन- क्रिया- काल- मात्रा- इनके ज्ञानसे शून्य, ये જેઓ जो, एवम् આ પ્રમાણે इस प्रकार, भिषक्- छद्म વૈદ્યનો વેષ वैद्यके वेषको, प्रविश्य લઈને धारण करके, व्याधितान् રોગીઓને रोगियोंको, तर्कयन्ति ફસાવે છે फंसाते हैं, ते તે વૈદ્યો वे वैद्य, वर्जनीयाः તજવા જોઈએ त्याज्य हैं, हि કારણ કે क्योंकि, भुवि પૃથ્વી પર भूमि पर, मृत्योः મૃત્યુના मृत्युके, अनुचराः દૂતો થઈને दूत हो कर, चरन्ति તેઓ ફર્યા કરે છે वे विचरते हैं ॥ १०-११ ॥

Here are some verses again—

10-11. Those who, putting on the garbs of physicians, thus gull their patients, just as the bird-catchers in the forest (gull) the birds by camouflaging themselves in nets, such persons, outcastes from the science of healing, both theoretical and practical, of time and of measure, are to be shunned, for they are the messengers of death on earth.

**वृत्तिहेतोर्भिषङ्मानपूर्णान् मूर्खविशारदान् ।**
**वर्जयेदातुरो विद्वान् सर्पास्ते पीतमारुताः ॥१२॥**

वृत्तिहेतोः આજીવિકાને માટે जीविकाके लिए, भिषङ्मानपूर्णान् વૈદ્ય તરીકેના અભિમાનથી પૂર્ણ वैद्यके रूपमें अभिमानसे भरे हुए, मूर्खविशारदान् આ મહામૂર્ખોને इन महामूर्खोंको, विद्वान् आतुरः સમજુ રોગીએ समझदार रोगी, वर्जयेत् તજી દેવા જોઈએ છોડ देवे, ते કારણ કે તે વૈદ્યો क्योंकि वे वैद्य, पीतमारुताः વાયુને પીનારા वायुका पान करनेवाले, सर्पाः સર્પો જેવા છે सर्पोंके समान हैं ॥ १२ ॥

12. The discriminating patient should avoid these unlettered laureates, who put on the airs of physicians for the sake of a living; they are like serpents that have gorged on air.

कीदृशो भिषक् प्रशस्तः—

**ये तु शास्त्रविदो दक्षाः शुचयः कर्मकोविदाः ।**
**जितहस्ता जितात्मानस्तेभ्यो नित्यं कृतं नमः ॥१३॥**

ये तु પણ જેઓ परन्तु जो, शास्त्रविदः શાસ્ત્ર જાણનારા शास्त्रके जाननेवाले, दक्षाः ચતુર चतुर, शुचयः પવિત્ર पवित्र, कर्मकोविदाः કર્મકુશલ कर्मकुशल, जितहस्ताः સિદ્ધહસ્તવાળા सिद्धहस्तवाले, जितात्मानः અને જિતેન્દ્રિય છે और जितेन्द्रिय हैं, तेभ्यः તે વૈદ્યોને उन वैद्योंको, नित्यम् હમેશાં नित्य, नमः कृतम् નમસ્કાર કરીએ છીએ नमस्कार करते हैं ॥ १३ ॥

13. But salutations be constantly proffered to those others who are learned in the science, skilful, pure, expert in performance, practised of hand and self-controlled.

अध्यायार्थसंग्रहः—

**तत्र श्लोकः—**

**दशप्राणायतनिके श्लोकस्थानार्थसंग्रहः ।**
**द्विविधा भिषजश्चोक्ताः प्राणस्यायतनानि च ॥१४॥**

१०. व्याधितांस्तर्कयन्ति—बाधितांस्तर्पयन्ति (त.)
,, ये—ते (छ.)
,, शाकुन्तिका—शाकुनिका (च. द.)
११. ज्ञान—स्थान (प.)
,, बहिष्कृताः—बहिःस्थिताः (थ.)

१३. नित्यं कृतं नमः—नित्यकृतं नमः (थ.)

तत्र આ વિષયમાં इस विषयमें, श्लोकः ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, दशप्राणायतनिके આ દશપ્રાણાયતનીય અધ્યાયમાં दशप्राणायतनीय अध्यायमें, श्लोकस्थान- સૂત્રસ્થાનના सूत्रस्थानके, अर्थसंग्रहः વિષયોનો સંગ્રહ विषयोंका संग्रह, द्विविधाः બે પ્રકારના दो प्रकारके, भिषजः च વૈદ્યો वैद्य, उक्ताः કહેવામાં આવ્યા છે कह दिये हैं, प्राणस्य અને પ્રાણના और प्राणोंके, आयतनानि च સ્થાનો પણ કહેવામાં આવ્યાં છે स्थान भी कह दिये हैं ॥ १४ ॥

Here is the recapitulatory verse—

14. In this chapter on "The ten resorts of life", there have been set forth a summary of the contents of the section on general principles, the two kinds of physicians and the resorts of life.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने दशप्राणायतनीयो नामोनत्रिंशोऽध्यायः ॥ २९ ॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, श्लोकस्थाने સૂત્રસ્થાન વિષે सूत्रस्थानमें, दशप्राणायतनीयः 'દશપ્રાણાયતનીય' 'दशप्राणायतनीय', नाम નામનો नामका, ऊनत्रिंशः ઓગણત્રીસમો उनतीसवाँ, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ २९ ॥

29. Thus in the section on General Principles in the treatise compiled by Agnivesa and revised by Caraka, the twenty-ninth chapter entitled "The Ten Resorts of Life" is completed.

# त्रिंशोऽध्यायः ।

## ત્રીસમો અધ્યાય अध्याय तीसवाँ

## Chapter XXX

अर्थेदशमहामूलीयाध्यायोपक्रमः —

**अथातोऽर्थेदशमहामूलीयमध्यायं व्याख्यास्यामः ॥ १ ॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

अथ अतः હવે અહીંથી अब आगे, 'अर्थेदशमहामूलीयम्' 'અર્થેદશમહામૂલીય' નામના 'अर्थेदशमहामूलीय' नामके, अध्यायम् અધ્યાયનું अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥२॥

1. We shall now expound the chapter entitled "The Ten Great-rooted Arteries in the Heart".

2. Thus declared the worshipful Atreya.

हृदयपर्यायाः —

**अर्थे दश महामूलाः समासक्ता महाफलाः ।**
**महच्चार्थश्च हृदयं पर्यायैरुच्यते बुधैः ॥ ३ ॥**

अर्थे હૃદયમાં हृदयमें, महामूलाः હૃદયરૂપ મૂળવાળી हृदयरूप मूलवाली, महाफलाः અને હૃદયરૂપ ફળવાળી और हृदयरूप फलवाली, दश દશ શિરાઓ दस धमनियां, समासक्ताः લાગેલી છે लगी हुई हैं, बुधैः વિદ્વાન પુરુષોથી पंडित लोगोंसे, महत् મહત્ महत, अर्थः च અર્થ अर्थ, हृदयम् च અને હૃદય और हृदय, पर्यायैः એ પર્યાયોથી इन पर्यायोंसे, उच्यते એક જ અર્થ કહેવાય છે एक ही अर्थ कहा जाता है ॥३॥

3. In the heart the ten great-rooted arteries bearing great fruits are well-embedded. The great (Mahat) and the Cardia (Artha) are the two

३. समासक्ताः–सिराः सक्ताः (च. छ. द. ब. प.)

equivalent terms by which the heart is spoken of by the learned.

हृदयस्य महत्त्वे अर्थत्वे च हेतुः —

**षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम् ।**
**आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि संश्रितम् ॥४॥**

षडङ्गम् ७ अंगोवाळुं छ: अङ्गोंवाला, अङ्गम् शरीर शरीर, विज्ञानम् बुद्धि बुद्धि, इन्द्रियाणि ઇન્દ્રિયો इन्द्रियां, अर्थपञ्चकम् पांच विषयोनो समूह पांच विषयोंका समूह, सगुणः च आत्मा सगुण आत्मा सगुण आत्मा, चेतः मन मन, चिन्त्यम् च अने मननो विषय और मनका विषय, हृदि ए सर्व हृदयमां ये सब हृदयमें, संश्रितम् रहेलां छे आश्रित हैं ॥ ४ ॥

4. The body with its six limbs, the understanding, the senses, the five sense-objects, the spirit with its attributes, the mind and the mental concepts, are all dependent on the heart.

**प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते ।**
**गोपानसीनामागारकर्णिकेवार्थचिन्तकैः ॥ ५ ॥**

गोपानसीनाम् वळीओना आश्रय माटे शहतीरोंके आश्रयके लिए, आगारकर्णिका इव जेम आडसर छे तेम जिस प्रकार आगारकर्णिका होती है उस प्रकार, अर्थचिन्तकैः हृदय विषे विचार करनाराओथी हृदयके विषयमें विचारक लोगोंसे, एषाम् भावानाम् आ भावोना इन भावोंके, प्रतिष्ठार्थम् आश्रय माटे आश्रयके लिए, हृदयम् हृदयने हृदय, इष्यते हि मानवामां आवे छे माना जाता है ॥ ५ ॥

5. The heart is regarded by the cardiologists as the support of all these (above-mentioned) factors, even as the central pole is of the thatch-work of a wigwam.

**तस्योपघातान्मूर्च्छायं भेदान्मरणमृच्छति ।**
**यद्धि तत् स्पर्शविज्ञानं धारि तत्तत्र संश्रितम् ॥६॥**

तस्य ते हृदयने इस हृदय पर, उपघातात् आघात लागवाथी आघात होनेसे, मूर्च्छायम् मनुष्य मूर्च्छा मनुष्य मूर्च्छा, भेदात् अने तेनुं भेदन थवाथी और उसका भेदन होनेसे, मरणम् मरण मृत्युको, ऋच्छति पामे छे पाता है, यत् हि कारणके जे क्योंकि जो, स्पर्शविज्ञानम् स्पर्शने जाणनार छे स्पर्शका ज्ञानवाला है, धारि अने जे शरीरने धारी राखनार छे और जो शरीरको जीता रखनेवाला है, तत् ते शरीर, इंद्रिय, सत्त्व तथा आत्मानो संयोग वह शरीर, इन्द्रिय, सत्त्व और आत्माका संयोग, तत्र ते हृदय पर उसी हृदय पर, संश्रितम् आधार राखे छे आश्रित है ॥ ६ ॥

6. If it is but slightly injured, one falls into a swoon; if seriously injured, death follows. This is so because sensation, which is otherwise called animation is based on it.

**तत् परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः ।**
**हृदयं महदर्थश्च तस्मादुक्तं चिकित्सकैः ॥ ७ ॥**

तत् ते हृदय यही हृदय, परस्य श्रेष्ठ उत्तम, ओजसः ओजसनुं ओजका, स्थानम् स्थान छे स्थान है, चैतन्यसंग्रहः अने चैतन्यनो संग्रह चेतनाका संग्रह, तत्र तेमां छे वहां है, तस्मात् तेथी इसी लिए, चिकित्सकैः चिकित्सकोए चिकित्सकोंने, हृदयम् हृदयने हृदयको, महत् महत् महत्, अर्थः च अने अर्थ और अर्थ, उक्तम् ए शब्दोथी कह्युं छे इन शब्दोंसे कहा है ॥ ७ ॥

7. Further it is the seat of the supreme vital essence; in it, too, is the seat of the consciousness. Therefore is the heart called the Mahat and Artha by the physicians.

दश महामूला धमन्यः —

**तेन मूलेन महता महामूला मता दश ।**

४. संश्रितम्–संस्थितम् (प.)
५. आगार–आगारे (ग.)
६. धारि तत्तत्र संश्रितम्–धारि यत् तत्र संश्रितम् (प.)
७. चिकित्सकैः–चिकित्सिते (क. ग. च. छ. द. ध.)

**ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्ततः ॥८॥**

तेन ते उस, महता मूलेन હૃદયરૂપ મૂળથી हृदय-रूप महामूलसे, महामूलाः मताः મોટા મૂળવાળી માનવામાં આવેલી महामूल मानी हुई, ओजोवहाः दश ઓજસનું વહન કરનારી દશ ધમનીઓ ओजको बहानेवाली दस धमनियां, अस्मिन् शरीरे આ શરીરમાં इस शरीरमें, समन्ततः ચારે બાજુ सब ओर, विधम्यन्ते પથરાય છે फैलती हैं ॥ ८ ॥

8. By virtue of having this great (organ) as their root, the ten (main arteries) are spoken of as the great-rooted ones. Carrying the vital essence, they spread through the whole length and breadth of the body.

ओजसः कर्माणि, सिरा-धमनी-स्रोतसां निरुक्तिः—

**येनौजसा वर्तयन्ति प्रीणिताः सर्वदेहिनः ।**
**यदृते सर्वभूतानां जीवितं नावतिष्ठते ॥ ९ ॥**
**यत् सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः ।**
**संवर्तमानं हृदयं समाविशति यत् पुरा ॥ १० ॥**
**यस्य नाशात्तु नाशोऽस्ति धारि यद्धृदयाश्रितम् ।**
**यच्छरीररसस्नेहः प्राणा यत्र प्रतिष्ठिताः ॥ ११ ॥**
**तत्फला बहुधा वा ताः फलन्तीव(ति) महाफलाः ।**
**ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात्सिराः १२**

९. सर्वदेहिनः—सर्वजन्तवः (क. ध च. छ. ज. त. थ.)
१०. यत्तद्-योऽसौ (च. थ.)
,, संवर्तमानं—संवर्धमानं (थ. प.)
,, समाविशति—समाश्रयति (प.)
,, यत् पुरा—यत् पुनः (थ.)
११. यस्य नाशात्तु—यस्यानाशान्न (थ.)
,, यच्छरीररसस्नेहः—यः शरीररसस्नेहः (ध.)
,, रसस्नेहः—बलदेहः (झ).
१२. तत्फला बहुधा वा ताः फलन्तीव (ति)—तत्फलास्ताः फलन्त्येव बहुधातो (ढ.)
,, ,, —तत्फलास्ताः फलन्तीति बहुधेति (प.)
,, बहुधा वा ताः फलन्तीव (ति). महाफलाः—ताः फलन्तीति बहुधेति महाफलाः (ग.)
,, बहुधा—विविधा (ध.)

येन જે जिस, ओजसा ઓજસથી ओजद्वारा, प्रीणिताः તર્પિત થયેલા तृप्त हुए, सर्वदेहिनः સર્વ દેહધારીઓ सब प्राणियों, वर्तयन्ति જીવતાં રહે છે जीते रहेते हैं, यत् ऋते જેના વગર जिसके बिना, सर्वभूतानाम् સર્વ પ્રાણીઓનું सब प्राणियोंका, जीवितम् જીવન जीवन, न अवतिष्ठते ટકી શકતું નથી रह नहीं सकता, यत् જે ઓજસ जो ओज, गर्भस्य ગર્ભના गर्भके, आदौ પ્રથમ કાળમાં आदि कालमें, सारम् સાર-રૂપ હોય છે साररूप होता है, यत् तत् જે ઓજસ जो ओज, गर्भरसात् ગર્ભરસના गर्भरसका, रसः સાર-રૂપ છે साररूप है, यत् જે जो, संपद्यमानम् हृदयम् હૃદય ઉત્પન્ન થાય છે કે हृदयके उत्पन्न होते ही, पुरा તરત तुरन्त, समाविशति તેમાં પ્રવેશ કરે છે उसमें प्रविष्ट होता है, यस्य અને જેના और जिसके, नाशात् तु નાશથી नाशसे, नाशः अस्ति શરીરનો નાશ થાય છે शरीरका नाश होता है, यत् અને જે और जो, हृदयाश्रितम् હૃદયમાં રહી हृदयमें रहा हुआ, धारि જીવનું ધારણ કરે છે जीवका धारण करता है, यत् અને જે और जो, शरीररसस्नेहः શરીરના રસના સારરૂપ છે शरीरके रसका साररूप है, यत्र અને જેમાં और जिसमें, प्राणाः પ્રાણો प्राण, प्रतिष्ठिताः સ્થિત થયેલા છે प्रतिष्ठित हैं, ताः તે ધમનીઓ वे धमनियां, तत्फलाः તે ઓજરૂપ ફળવાળી છે वह ओजरूप फलवाली हैं, बहुधा वा અથવા તો બહુ પ્રકારે या बहुत प्रकारसे, फलन्ति શાખા પ્રશાખાઓમાં ફળે છે शाखा प्रशाखाओंमें फैलती हैं, इति તેથી इसलिए, महाफलाः તે દશ ધમનીઓ મહાફળવાળી કહેવાય છે महाफला कहलाती हैं, ध्मानात् રસ વગેરેથી ભરપૂર થવાથી रस आदिसे पूर्ण होनेसे, धमन्यः ધમનીઓ धमनियां, स्रवणात् રસ વગેરેનું સ્રવણ કરવાથી रस आदिका स्रवण करनेसे, स्रोतांसि સ્રોતો स्रोतों, सरणात् सिराः અને બીજા પ્રદેશમાં સરકી જવાથી સિરા કહેવાય છે और दूसरे प्रदेशमें सरणसे सिरा कहलाती हैं ॥ ९-१२ ॥

9-12. They are styled the great fruiters because they have for their fruit (as it were) that vital essence whereby all the embodied creatures

subsist, being nourished; that in whose absence the life of all beings would cease to be; that which is the primary essence of the embryo, that which is the quintessence of the fetal life, that which first enters the (embryonic) heart as it begins to develop; that on whose destruction the destruction (of the organism) ensues; that which is the support stationed in the heart; that which is the unctuous element of the body-fluid and that wherein the life-breaths are established. Or, it may be, the arteries are so styled, because they fruition in a great many ways. They are called (dhamanyah) arteries, because they pulsate, (srotansi) channels, because they convey (the essential juices); and (sirah) vessels because they conduct (the blood etc.) from one place to another.

महदादीनि परिरक्षता यत् परिहार्यं यच्च सेव्यं तस्योपदेशः—

**तन्महत् ता महामूलास्तच्चौजः परिरक्षता ।**
**परिहार्या विशेषेण मनसो दुःखहेतवः ॥ १३ ॥**

तत् ते उस, महत् હૃદય हृदय, ताः महामूलाः અને હૃદયરૂપ મૂળવાળી તે સિરાઓ और महामूलवाली सिराओं, तत् च અને તે और उस, ओजः ઓજસનું ओजकी, परिरक्षता રક્ષણ કરનાર મનુષ્યે रक्षा करनेवाले पुरुषको, विशेषेण ખાસ કરીને विशेषतः, मनसः મનને मनको, दुःखहेतवः દુઃખ ઉપજાવનારા હેતુઓનો दुःखी करनेवाले कारणोंका, परिहार्याः ત્યાગ કરવો જોઈએ परित्याग करना चाहिए ॥ १३ ॥

13. He who wishes to protect from harm that great organ (the heart), those great-rooted ones (the channels) and the vital essence, should scrupulously avoid all that causes affliction to the mind.

१३. तन्महद्‌ ताः—तन्महत्त्वात् (ग.)

**हृद्यं यत् स्याद्यदौजस्यं स्रोतसां यत् प्रसादनम् ।**
**तत्तत् सेव्यं प्रयत्नेन प्रशमो ज्ञानमेव च ॥ १४ ॥**

यत् માટે જે इसलिए जो आहारविहार, हृद्यम् હૃદયને હિતકર હોય हृदयके लिए हितकर हो, यत् જે जो, औजस्यम् ઓજસને હિતકર હોય ओजको बढ़ानेवाला हो, यत् અને જે और जो, स्रोतसाम् સ્રોતોનું स्रोतोंको, प्रसादनम् स्यात् તર્પણ કરનારું હોય तर्पण करनेवाला हो, तत् तत् તેને તેને उस उसको, प्रशमः અને શાન્તિ और शान्ति, ज्ञानम् च एव तथा જ્ઞાનને પણ तथा ज्ञानको भी, प्रयत्नेन પ્રયત્નપૂર્વક प्रयत्नपूर्वक, सेव्यम् સેવવાં જોઈએ सेवन करना चाहिए ॥ १४ ॥

14. Moreover, he should have diligent recourse to whatever is good for the heart, good for the vital essence, and is purificatory of the vessels. Similarly, he should have recourse to quiet and wisdom.

प्राणवर्धनादीनामेकैकस्य उत्कृष्टतमत्वम्—

**अथ खल्वेकं प्राणवर्धनानामुत्कृष्टतममेकं बलवर्धनानामेकं बृंहणानामेकं नन्दनानामेकं हर्षणानामेकमयनानामिति ।**

अथ खलु प्राणवर्धनानाम् एकम् પ્રાણ વધારનારાઓમાં એક प्राण बढ़ानेवालोंमें एक, बलवर्धनानाम् एकम् બલ વધારનારાઓમાં એક बलवर्धकोंमें एक, बृंहणानाम् एकम् બૃંહણ કરનારાઓમાં એક बृंहण करनेवालोंमें एक, नन्दनानाम् एकम् આનંદ દેનારાઓમાં એક आनंद देनेवालोंमें एक, हर्षणानाम् एकम् હર્ષ આપનારાઓમાં એક प्रसन्नता पैदा करनेवालोंमें एक, अयनानाम् एकम् इति અને મોક્ષમાર્ગોમાં એક मोक्षमार्गोंमें एक, उत्कृष्टतमम् સર્વથી શ્રેષ્ઠ છે सबसे श्रेष्ठ है;

१५. अयनानाम्—आयतनानाम् (ग.)
,, ,, —नियमानाम् (घ.)

15-(1). Now there is one that is the foremost among those that are promotive of life, one (that is the foremost) among those that are promotive of strength, one (that is the foremost) among those that are roborants, one (that is the foremost) among those that are joy-giving, one (that is the foremost) among those that are inspirating and one (that is the foremost) among those that lead upwards.

**तत्राहिंसा प्राणिनां प्राणवर्धनानामुत्कृष्टतमं, वीर्यं बलवर्धनानां, विद्या बृंहणानाम्, इन्द्रियजयो नन्दनानां, तत्त्वावबोधो हर्षणानां, ब्रह्मचर्यमयनानामिति; एवमायुर्वेदविदो मन्यन्ते ॥ १५ ॥**

**तत्र** તેમાં इनमें, **प्राणिनाम्** પ્રાણીઓની प्राणियों-की, **अहिंसा** અહિંસા अहिंसा, **प्राणवर्धनानाम्** પ્રાણ વધારનારાંઓમાં प्राण बढ़ानेवालोंमें, **वीर्यम्** વીર્ય वीर्य, **बलवर्धनानाम्** બલ વધારનારાંઓમાં बल बढ़ानेवालोंमें, **विद्या** વિદ્યા विद्या, **बृंहणानाम्** બૃંહણ કરનારાંઓમાં बृंहण करनेवालोंमें, **इन्द्रियजयः** ઇન્દ્રિયોનો જય इन्द्रिय-विजय, **नन्दनानाम्** આનંદ દેનારાંઓમાં आनंद देने-वालोंमें, **तत्त्वावबोधः** તત્ત્વનું જ્ઞાન तत्त्वज्ञान, **हर्षणानाम्** હર્ષ આપનારાંઓમાં प्रसन्नता देनेवालोंमें, **ब्रह्मचर्यम्** અને બ્રહ્મચર્ય और ब्रह्मचर्य, **अयनानाम्** મોક્ષમાર્ગોમાં मोक्षमार्गोंमें, **उत्कृष्टतमम् इति** સર્વથી શ્રેષ્ઠ છે सबसे श्रेष्ठ है, **एवम्** આ પ્રમાણે ऐसा, **आयुर्वेदविदः** આયુર્વેદ જાણનારા આચાર્યો आयुर्वेदके आचार्य, **मन्यन्ते** માને છે मानते हैं ॥ १५ ॥

15. Among these, non-violence is the foremost among those that promote the life of creatures; virility (is the foremost) amongst strength-givers, knowledge among roborants, the conquest of the senses among joy-givers, the understanding of truth among inspirators, brahmacharya among the ways that lead upwards. Thus do the knowers of the science of life believe.

आयुर्वेदविदो लक्षणम्—

**तत्रायुर्वेदविदस्तन्त्रस्थानाध्यायप्रश्नानां पृथक्त्वेन वाक्यशो वाक्यार्थशोऽर्थावयवशश्च प्रवक्तारो मन्तव्याः ।**

**तत्र पृथक्त्वेन** ભિન્ન ભિન્न पृथक् पृथक्, **वाक्यशः** વાક્યોથી वाक्योंसे, **वाक्यार्थशः** વાક્યાર્થોથી वाक्यार्थोंसे, **अर्थावयवशः च** અને અર્થના અવયવોથી और अर्थके अवयवोंसे, **तन्त्र- स्थान- अध्याय- प्रश्नानाम्** શાસ્ત્ર-સ્થાન-અધ્યાયો અને પ્રશ્નોનું तन्त्र- स्थान- अध्याय एवं प्रश्नोंका, **प्रवक्तारः** પ્રવચન કરનારાઓને प्रवचन करनेवालोंको, **आयुर्वेदविदः** આયુર્વેદ જાણનારાઓ आयुर्वेद जाननेवाले, **मन्तव्याः** માનવા જોઈએ समझना चाहिए;

16-(1). Now, the knowers of the science of life are to be regarded as those who are able to give an exposition of the system, the sections thereof, the chapters comprising each section and the topics occurring in each chapter, in all the three ways viz., verbatim, with comment and with detailed elucidations.

**तत्राह—कथं तन्त्रादीनि वाक्यशो वाक्यार्थशोऽर्थावयवशश्चोक्तानि भवन्तीति ॥ १६ ॥**

**तत्र** ત્યાં यहां पर, **आह** કોઈ પ્રશ્ન ઊઠાવે છે કે कोई प्रश्न उठाता है कि, **तन्त्रादीनि** શાસ્ત્રો વગેરે तन्त्र आदिको, **वाक्यशः** વાક્યોથી वाक्यसे, **वाक्यार्थशः** વાક્યાર્થોથી वाक्यार्थसे, **अर्थावयवशः च** અને અર્થના અવયવોથી और अर्थावयवसे, **कथम्** કેવી રીતે किस प्रकार, **उक्तानि भवन्ति इति** કહી શકાય છે कह सकते हैं ॥ १६ ॥

16. The question arises— how is the system and the rest expounded verbatim, or with comment or with detailed elucidation?

तन्त्रस्य वाक्यशो वाक्यार्थशोऽर्थावयवशश्चोक्तिः—

**अत्रोच्यते—तन्त्रमार्षं कार्त्स्न्येन यथाम्नायमुच्यमानं वाक्यशो भवत्युक्तम् ॥ १७ ॥**

**अत्र** આ બાબતમાં इस विषयमें, **उच्यते** કહેવામાં આવે છે કે कहा जाता है कि, **आर्षम्** ઋષિઓએ રચેલું ऋषिप्रणीत, **तन्त्रम्** શાસ્ત્ર तन्त्र, **कार्त्स्न्येन** સંપૂર્ણપણે संपूर्णरूपसे, **यथाम्नायम्** પાઠના ક્રમઅનુસાર पाठके क्रमके अनुसार, **उच्यमानम्** કહેવામાં આવતાં कहे जाने पर, **वाक्यशः** વાક્યપુરઃસર वाक्यशः, **उक्तम् भवति** કહ્યું કહેવાય છે कहा हुआ कहा जाता है ॥ १७ ॥

17. To this the answer is—when a system promulgated by a seer is recited in its entirety and in the order of its (original) enunciation, then it is said to be delivered verbatim.

**बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं वाग्भिर्व्याससमासप्रतिज्ञाहेतूदाहरणोपनयनिगमनयुक्ताभिस्त्रिविधशिष्यबुद्धिगम्याभिरुच्यमानं वाक्यार्थशो भवत्युक्तम् ॥ १८ ॥**

**बुद्ध्या** બુદ્ધિથી बुद्धिसे, **सम्यक्** બરાબર भली प्रकार, **अनुप्रविश्य** સમજી લઈને जान कर, **व्यास-** વિસ્તાર विस्तार, **समास-** સંક્ષેપ संक्षेप, **प्रतिज्ञा-** પ્રતિજ્ઞા प्रतिज्ञा, **हेतु-** હેતુ हेतु, **उदाहरण-** ઉદાહરણ उदाहरण, **उपनय-** ઉપનય उपनय, **निगमन-** અને નિગમનથી और निगमनसे, **युक्ताभिः** યુક્ત युक्त, **त्रिविध-** તથા ત્રણ પ્રકારના और तीनों प्रकारके, **शिष्यबुद्धिगम्याभिः** શિષ્યોની બુદ્ધિથી સમજી શકાય એવી शिष्योंकी बुद्धिसे समझा जाये ऐसा, **वाग्भिः** વાણીથી वाणीद्वारा, **उच्यमानम्** કહેવામાં આવતું कहा जाता, **अर्थतत्त्वम्** અર્થનું તત્ત્વ अर्थका तत्त्व, **वाक्यार्थशः** વાક્યાર્થથી वाक्यार्थद्वारा, **उक्तम्** કહેલું कहा हुआ, **भवति** થાય છે होता है ॥ १८ ॥

18. When, having penetrated into the truth of its meaning by means of the understanding, (a system) is propounded in words that are elaborate or succint (as the occasion may demand) by the method of proposition, reason, analogy, application and conclusion, and in manner that is intelligible and appealing to the three types of student-mind, then it constitutes an exposition (of the system) with comment.

**तन्त्रनियतानामर्थदुर्गाणां पुनर्विभावनैरुक्तमर्थावयवशो भवत्युक्तम् ॥ १९ ॥**

**तन्त्रनियतानाम्** શાસ્ત્રમાં આવેલા तन्त्रमें कहे गये, **अर्थदुर्गाणाम्** દુર્બોધ અર્થોનું दुर्बोध अर्थोंका, **पुनः** ફરી फिर, **विभावनैः** વ્યાખ્યાનપૂર્વક व्याख्यानपूर्वक, **उक्तम्** કહેવું એ कहना यह, **अर्थावयवशः** અર્થના અવયવદ્વારા अर्थावयवद्वारा, **उक्तम्** કહેલું कहा हुआ, **भवति** કહેવામાં આવે છે कहा जाता है ॥ १९ ॥

19. When the difficult passages occurring in the treatise are elucidated by further glosses, then the exposition is called a detailed elucidation.

आयुरादीन्यधिकृत्य प्रश्नाः—

**तत्र चेत् प्रष्टारः स्युः—चतुर्णामृक्सामयजुरथर्ववेदानां कं वेदमुपदिशन्त्यायुर्वेदविदः?, किमायुः?, कस्मादायुर्वेदः?, किमर्थमायुर्वेदः?, शाश्वतोऽशाश्वतो वा?, कति कानि चास्याङ्गानि?, कैश्चायमध्येतव्यः?, किमर्थं च? इति ॥ २० ॥**

१७. यथाम्नायम्—यथास्थानम् (ङ.)

१८. शिष्यबुद्धिगम्याभिः—पुरुषबुद्धिगम्याभिः (ग. घ.)

,, ,, —पुरुषबुद्धेरवगम्याभिः (च.)

१९. तन्त्रनियतानामर्थदुर्गाणां—तन्त्रनियतार्थानां (ध.)

,, ,, —तन्त्रनियतार्थद्वन्द्वानाम् (प)

२०. किमर्थमायुर्वेदः—किमर्थमायुर्वेदः किं चायुर्वेदः (क.)

,, ,, —किं चायमायुर्वेदः (ख. घ. ङ.)

परस्पर विरुद्ध, उपक्रमत्वात् ચિકિત્સાવાળાપણાને લીધે चिकित्सा होनेसे, असाध्यः અસાધ્ય છે असाध्य है ॥ १२ ॥

12. Where there is a combination of etiological factors and manifestation of the symptoms of the discordance of all the three humors, the wise declare it to be the Gulma of tri-discordance type. Being characterised by contrariety in treatment, the gulma of the tri-discordance type is considered irremediable.

शोणितगुल्मस्य स्त्रिया एव संभवे हेतुः—

**शोणितगुल्मस्तु खलु स्त्रिया एव भवति न पुरुषस्य, गर्भकोष्ठार्तवागमनवैशेष्यात् ।**

**शोणितगुल्मः तु** શોણિતગુલ્મ તો। रक्तगुल्म तो, **गर्भकोष्ठ-** ગર્ભાશયમાં गर्भाशयमें, **आर्तव** ઋતુ आर्तवके, **आगमन-** આવવાના आनेके, **वैशेष्यात्** વિશેષથી विशेषसे, **स्त्रियाः एव खलु** સ્ત્રીને જ स्त्रीको ही, **भवति** થાય છે होता है, **पुरुषस्य न** પુરુષને નહિ पुरुषको नहीं;

13-(1). The Gulma born of vitiated blood occurs only in women, and not in men, because of their peculiar feature of menstrual discharge from the uterus.

**पारतन्त्र्यादवैशारद्यात् सततमुपचारानुरोधाद्वा वेगानुदीर्णानुपरुन्धत्या आमगर्भे वाऽप्यचिरपतितेऽथवाऽप्यचिरप्रजाताया ऋतौ वा वातप्रकोपणान्यासेवमानायाः क्षिप्रं वातः प्रकोपमापद्यते ॥ १३ ॥**

**पारतन्त्र्यात्** પરાધીનતાથી परतन्त्रताके कारण, **अवैशारद्यात्** અજ્ઞાનતાથી अशिक्षित होनेके कारण, **सततम्** કે નિત્ય अथवा निरंतर, **उपचार-** પતિસેવામાં અથવા ઘરનાં पतिसेवा वा गृहकार्यमें, **अनुरोधात् वा** તત્પર રહેવાથી लगी रहनेसे, **उदीर्णान्** ઉદીર્ણ उपस्थित, **वेगान्** વેગોને वेगोंको, **उपरुन्धत्याः** રોકતી रोकती हुई, **अपि वा** કે अथवा, **आमगर्भे** કાચો ગર્ભ आम गर्भके, **अचिरपतिते** તરતમાં પડી ગયો હોય ત્યારે तुरन्तमें स्राव होनेसे, **अथवा** અથવા अथवा, **अचिर-प्रजातायाः** સુવાવડ આવ્યાને બહુ વખત ન થયો હોય ત્યારે प्रसवके तुरन्त पीछे, **ऋतौ वा** અથવા ઋતુકાલમાં अथवा ऋतुकालमें, **वातप्रकोपणानि** વાતપ્રકોપક દ્રવ્યોનું वातप्रकोपक द्रव्योंका, **आसेवमानायाः** સેવન કરતી સ્ત્રીનો सेवन करती हुई स्त्रीका, **वातः** વાયુ वायु, **क्षिप्रम्** તરત शीघ्र, **प्रकोपम्** પ્રકોપ प्रकुपित, **आपद्यते** પામે છે हो जाता है ॥ १३ ॥

13. Owing to her position of dependence, ignorance, and continual occupation in service and duty, she restrains the natural urges of the body. Either just after abortion or mis-carriage, or just after delivery or during the menstrual period, if a woman takes vata-provoking foods, her vata gets quickly provoked.

रक्तगुल्मस्य निदान-संप्राप्ति-लक्षणानि—

**स प्रकुपितो योनिमुखमनुप्रविश्यार्तवमुपरुणद्धि, मासि मासि तदार्तवमुपरुध्यमानं कुक्षिमभिवर्धयति ।**

**प्रकुपितः** પ્રકોપ પામેલો प्रकुपित, **सः** તે वह वायु, **योनिमुखम्** યોનિના મુખમાં योनिके मुखमें, **अनुप्रविश्य** પ્રવેશ કરીને प्रविष्ट हो कर, **आर्तवम्** આર્તવને आर्तवको, **उपरुणद्धि** રોકી રાખે છે रोक देता है, **मासि मासि** અને મહીને મહીને प्रत्येक मासमें, **उपरुध्यमानम्** રોકાઈ જતું रुकता हुआ, **तत्** તે वह, **आर्तवम्** આર્તવ आर्तव, **कुक्षिम्** ઉદરને कुक्षिको, **अभिवर्धयति** વધારતું જાય છે बढा देता है।

14-(1). In that provoked condition the vata entering the orifice of the uterus obstructs the flow of the mens-

१४. योनिमुखम्—योन्या मुखम् (द.)

trual blood. Month by month the obstructed menses distends the uterine cavity.

**तस्याः शूलकासातीसारच्छर्द्यरोचकाविपाकाङ्गमर्दनिद्रालस्यस्तैमित्यकफप्रसेकाः समुपजायन्ते, स्तनयोश्च स्तन्यम्, ओष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यम्, अत्यर्थं ग्लानिश्चक्षुषोः, मूर्च्छा, हृल्लासः, दोहदः, श्वयथुश्च पादयोः, ईषच्चोद्गमो रोमराज्याः, योन्याश्चाटालत्वम्, अपि च योन्या दौर्गन्ध्यमास्रावश्चोपजायते, केवलश्चास्या गुल्मः पिण्डित एव स्पन्दते, तामगर्भां गर्भिणीमित्याहुर्मूढाः ॥ १४॥**

तस्याः તેને उसको, शूल- શૂળ शूल, कास- ઉધરસ कास, अतीसार- અતીસાર अतीसार, छर्दि- ઉલટી वमन, अरोचक- અરુચિ अरोचक, अविपाक- અપચો अविपाक, अङ्गमर्द- અંગમર્દ अंगमर्द, निद्रा- નિદ્રા निद्रा, आलस्य- આળસ आलस्य, स्तैमित्य સ્તિમિતતા स्तिमितता, कफप्रसेकाः અને કફપ્રસેક और कफप्रसेक, समुपजायन्ते થાય છે उत्पन्न हो जाते हैं, स्तनयोः च સ્તનોમાં स्तनोंमें, स्तन्यम् ધાવણ દૂધ, ओष्ठयोः હોઠ ओष्ठ, स्तनमण्डलयोः च અને સ્તનમંડળ પર और स्तन मण्डलोंमें कार्ष्ण्यम् કાળાશ कालापन, चक्षुषोः આંખોમાં आंखोमें, अत्यर्थम् અતિશય अत्यन्त, ग्लानिः ગ્લાનિ ग्लानि, मूर्च्छा મૂર્છા मूर्छा, हृल्लासः મોળ જી मचलाना, दोहदः દોહદ गर्भावस्थाकी तृष्णा, पादयोः च પગે पैरमें, श्वयथुः સોજો शोथ, रोमराज्याः च રુંવાડાંનું रोमराजीका, ईषत् જરા किञ्चित् उद्गमः ઊભાં થવું आविर्भाव, योन्याः યોનિની योनिका, चाटालत्वम् વિસ્તૃતતા विस्तार, अपि च અને વળી और, योन्याः યોનિની योनिकी, दौर्गन्ध्यम् દુર્ગંધ दुर्गन्ध, आस्रावः च તથા તેનો સ્રાવ और उसका स्राव, उपजायते થાય છે उत्पन्न होता है, अस्याः च અને તેનો और इसको, केवलः આખો सम्पूर्ण रूपमें, गुल्मः ગુલ્મ गुल्म, पिण्डितः ગોળો બનીને पिण्डाकार, एव જ ही, स्पन्दते ફરકે છે स्पन्दन करता है, मूढाः મૂઢ લોકો मूर्ख लोग, ताम् તે उस, अगर्भाम् ગર્ભરહિત સ્ત્રીને अगर्भवती स्त्रीको, गर्भिणीम् ગર્ભવાળી છે गर्भवती है, इति એમ ऐसा, आहुः કહે છે कहते हैं;

14. The patient is subject to colicky pain, cough, diarrhoea, vomiting, anorexia, misdigestion, body-aches, somnolence, indolence, rigidity and excessive mucus-secretion. There appear milk in the breasts, dark shade on the breasts and the lips, excessive weariness in the eyes, fainting, nausea, longings, edema of the feet, slight horripilation of the abdominal hair, dilatation of the uterine channel and also emanation of bad odor and discharge from the uterine channel. The gulma pulsates as one whole rounded mass. Such a woman, who has not conceived at all, the ignorant declare to be a pregnant woman.

१४. निद्रालस्यस्तैमित्यकफप्रसेकाः—निद्रालस्यकफप्रसेकाः (ख.)
,, कार्ष्ण्यम्, अत्यर्थंग्लानिश्चक्षुषोः — कार्ष्ण्यम्, ग्लानिश्चक्षुषोः (ध.)
,, ईषच्चोद्गमो रोमराज्याः—ईषल्लोमराज्याः (ख.)
,, गुल्मः पिण्डित एव स्पन्दते - गुल्मः स्पन्दते (ग.)

गुल्मानां पूर्वरूपाणि—

**एषां तु खलु पञ्चानां गुल्मानां प्रागभिनिर्वृत्तेरिमानि पूर्वरूपाणि भवन्ति;**

एषां तु આ इन, पञ्चानाम् પાંચેય पांचों, गुल्मानाम् ગુલ્મોના गुल्मोंके, अभिनिर्वृत्तेः નિષ્પન્ન થયા होनेसे, प्राक् પહેલાં पूर्व, इमानि खलु આ ये, पूर्वरूपाणि પૂર્વરૂપો पूर्वरूप, भवन्ति થાય છે होते हैं;

15-(1). Here are the premonitory symptoms of the five kinds of gulma appearing before their actual manifestation.

१५. पूर्वरूपाणि—रूपाणि (ग.)
,, ,, —गुल्मपूर्वरूपाणि (क.)

**तद्यथा—अनन्नाभिलषणम्, अरोचकाविपाकौ, अग्निवैषम्यं, विदाहो भुक्तस्य, पाककाले चायुक्त्या छर्द्युद्गारौ, वातमूत्रपुरीषवेगानां चाप्रादुर्भावः, प्रादुर्भूतानां चाप्रवृत्तिरीषदागमनं वा वातशूलाटोपान्त्रकूजनापरिहर्षणातिवृत्तपुरीषताः, अबुभुक्षा, दौर्बल्यं, सौहित्यस्य चासहत्वमिति ॥ १५॥**

तत् यथा જેમકે जैसे, **अनन्नाभिलषणम्** અન્નની અનિચ્છા भोजनमें अनिच्छा, **अरोचक-** અરુચિ अरोचक, **अविपाकौ** અપચો अविपाक, **अग्निवैषम्यम्** અગ્નિની વિષમતા अग्निकी विषमता, **भुक्तस्य** ખાધેલા ભોજનનો खाये हुए भोजनमें, **विदाहः** વિદાહ विदाह, **पाककाले च** અને પાચન સમયે तथा भोजनके जीर्ण होनेके समय, **अयुक्त्या** અકારણ बिना कारणके, **छर्दि-** ઉલટી वमन, **उद्गारौ** ઓડકાર और डकार, **वात-** વાત वायु, **मूत्र-** મૂત્ર मूत्र, **पुरीष-** અને મળના और मलके, **वेगानाम् च** વેગોનું वेगोंका, **अप्रादुर्भावः** ઉત્પન્ન ન થવું उत्पन्न न होना, **प्रादुर्भूतानाम् च** અને ઉત્પન્ન થયેલા વેગોનું तथा उत्पन्न हुए वेगोंका, **अप्रवृत्तिः** બહાર ન આવવું बाहिर न आना, **ईषत्** અથવા તો જરાક या थोडा, **आगमनम् वा** આવવું आना, **वातशूल-** વાતશૂલ वायुशूल, **आटोप-** આટોપ आटोप, **अन्त्रकूजन-** અન્ત્રકૂજન आंतोंमें गुडगुडाहट, **परिहर्षण-** રોમાંચ लोमहर्ष, **अतिवृत्त- पुरीषताः** તથા ઉદાવર્ત एवं उदावर्त, **अबुभुक्षा** ભૂખ ન લાગવી भूख न लगना, **दौर्बल्यम्** દુર્બળતા दुर्बलता, **सौहित्यस्य च** અને તૃપ્તિપૂર્વક ભોજનનું और पेट भरके खानेका, **असहत्वम् इति** સહન ન થઇ શકવું सहन न होना ॥१५॥

15. They are:— inappetence, anorexia, misdigestion, irregular gastric fire, burning sensation after meals, vomiting and eructations separately during the process of digestion without external causes, lack of urge for the discharge of flatus, urine and feces, or if the urge is generated, there is fruitless effort at discharge or meagre discharge, colicky pain due to vata, distension of abdomen, intestinal gurglings, horripilation, very round and scyballous stools, inappetence, debility and intolerance to full meal.

१५. पाककाले—विपाककाले (ज.)
,, प्रादुर्भूतानां चाप्रवृत्तिरीषदागमनं वा—प्रादुर्भूतानां चाप्रवृत्तिः सह ईषदागमनं वा (ड.)
,, वातशूलाटोपा°—शूलाटोपा° (ब. ड.)
,, अबुभुक्षा—बुभुक्षा (ब.)
,, सौहित्यस्य चासहत्वमिति—सौहित्यस्य चासहत्वमिति गुल्मपूर्वरूपाणि भवन्ति (ख.)

सर्वेषु गुल्मेषु वातस्यावश्यम्भावित्वम्—

**सर्वेष्वपि खल्वेतेषु गुल्मेषु न कश्चिद्वातादृते संभवति गुल्मः ।**

**एतेषु** આ इन, **सर्वेषु अपि** બધાય सभी, **गुल्मेषु खलु** ગુલ્મોમાં गुल्मोंमें, **कश्चित्** કોઈ પણ कोई, **गुल्मः** ગુલ્મ गुल्म, **वातात्** વાયુ वायुके, **ऋते** વગર बिना, **न** નથી नहीं, **संभवति** સંભવતો उत्पन्न होना ।

16-1. Of all these varieties of gulma not one is born without the provocation of vata.

गुल्मस्य चिकित्सासूत्रम्—

**तेषां सान्निपातिकमसाध्यं ज्ञात्वा नैवोपक्रमेत, एकदोषजे तु यथास्वमारम्भं प्रणयेत्, संसृष्टांस्तु साधारणेन कर्मणोपचरेत् ।**

**तेषाम्** તેઓમાંથી उनमें, **सान्निपातिकम्** સાન્નિપાતિક ગુલ્મને सन्निपातजन्य गुल्मको, **असाध्यम्** અસાધ્ય असाध्य, **ज्ञात्वा** જાણીને समझ कर, **न एव उपक्रमेत** તેનો ઉપચાર ન જ કરવો उसकी चिकित्सा न करे, **एकदोषजे तु** એકદોષજન્ય ગુલ્મમાં તો एकदोषजन्यमें तो, **यथास्वम्** દોષ અનુસાર दोषके अनुसार, **आरम्भम्** ચિકિત્સા चिकित्साका, **प्रणयेत्** કરવી જોઈએ प्रारम्भ करे, **संसृष्टान् तु** અને બે દોષથી ઉત્પન્ન થયેલા ગુલ્મોની

१६. सान्निपातिकम्—सन्निपातजम् (क.)

संसृष्टदोषजन्य गुल्मोंकी, साधारणेन સાધારણ સાધારણ, कर्मणा કર્મથી कर्मसे, उपचरेत् ચિકિત્સા કરવી चिकित्सा करे;

16-(2). Of them, knowing the gulma born of tri-discordance to be iucurable, one should not undertake to treat it. The gulma born of one morbid humor must be treated from the very beginning according to the requirements of that morbid humor. That of the double discordance must be treated on the usual line of treatment indicated.

**यच्चान्यदप्यविरुद्धं मन्येत तदप्यवचारयेद्विभज्य गुरुलाघवमुपद्रवाणां, गुरूनुपद्रवांस्त्वरमाणश्चिकित्सेज्जघन्यमितरान् ।**

यत् च જે जो, अन्यत् બીજું કંઇ अन्य कुछ, अपि વળી भी, अविरुद्धम् मन्येत વિરુદ્ધ ન જણાય अविरोधी समझे, तत् अपि તે પણ उसे भी, उपद्रवाणाम् ઉપદ્રવોની उपद्रवोंकी, गुरुलाघवम् ગુરુતા અને લઘુતાને गुरुता एवं लघुताका, विभज्य વિભાગ કરી विभाग करके, अवचारयेत् પ્રયોજવું करे, गुरून् મોટા भारी, उपद्रवान् ઉપદ્રવોની उपद्रवोंकी, त्वरमाणः જલદી शीघ्रतासे, चिकित्सेत् ચિકિત્સા કરવી જોઈએ चिकित्सा करे, इतरान् અને બીજાઓની और दूसरोंकी, जघन्यम् ચિકિત્સા પછી કરવી જોઈએ चिकित्सा पीछे करे ।

16-(3). One may use any other remedies which are not considered antagonistic, and classifying the conditions into serious and mild, one should remedy the serious conditions first and then undertake the treatment of mild ones.

१६. यच–यद्वा (ख.)
,, तदप्यवचारयेत्–तदवधारयेत् (ख.)
,, विभज्य गुरुलाघवमुपद्रवाणां–गुरुलाघवमुपद्रवाणां समीक्ष्य (ख.)

**त्वरमाणस्तु विशेषमनुपलभमानो गुल्मेष्वात्ययिके कर्मणि वातचिकित्सितं प्रणयेत्, स्नेहस्वेदौ वातहरौ स्नेहोपसंहितं च मृदु विरेचनं बस्तींश्च; अम्ललवणमधुरांश्च रसान् युक्त्याऽवचारयेत् ।**

त्वरमाणः तु ઉતાવળે ચિકિત્સા કરતાં शीघ्रता करते हुए, गुल्मेषु ગુલ્મોને गुल्मोंमें, विशेषम् ભેદ भेदका, अनुपलभमानः જાણી ન શકાય તો ज्ञान न हो तो, आत्ययिके તાત્કાલિક જરુરી, कर्मणि કાર્યમાં कार्यमें, वातचिकित्सितम् વાતચિકિત્સા वातचिकित्सा, प्रणयेत् કરવી करे, वातहरौ વાતહર वातहर, स्नेहस्वेदौ સ્નેહન તથા સ્વેદન स्नेहन तथा स्वेदन, स्नेहोपसंहितम् સ્નેહયુક્ત स्नेहसे मिश्रित, मृदु મૃદુ मृदु, विरेचनम् च વિરેચન विरेचन, बस्तीन् च બસ્તિઓ बस्तियों, अम्ल- તેમજ અમ્લ एवं अम्ल, लवण- લવણ लवण, मधुरान् च અને મધુર और मधुर, रसान् રસોને रसोंका, युक्त्या યુક્તિપૂર્વક युक्तिसे, अवचारयेत् પ્રયોગ કરવો प्रयोग करे ।

16-(4). In cases of emergency when the specific nature of the gulma cannot be recognised, the physician should give the treatment for vata-gulma. Oleation and sudation are curative of vata. Then mild and unctuous purgation and enemata, and acid, salt and sweet tastes are to be skilfully administered.

**मारुते ह्युपशान्ते स्वल्पेनापि प्रयत्नेन शक्योऽन्योऽपि दोषो नियन्तुं गुल्मेष्विति ॥ १६ ॥**

हि કારણકે क्योंकि, मारुते વાયુ वायुके, उपशान्ते શાન્ત થતાં शान्त होने पर, गुल्मेषु ગુલ્મોમાં गुल्मोंमें, अन्यः अपि બીજો પણ दूसरा भी, दोषः દોષ दोष, स्वल्पेन अपि થોડાક જ थोड़ेसे भी, प्रयत्नेन પ્રયત્ને प्रयत्नसे, नियन्तुम् शक्यः इति કાબુમાં લેવો શક્ય છે रोका जा सकता है ॥ १६ ॥

१६. अनुपलभमानो–अनुपलभ्य (घ.)
,, युक्त्या–युक्तितः (क. ग. च. ध.)
,, गुल्मेष्विति–गुल्मेष्वपि (ग.)

16. When vata is once controlled the other accompanying disorders admit of being controlled, with very little effort.

भवति चात्र—

गुल्मिनामनिलशान्तिरुपायैः
सर्वशो विधिवदाचरितव्या ।
मारुते ह्यवजितेऽन्यमुदीर्णं
दोषमल्पमपि कर्म निहन्यात् ॥ १७॥

अत्र च भवति આ વિષયમાં શ્લોક છે કે इस विषयमें श्लोक है कि, उपायैः ઉપાયો उपायोंसे, गुल्मिनाम् ગુલ્મ રોગીઓના गुल्म रोगियोंमें, अनिलशान्तिः વાયુની શાન્તિ वायुकी शान्ति, सर्वशः સંપૂર્ણ संपूर्ण, विधिवत् વિધિપુરઃસર विधिके अनुसार, आचरितव्या કરવી करनी चाहिए, हि કારણ કે क्योंकि, मारुते વાયુ वायुको, अवजिते જીતાઈ જતાં जीत लेनेपर, अन्यम् બીજા अन्य, उदीर्णम् दोषम् વેગવાન બનેલા દોષને बढ़े हुए दोषको, अल्पम् અલ્પ छोटासा, अपि कर्म કર્મ પણ कर्म भी, निहन्यात् નષ્ટ કરે છે दूर करता है ॥ १७॥

Here is a verse again—

17. The alleviation of vata is to be systematically tried by all possible means in case of gulma. If morbid vata is subdued, though the other morbid humors are provoked, they become easily amenable to cure.

अध्यायार्थसंग्रहः —

तत्र श्लोकः—

संख्या निमित्तं रूपाणि पूर्वरूपमथापि च ।
दिष्टं निदाने गुल्मानामेकदेशश्च कर्मणाम् ॥ १८॥

तत्र તે વિષયમાં उस विषयमें, श्लोकः ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, गुल्मानाम् निदाने ગુલ્મનિદાનમાં गुल्मनिदानमें, संख्या સંખ્યા संख्या, निमित्तम् નિમિત્ત कारण, रूपाणि રૂપ रूप, अथ अपि च અને વળી और, पूर्वरूपम् પૂર્વરૂપ पूर्वरूप, कर्मणाम् અને ચિકિત્સાનો चिकित्साका, एकदेशः च એક ભાગ एक भाग, दिष्टम् બતાવ્યો છે बताया गया है ॥ १८॥

Here is the recapitulatory verse:—

18. The number, cause, characteristics and premonitory symptoms and an aspect of the treatment, have all been shown in the pathology of gulma.

१८. दिष्टं-दृष्टं (द.)
,, एकदेशश्च-उपदेशश्च (ग.)

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
गुल्मनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशके बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा संस्कृत इस शास्त्रके, निदानस्थाने નિદાનસ્થાન વિષે निदानस्थानमें, गुल्मनिदानम् 'ગુલ્મનિદાન' 'गुल्मनिदान' नाम નામનો नामका, तृतीयः ત્રીજો तीसरा, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ३॥

3. Thus in the section on Pathology in the treatise compiled by Agnivesa and revised by Caraka, the third chapter entitled, "The Pathology of Gulma" is completed.

## चतुर्थोऽध्यायः ।

### ચોથો અધ્યાય अध्याय चौथा

### Chapter IV

प्रमेहनिदानाध्यायोपक्रमः—

अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ १ ॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

अथ अतः હવે અહીંથી अब आगे, 'प्रमेहनिदानम्' 'પ્રમેહનિદાન' નામના અધ્યાયનું 'प्रमेहनिदान' नामके

व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

1. We shall now expound "The Pathology of the Anomalies of Urinary Secretion".

2. Thus declared the worshipful Atreya.

प्रमेहसंख्या—

**त्रिदोषकोपनिमित्ता विंशतिः प्रमेहा भवन्ति विकाराश्चापरेऽपरिसंख्येयाः। तत्र यथा त्रिदोषप्रकोपः प्रमेहानभिनिर्वर्तयति तथाऽनुव्याख्यास्यामः।**

त्रिदोष- कोप- निमित्ताः- ત્રણે દોષોના કોપને લીધે तीनों दोषोंके कोपके कारण, विंशतिः વીસ बीस, प्रमेहाः પ્રમેહો प्रमेह, अपरे च અને બીજા और दूसरे, अपरिसंख्येयाः અગણિત असंख्य, विकाराः રોગો विकार, भवन्ति થાય છે होते हैं; तत्र त्रिदोष- प्रकोपः ત્રણે દોષોનો પ્રકોપ तीनों दोषोंका प्रकोप, प्रमेहान् પ્રમેહોને प्रमेहोंको, यथा જે પ્રકારે जिस प्रकारसे, अभिनिर्वर्तयति ઉત્પન્ન કરે છે उत्पन्न करता है, तथा તે રીતે उस प्रकारसे, अनुव्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ ३ ॥

3. Classified according to the provocation of the three humors, there are twenty disorders of the urinary secretion; while there are innumerable conditions where urine is affected secondarily. we shall now expound urinary disorders resulting from the provocation of the three humors.

निदान-दोष-दूष्यविशेषेभ्यो विकारविघातभावाभावप्रतिविशेषाः—

**इह खलु निदानदोषदूष्यविशेषेभ्यो विकारविघातभावाभावप्रतिविशेषा भवन्ति।**

इह खलु આ શરીરમાં इस शरीरमें, निदान- નિદાન निदान, दोष- દોષ दोष, दूष्य- અને દૂષ્યના और दूष्यके, विशेषेभ्यः ભેદોથી भेदोंसे, विकार-विघात-भाव રોગોની અનુત્પત્તિ रोगोंकी अनुत्पत्ति, अभाव- અને રોગોની ઉત્પત્તિના और रोगोंकी उत्पत्तिकी, प्रतिविशेषाः ભિન્ન ભિન્ન વિશેષતાઓ भिन्न भिन्न विशेषतायें, भवन्ति થાય છે होती हैं;

4-1. Here we shall describe the suppression or the incidence of the disease which occurs as a result of the variations in the etiological factors, intensity of morbid humors and susceptibility of the body-elements.

**यदा ह्येते त्रयो निदानादिविशेषाः परस्परं नानुबध्नन्त्यथवा कालप्रकर्षादबलीयांसोऽथवाऽनुबध्नन्ति न तदा विकाराभिनिर्वृत्तिः, चिराद्वाऽप्यभिनिर्वर्तन्ते, तनवो वा भवन्त्ययथोक्तसर्वलिङ्गा वा; विपर्यये विपरीताः; इति सर्वविकारविघातभावाभावप्रतिविशेषाभिनिर्वृत्तिहेतुर्भवत्युक्तः॥४॥**

यदा हि જ્યારે जब, एते એ ये, त्रयः ત્રણ तीन, निदानादि- નિદાન આદિ निदान आदि, विशेषाः ભેદો भेद, परस्परम् પરસ્પર परस्पर, न अनुबध्नन्ति અનુસરતા નથી नहीं अनुसरण करते, अथवा અથવા अथवा, कालप्रकर्षात् લાંબે કાળે दीर्घ कालमें, अथवा अबलीयांसः બળહીન થએલા अथवा बलहीन हुए, अनुबध्नन्ति અથવા પરસ્પર અનુસરણ કરે છે परस्पर अनुसरण करते हैं, तदा ત્યારે तब, न विकाराभिनिर्वृत्तिः વિકારની ઉત્પત્તિ થતી નથી रोगकी उत्पत्ति नहीं होती, चिराद्वा अपि અથવા તો લાંબે કાળે अथवा तो देरसे, अभिनिर्वर्तन्ते રોગો ઉત્પન્ન થાય છે रोग उत्पन्न होते हैं, तनवः वा અથવા દુર્બળ अथवा दुर्बल, अयथोक्तसर्वलिङ्गाः वा અથવા કહેલાં સર્વ લક્ષણો રહિત अथवा कहे हुए सर्व लक्षणोंसे रहित, भवन्ति ઉત્પન્ન થાય છે उत्पन्न होते हैं,

४. विकारविघात°–विकाराणां विघात° (ग.)

,, विपर्यये–विपर्ययेण

विपर्यये વિપરીત હાલતમાં विपरीत स्थितिमें, विपरीताः વિપરીત થાય છે विपरीत होते हैं, इति આ પ્રમાણે इस प्रकार, सर्वविकारविघातभाव- સર્વ રોગોની અનુત્પત્તિ सब रोगोंकी अनुत्पत्ति, अभाव- સર્વ રોગોની ઉત્પત્તિને और सब रोगोंकी उत्पत्तिकी, प्रतिविशेष- ભિન્ન ભિન્ન વિશેષતાઓની भिन्न भिन्न विशेषताओंकी, अभिनिर्वृत्तिः ઉત્પત્તિનો उत्पत्तिका, हेतुः હેતુ हेतु, उक्तः કહ્યો कहा, भवन्ति છે है ॥ ४ ॥

4. If these three factors mainly the etiological factors etc. do not mutually associate or support, or if they do so after a long lapse of time, or in a very mild form, either there occurs no manifestation of the disease at all or the disease takes a long period to evolve, or appears in an ambulatory or abortive form. Under the contrary conditions, there occur contrary results. Thus are laid down the different causes of the modes of incidence or suppression of all diseases.

कफप्रमेहस्य निदानम् —

**तत्रेमे त्रयो निदानादिविशेषाः श्लेष्मनिमित्तानां प्रमेहाणामाश्वभिनिर्वृत्तिकरा भवन्ति;**

तत्र इमे આ ये, त्रयः ત્રણે तीनों, निदानादि- નિદાન વગેરે निदान आदि, विशेषाः ભેદો भेद, श्लेष्मनिमित्तानाम् કફજન્ય कफजन्य, प्रमेहाणाम् પ્રમેહોની प्रमेहोंकी, आशु જલ્દી शीघ्र, अभिनिर्वृत्तिकराः ઉત્પત્તિ કરનારા उत्पत्ति करनेवाले, भवन्ति થાય છે होते हैं;

5-(1). These three special pathological conditions cause the rapid manifestation of the anomalies of urinary secretion born of kapha.

**तद्यथा—हायनकयवकचीनकोद्दालकनैषधेत्कटमुकुन्दकमहाव्रीहिप्रमोदकसुगन्धकानां नवानामतिवेलमतिप्रमाणेन चोपयोगः,**

तद् यथा જેમકે जैसे कि, नवानाम् નવાં नये, हायनक- હાયનક हायनक, यवक યવક यवक, चीनक- ચીનક चीनक, उद्दालक- ઉદ્દાલક उद्दालक, नैषध- નૈષધ नैषध, इत्कट- ઇત્કટ इत्कट, मुकुन्दक- મુકુન્દક मुकुन्दक, महाव्रीहि- મહાવ્રીહિ महाव्रीहि, प्रमोदक- પ્રમોદક प्रमोदक, सुगन्धकानाम् અને સુગંધકોનો और सुगन्धकोंका, अतिवेलम् વારંવાર बारबार, अतिप्रमाणेन च અતિ પ્રમાણમાં अधिक मात्रामें, उपयोग ઉપયોગ उपयोग,

5-(2). They are the frequent and excessive use of new rice (Hayanka), Yavaka, Cinaka, Uddalaka, Naisadha, Itkata, Mukundaka, Mahavrihin, Pramodaka, and Sugandhaka grains.

**तथा सर्पिष्मतां नवहरेणुमाषसूप्यानां, ग्राम्यानूपौदकानां च मांसानां, शाकतिलपललपिष्टान्नपायसकृशराविलेपीक्षुविकाराणां, क्षीरनवमद्यमन्दकदधिद्रवमधुरतरुणप्रायाणां चोपयोगः,**

तथा તથા तथा, सर्पिष्मताम् ઘી વાળાથી घृतबहुल, नव- નવા नये, हरेणु- વટાણા मटर, माष- અડદ વગેરે उड़द वगेरह, सूप्यानाम् દાળની જાતોનો दालोंकी जातियोंका, ग्राम्य- ગ્રામ્ય ग्राम्य, आनूप- આનૂપ आनूप, औदकानाम् અને જળચરોના और जलचरोंके, मांसानाम् માંસોનો मांसोका, शाक- શાક शाक, तिलपलल- તલવટ तिलका कल्क, पिष्टान्न- પિષ્ટાન્ન पिष्टान्न, पायस- દૂધપાક खीर, कृशरा- કૃશરા कृशरा, विलेपी વિલેપી विलेपी, इक्षु- શેરડીની गन्नेसे, विकाराणाम् બનાવટોનો बनी हुई चीजोंका, क्षीर- દૂધ दूध, नवमद्य- નવું મદ્ય नया मद्य, मन्दकदधि- પૂરું નહિ જામેલું દહીં मन्दजात दधि, द्रव- પ્રવાહી तरल, मधुर- મધુર मधुर, तरुणप्रायाणाम् च અને પ્રાયઃ નવાં દ્રવ્યોનો और प्रायः नये द्रव्योंका, उपयोगः ઉપયોગ उपयोग,

5-(3). Similarly the use of new peas black-gram and other pulses along with ghee, of the flesh of domestic, wetland and aquatic

animals; of vegetables, til, til-paste, flour, milk-pudding, kedgeree, thick-gruel and the preparations of sugar-cane juice, or the frequent use of milk, fresh wine, unformed curds, or liquid, sweet and unripe articles.

**मृजाव्यायामवर्जनं, स्वप्नशयनासनप्रसङ्गः, यश्च कश्चिद्विधिरन्योऽपि श्लेष्ममेदोमूत्रसंजननः, स सर्वो निदानविशेषः ॥ ५ ॥**

**मृजा**- ઉદ્વર્તન उबटन, **व्यायाम**- અને વ્યાયામનો और व्यायामका, **वर्जनम्** ત્યાગ त्याग, **स्वप्न**- નિદ્રા निद्रा, **शयन**- શય્યા शयन, **आसन**- બેઠકનું आसनका, **प्रसङ्गः** નિરંતર સેવન निरंतर सेवन, **अन्यः अपि** બીજો પણ और भी, **यः कश्चित्** જે કોઈ जो कोई, **श्लेष्म**- કફ कफ, **मेदः**- મેદ मेद, **मूत्र**- અને મૂત્રનો और मूत्रका, **संजननः** ઉત્પાદક उत्पादक, **विधिः** વિધિ હોય विधि हो, **सः** તે वह, **सर्वः** બધો सब, **निदानविशेषः** નિદાન વિશેષ છે निदानविशेष है ॥ ५ ॥

5. Avoidance of cleanliness and exercise, indulgence in sleeping, lying and sedentary habits, and whatever other factors are likely to increrse kapha, fat and urine—these are all special etiological factors.

**बहुद्रवः श्लेष्मा दोषविशेषः ॥ ६ ॥**

**बहुद्रवः** બહુ પાતળો बहुत पतला, **श्लेष्मा** કફ कफ, **दोषविशेषः** દોષવિશેષ છે दोषविशेष है ॥ ६ ॥

6. The special morbific factor of the humor is excessive fluidity of kapha (body-colloid).

कफप्रमेहस्य दूष्याः—

**बह्वबद्धं मेदो मांसं शरीरजक्लेदः शुक्रं शोणितं वसा मज्जा लसीका रसश्चौजःसंख्यात इति दूष्यविशेषाः ॥ ७ ॥**

**बहु** ઘણો बहुत, **अबद्धम्** શિથિલ ढीला, **मेदः** મેદ मेद, **मांसम्** માંસ मांस, **शरीरजक्लेदः** શરીરજન્ય ક્લેદ शरीरजन्य क्लेद, **शुक्रम्** વીર્ય शुक्र, **शोणितम्** રક્ત रक्त, **वसा** વસા वसा, **मज्जा** મજ્જા मज्जा, **लसीका** લસીકા लसीका, **ओजःसंख्यातः** અને ઓજ નામનો और ओजनामक, **रसः** રસ रस, **इति** એ ये, **दूष्यविशेषाः** દૂષ્યવિશેષ છે दूष्यविशेष हैं ॥ ७ ॥

7. The special features of susceptible body-elements are these—excessiveness and diminished viscousness of the adipose tissue, muscular tissue, body fluid, semen, blood, fat, marrow, lymph and the fluid which is called the vital essence.

कफप्रमेहस्य संप्राप्तिः—

**त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते, प्रागतिभूयस्त्वात्; स प्रकुपितः क्षिप्रमेव शरीरे विसृप्तिं लभते, शरीरशैथिल्यात्; स विसर्पन् शरीरे मेदसैवादितो मिश्रीभावं गच्छति, मेदसश्चैव बह्वबद्धत्वान्मेदसश्च गुणैः समानगुणभूयिष्ठत्वात्; स मेदसा मिश्रीभवन् दूषयत्येनत्, विकृतत्वात्; स विकृतो दुष्टेन मेदसोपहितः शरीरक्लेदमांसाभ्यां संसर्गं गच्छति, क्लेदमांसयोरतिप्रमाणाभिवृद्धत्वात्;**

**एषाम्** આ इन, **त्रयाणाम्** ત્રણે तीनों, **निदानादि**- નિદાન આદિના निदान आदिके, **विशेषाणाम्** ભેદોના भेदोंका, **सन्निपाते**- સન્નિપાત થતાં सन्निपात होने पर, **प्राक्**- પ્રથમ प्रथम, **अतिभूयस्त्वात्** બહુ વધારે હોવાથી बहुत अधिक होनेसे, **श्लेष्मा** કફ कफ, **क्षिप्रम्** જલ્દી शीघ्र, **प्रकोपम्** પ્રકોપને प्रकोपको, **आपद्यते** પામે છે प्राप्त होता है, **प्रकुपितः** પ્રકુપિત થએલો प्रकुपित हुआ,

७. बह्वबद्धं—बहुबद्धं (च. ङ.)
,, ओजःसंख्यात—ओजःसंख्य (च.)

८. मिश्रीभवन्—मिश्रीभावं गच्छन् (क. ध. छ. त.)
,, दूषयति—संदूषयति (च.)
,, मेदसोपहितः—मेदसोपहतः (प.)

सः તે वह, शरीरशैथिल्यात् શરીરની શિથિલતાને લીધે देहकी शिथिलताके कारण, शरीरे શરીરમાં शरीरमें, क्षिप्रम् एव તરત જ तुरन्त ही, विसृप्तिम् लभते પ્રસાર પામે છે फैल जाता है, मेदसः च एव અને મેદ और मेदके, बहु-अबद्धत्वात् બહુ અને ઢીલો હોવાથી अधिक और शिथिल होनेके कारण, मेदसः च અને મેદના और मेदके, गुणैः ગુણો गुणोंसे, समानगुण- भूयिष्ठत्वात् જેવા બહુ ગુણોવાળો હોવાથી अधिक समान गुणोंवाला होनेसे, शरीरे શરીરમાં शरीरमें, विसर्पन् ફેલાઈને फैल कर, सः તે वह, मेदसा एव મેદની સાથે જ मेदके साथ ही, आदितः પ્રથમથી प्रथम, मिश्रीभावम् મિશ્રીભાવને मिश्रीभावको, गच्छति પામે છે प्राप्त होता है, मेदसा મેદ સાથે मेदके साथ, मिश्रीभवन् મિશ્ર થઈને मिल-कर, सः તે वह, विकृतत्वात् વિકૃતપણાને લીધે विकृ-तताके कारण, एनत् એને इसको, दूषयति દૂષિત કરે છે दूषित करता है, विकृतः વિકૃત થયેલો विकृत हुआ, सः તે वह, क्लेदमांसयोः ક્લેદ અને માંસના क्लेद और मांसके, अतिप्रमाण- અતિપ્રમાણમાં अतिप्रमाणमें, अभि-वृद्धत्वात् વધવાથી बढ़ जानेसे, दुष्टेन मेदसा દુષ્ટ મેદ સાથે दुष्ट मेदके साथ, उपहितः મળીને मिल कर, शरीर- શરીરના शरीरके, क्लेदमांसाभ्याम् ક્લેદ અને માંસ સાથે क्लेद और मांसके साथ, संसर्गं સંસર્ગને संस-र्गको, गच्छति પામે છે प्राप्त होता है;

8-(1.) When these three special pathological conditions occur simultaneously in the body, the kapha becomes suddenly provoked. It is the first to be provoked because it is already in excessive quantity. It being provoked quickly, spreads in the body owing to the flabbiness of the body. While circulating in the body, it first gets mixed with the adipose tissue, owing to pathological changes in the adipose tissue, viz. excessiveness and diminished viscousness, and also owing to the great similarity of quality between the kapha and the adipose tissue. Combining with the adipose tissue, the kapha vitiates it because the kapha is already vitiated. The vitiated kapha by coupling with vitiated adipose tissue now comes in contact with body-fluid and muscular tissue owing to excessive increase of both of these in the body.

**स मांसे मांसप्रदोषात् पूतिमांसपिडकाः शराविकाकच्छपिकाद्याः संजनयति, अप्रकृतिभूतत्वात्; शरीरक्लेदं पुनर्दूषयन् मूत्रत्वेन परिणमयति, मूत्रवहानां च स्रोतसां वङ्क्षणबस्तिप्रभवाणां मेदःक्लेदोपहितानि गुरूणि मुखान्यासाद्य प्रतिरुध्यते; ततः प्रमेहांस्तेषां स्थैर्यमसाध्यतां वा जनयति, प्रकृतिविकृतिभूतत्वात् ॥ ८ ॥**

सः તે वह, अप्रकृतिभूतत्वात् વિકૃત હોવાથી विकृत होनेसे, मांसे માંસમાં मांसमें, मांसप्रदोषात् માંસદોષથી मांसदोषसे, शराविका- શરાવિકા शराविका, कच्छपिकाद्याः કચ્છપિકા વગેરે कच्छपिका आदि, पूतिमांसपिडकाः સડેલા માંસવાળી પિડકાઓને सड़े हुए मांसवाली पिड़काओंको, संजनयति ઉત્પન્ન કરે છે उत्पन्न करता है, शरीरक्लेदम् શરીરના ક્લેદને शरीरके क्लेदको, पुनः ફરીને फिरसे, दूषयन् દૂષિત કરીને दूषित करके, मूत्र-त्वेन મૂત્રરૂપમાં मूत्र रूपमें, परिणमयति પરિણત કરે છે बदल देता है, वङ्क्षण- વંક્ષણ वंक्षण, बस्ति- તથા બસ્તિ-માંથી तथा बस्तिसे, प्रभवाणाम् ઉત્પન્ન થયેલા उत्पन्न हुए, मूत्रवहानाम् મૂત્રવાહી मूत्रवह, स्रोतसाम् च સ્રોતોનાં स्रोतोंके, मेदः- મેદ मेद, क्लेद- અને ક્લેદથી और क्लेदसे, उपहितानि ભરેલાં भरे हुए, गुरूणि ભારે भारी, मुखानि મુખોને मुखोंको, आसाद्य પ્રાપ્ત કરીને प्राप्त करके, प्रतिरुध्यते રોકાઈ જાય છે रुक जाता है, ततः તે પછી उसके बाद, प्रकृति- विकृति- भूतत्वात् પ્રકૃતિવિકૃતિરૂપ હોવાથી प्रकृतिविकृतिरूप होनेसे, प्रमेहान् પ્રમેહોને प्रमेहोंको, तेषाम् તેમજ તેઓની एवं उनकी, स्थैर्यम् સ્થિરતા स्थिरता, असाध्यताम् वा

८. वंक्षण—वृक्क (ध.)

અથવા અસાધ્યતાને अथवा असाध्यताको, जनयति ઉત્પન્ન કરે છે उत्पन्न करता है ॥ ८ ॥

8. Owing to the vitiation of the muscular tissue, it causes putrefying and sloughing inflammatory swellings like (Saravika) crateriform ulcer or carbuncle and such others occurring in this tissues on account of its morbific condition. Then further vitiating the body-fluid, it changes it into urine. Then reaching the orifices of the urinary channels from the kidneys and bladder which are dilated by the morbid fat and body-fluid, it then becomes localised there; and thus gives birth to the anomalies of urinary secretion; it gets firmly established within the system and may become incurable owing to occurrence of such pathological changes in the body.

**शरीरक्लेदस्तु श्लेष्ममेदोमिश्रः प्रविशन् मूत्राशयं मूत्रत्वमापद्यमानः श्लैष्मिकैरेभिर्दशभिर्गुणैरुपसृज्यते वैषम्ययुक्तैः;**

श्लेष्म-मेदः-मिश्रः કફ અને મેદમિશ્રિત कफ और मेदमिश्रित, शरीरक्लेदः શરીરનો ક્લેદ शरीरका क्लेद, तु તો तो, मूत्राशयम् મૂત્રાશયમાં मूत्राशयमें, प्रविशन् પ્રવેશ કરી पहुँचकर, मूत्रत्वम् મૂત્રરૂપને मूत्ररूपको, आपद्यमानः પ્રાપ્ત થઈ प्राप्त होकर, वैषम्ययुक्तैः વિષમતાયુક્ત विषम बने हुए, श्लैष्मिकैः કફના कफके, एभिः આ इन, दशगुणैः દશ ગુણોથી दस गुणोंसे, उपसृज्यते યુક્ત થાય છે युक्त होता है;

9-(1). The body-fluid combined with the kapha and the adipose tissue while being converted into urine on its entrance into the kidneys, acquires the following ten pathological characteristics of kapha.

**तद्यथा—श्वेतशीतमूर्तपिच्छिलाच्छस्निग्धगुरुमधुरसान्द्रप्रसादमन्दैः, तत्र येन गुणेनैकेनानेकेन वा भूयस्तरमुपसृज्यते तत्समाख्यं गौणं नामविशेषं प्राप्नोति ॥ ९ ॥**

तद् यथा જેમકે जैसे कि, श्वेत- શ્વેત श्वेत, शीत- શીત शीत, मूर्त- મૂર્ત मूर्त, पिच्छिल- પિચ્છિલ पिच्छिल, अच्छ- અચ્છ अच्छ, स्निग्ध- સ્નિગ્ધ स्निग्ध, गुरु- ગુરુ गुरु, मधुर- મધુર मधुर, सान्द्रप्रसाद- સાન્દ્રપ્રસાદ सान्द्रप्रसाद, मन्दैः અને મંદ और मन्द, तत्र તેઓમાંથી इनमेंसे, येन જે જે जो जो, एकेन એક एक, अनेकेन वा અથવા અનેક अथवा अनेक, गुणेन ગુણ સાથે गुणोंसे, भूयस्तरम् અતિ વધારે अत्यधिक, उपसृज्यते મળી જાય છે मिल जाता है, तत्समाख्यम् તે ગુણ જેવા નામને उसी गुणके समान नामको, गौणम् અથવા ગુણ સંબંધી अथवा गुणसम्बन्धी, नामविशेषम् નામવિશેષને नामविशेषको, प्राप्नोति પ્રાપ્ત કરે છે प्राप्त करता है ॥ ९ ॥

9. They are—whiteness, coldness, hardness, viscousness, transparency, unctuousness, heaviness, sweetness, denseness, clearness and slowness. Then it acquires a special name accompanied with the qualities of one or more of the other conditions by which it has been mainly modified.

कफजन्यदशप्रमेहनामानि—

**ते तु खल्विमे दश प्रमेहा नामविशेषेण भवन्ति; तद्यथा—उदकमेहश्च, इक्षुवालिकारसमेहश्च, सान्द्रमेहश्च, सान्द्रप्रसादमेहश्च, शुक्लमेहश्च, शुक्रमेहश्च, शीतमेहश्च, सिकतामेहश्च, शनैर्मेहश्च, आलालमेहश्चेति ॥ १० ॥**

नामविशेषेण નામભેદથી नामभेदसे, ते તેઓ वे, इमे આ ये, दश દસ दस, प्रमेहाः પ્રમેહો प्रमेह, भवन्ति થાય છે होते हैं, तद् यथा જેમ કે जैसे कि,

९. भूयस्तरमुपसृज्यते—भूयसा समुपगृह्यते (ध.)

१०. इक्षुवालिकारसमेहः—इक्षुमेहः (ङ.)

,, आलालमेहः—लालमेहः (ङ.)

**उदकमेहः च** ઉદકમેહ उदकमेह, **इक्षुवालिकारसमेहः च** ઇક્ષુવાલિકારસમેહ इक्षुवालिकारसमेह, **सान्द्रमेहः च** સાન્દ્રમેહ सान्द्रमेह, **सान्द्रप्रसादमेहः च** સાન્દ્રપ્રસાદમેહ सान्द्रप्रसादमेह, **शुक्लमेहः च** શુક્લમેહ शुक्लमेह, **शुक्रमेहः च** શુક્રમેહ शुक्रमेह, **शीतमेहः च** શીતમેહ शीतमेह, **सिकतामेहः च** સિકતામેહ सिकतामेह, **शनैर्मेहः च** શનૈર્મેહ शनैर्मेह, **आलालमेहः च इति** અને આલાલમેહ और आलालमेह ॥ १० ॥

10. Thus we have ten varieties of urinary disorders in accordance with their special designations. They are—(Udakameha) Hydruria, (Ikshuvalikarasameha) Glycosuria, (Sandrameha) Chyluria, (Sandraprasadameha) Belluria, (Suklameha) Bacteriuria, (Sukrameha) Spermaturia, (Sitameha) Phosphaturia, (Sikatameha) Graveluria, (Sanairmeha) Slow micturition, and (Alalameha) Pyuria.

तेषां साध्यत्वे उपपत्तिः—

**ते दश प्रमेहाः साध्याः; समानगुणमेदःस्थानकत्वात्, कफस्य प्राधान्यात्, समक्रियत्वाच्च ॥११॥**

**समानगुण-** સમાન ગુણવાળો समान गुणवाले, **मेदःस्थानकत्वात्** મેદ આશ્રય હોવાથી मेदके आश्रय होनेसे, **कफस्य प्राधान्यात्** કફની પ્રધાનતાથી कफकी प्रधानतासे, **समक्रियत्वात् च** અને સમાન ચિકિત્સાવાળા હોવાથી और समान चिकित्सावाला होनेसे, **ते** એ वे, **दश** દશ दस, **प्रमेहाः** પ્રમેહો प्रमेह, **साध्याः** સાધ્ય છે साध्य हैं ॥ ११ ॥

11. These ten urinary disorders are curable due to their being seated in the adipose tissue which is of similar quality and also due to the predominance of kapha and to the similarity in treatment.

दशविधश्लेष्मप्रमेहाणां लक्षणानि—

**तत्र श्लोकाः श्लेष्मप्रमेहविशेषविज्ञानार्था भवन्ति—॥ १२ ॥**

तत्र અહીં यहां, **श्लेष्मप्रमेह-** કફજ પ્રમેહોના कफज प्रमेहोंके, **विशेषविज्ञानार्थाः** ભેદ જાણવા માટે भेद जाननेके लिए, **श्लोकाः** શ્લોકો श्लोक, **भवन्ति** છે કે हैं कि ॥१२॥

12. Here are the following verses regarding the special characteristics of urinary disorders of kapha type.

**अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ।**
**श्लेष्मकोपान्नरो मूत्रमुदमेही प्रमेहति ॥ १३ ॥**

**श्लेष्मकोपात्** કફના કોપથી कफके कोपसे, **उदमेही** ઉદકમેહી उदकमेही, **नरः** મનુષ્ય मनुष्य, **अच्छम्** સ્વચ્છ स्वच्छ, **बहु** બહુ बहुत, **सितम्** શ્વેત श्वेत, **शीतम्** શીતળ शीतल, **निर्गन्धम्** ગન્ધરહિત गन्धरहित, **उदकोपमम्** અને જળ જેવો और जलके समान, **मूत्रम् प्रमेहति** પેશાબ કરે છે पेशाब करता है ॥ १३ ॥

13. That person who passes urine that is clear, excessive in quantity, whitish, cool, odourless and watery, owing to the provocation of kapha suffers from Hydruria.

**अत्यर्थमधुरं शीतमीषत्पिच्छिलमाविलम् ।**
**काण्डेक्षुरससङ्काशं श्लेष्मकोपात् प्रमेहति ॥ १४ ॥**

**श्लेष्मकोपात्** કફના પ્રકોપથી कफके प्रकोपसे, **अत्यर्थ-** અત્યન્ત अत्यन्त, **मधुरम्** મધુર मधुर, **शीतम्** શીત शीतल, **ईषत् पिच्छिलम्** કાંઈક ચીકણો थोडा चिपचिपा, **आविलम्** ડોળો गदला, **काण्डेक्षुरस-** અને કાંડેક્ષુના રસ और काण्डेक्षुके रसके, **सङ्काशम्** જેવો समान, **प्रमेहति** પેશાબ કરે છે पेशाब करता है ॥ १४ ॥

14. That person who passes urine which is exceedingly sweet, cool, slightly viscid, turbid and resembling the juice of sugarcane, owing to the

provocation of kapha suffers from Glycosuria.

**यस्य पर्युषितं मूत्रं सान्द्रीभवति भाजने ।**
**पुरुषं कफकोपेन तमाहुः सान्द्रमेहिनम् ॥१५॥**

**भाजने** પાત્રમાં पात्रमें, **पर्युषितम्** વાસી રાખેલું वासी रक्खा हुआ, **यस्य** જેનું जिसका, **मूत्रम्** મૂત્ર मूत्र, **कफकोपेन** કફના પ્રકોપથી कफके प्रकोपसे, **सान्द्रीभवति** ઘાટું થઈ જાય છે सान्द्र हो जाता है, **तम् पुरुषम्** તે પુરુષને उस पुरुषको, **सान्द्रमेहिनम्** સાન્દ્રમેહી सान्द्रमेही, **आहुः** કહે છે कहते हैं ॥ १५ ॥

15. The person, whose urine gets thickened if kept overnight in a vessel, owing to the provocation of kapha, suffers from Chyluria.

**यस्य संहन्यते मूत्रं किंचित् किंचित् प्रसीदति ।**
**सान्द्रप्रसादमेहीति तमाहुः श्लेष्मकोपतः ॥१६॥**

**यस्य** જેનું जिसका, **मूत्रम्** મૂત્ર मूत्र, **श्लेष्म-कोपतः** કફના પ્રકોપથી कफके प्रकोपसे, **किञ्चित्** કંઈક कुछ, **संहन्यते** ઘટ બની જાય છે घट्ट हो जाता है, **किञ्चित्** અને થોડું और थोड़ा, **प्रसीदति** નિર્મળ હોય છે निर्मल होता है, **तम्** તેને उसको, **सान्द्रप्रसादमेही** સાન્દ્રપ્રસાદમેહી सान्द्रप्रसादमेही, **इति** એમ ऐसा, **आहुः** કહે છે कहते हैं ॥ १६ ॥

16. The person whose urine, if kept overnight in a vessel, becomes partly dense and partly clear, owing to the provocation of kapha is said to be suffering from Belluria.

**शुक्लं पिष्टनिभं मूत्रमभीक्ष्णं यः प्रमेहति ।**
**पुरुषं कफकोपेन तमाहुः शुक्लमेहिनम् ॥ १७॥**

**यः** જે जो, **कफकोपेन** કફના કોપથી कफके कोपसे, **पिष्टनिभम्** ચોખાના લોટ જેવો चावलके आटेके सदृश, **शुक्लम् मूत्रम्** સફેદ પેશાબ सफेद मूत्र, **अभीक्ष्णम्** વારંવાર बार बार, **प्रमेहति** કરે છે करता है, **तम् पुरुषम्** તે પુરુષને उस पुरुषको, **शुक्लमेहिनम्** શુક્લમેહી शुक्लमेही, **आहुः** કહે છે कहते हैं ॥ १७ ॥

17. The person whose urine is white and appears as if mixed with flour and who suffers from frequent micturition is said to be suffering from Bacteriuria.

**शुक्राभं शुक्रमिश्रं वा मुहुर्मेहति यो नरः ।**
**शुक्रमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥ १८॥**

**यः** જે जो, **नरः** મનુષ્ય मनुष्य, **श्लेष्मकोपतः** કફના પ્રકોપથી कफके प्रकोपसे, **शुक्राभम्** શુક્ર જેવું शुक्र जैसा, **शुक्रमिश्रम् वा** અથવા શુક્રમિશ્રિત अथवा शुक्रमिश्रित, **मुहुः** વારંવાર बारबार, **मेहति** પેશાબ કરે છે पेशाब करता हैं, **तम् पुरुषम्** તે પુરુષને उस पुरुषको, **शुक्रमेहिनम्** શુક્રમેહી शुक्रमेही, **आहुः** કહે છે कहते हैं ॥१८॥

18. That person is said to be suffering from Spermaturia, born of the provocation of kapha, who frequently passes urine which is either semen-like in appearance or is mixed with semen.

**अत्यर्थमधुरं शीतं मूत्रं मेहति यो भृशम् ।**
**शीतमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥ १९॥**

**यः** જે जो, **श्लेष्मकोपतः** કફના પ્રકોપથી कफके प्रकोपसे, **अत्यर्थ-** અત્યન્ત अत्यन्त, **मधुरम्** મધુર मधुर, **शीतम्** શીત शीतल, **मूत्रम्** પેશાબ मूत्र, **भृशम्** બહુ बहुत, **मेहति** કરે છે करता है, **तम् पुरुषम्** તે પુરુષને उस पुरुषको, **शीतमेहिनम्** શીતમેહી शीतमेही, **आहुः** કહે છે कहते हैं ॥ १९ ॥

19. That person is said to be suffering from Phosphaturia born of the provocation of kapha who passes

१७. पुरुषं–पुरुषः (ख.)

१९. मेहति–क्षरति (ज्ञ. ध.)

a large quantity of urine which is exceedingly sweet and cold.

**मूर्तान्मूत्रगतान् दोषानणून्मेहति यो नरः ।
सिकतामेहिनं विद्यात्तं नरं श्लेष्मकोपतः ॥२०॥**

**यः नरः** જે માણસ जो मनुष्य, **श्लेष्मकोपतः** કફના પ્રકોપથી कफके प्रकोपसे, **मूत्रगतान्** મૂત્રગત मूत्रगत, **दोषान्** દોષોનો दोषोंको, **अणून्** નાના નાના छोटे छोटे, **मूर्तान्** ઘટ્ટ રૂપમાં घन रूपमें, **मेहति** પેશાબ કરે છે मूत्रद्वारा बाहिर निकालता है, **तम् नरम्** તે મનુષ્યને उस मनुष्यको, **सिकतामेहिनम्** સિકતામેહી सिकतामेही, **विद्यात्** જાણવો जानना चाहिए ॥२०॥

20. That person is to be known to suffer from Graveluria born of provoked kapha, who passes along with urine, hard and small particles produced by the pathological condition of the urine.

**मन्दं मन्दमवेगं तु कृच्छ्रं यो मूत्रयेच्छनैः ।
शनैर्मेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥२१॥**

**यः** જે जो, **श्लेष्मकोपतः** કફના પ્રકોપથી कफके प्रकोपसे, **मन्दम् मन्दम्** થોડું થોડું थोड़ा थोड़ा, **अवेगम्** વેગરહિત वेगरहित, **कृच्छ्रम्** અને મુશ્કેલીથી और कठिनाईसे, **शनैः** ધીરે ધીરે धीरे धीरे, **मूत्रयेत्** પેશાબ કરે છે पेशाब करता है, **तम् पुरुषम्** તે પુરુષને उस पुरुषको, **शनैर्मेहिनम्** શનૈર્મેહી शनैर्मेही, **आहुः** કહે છે कहते हैं ॥२१॥

21. That person is said to be suffering from Slow-micturition, born of provoked kapha, who passes urine little by little without any force, with difficulty and very slowly.

**तन्तुबद्धमिवालालं पिच्छिलं यः प्रमेहति ।
आलालमेहिनं विद्यात्तं नरं श्लेष्मकोपतः ॥२२॥**

**यः** જે जो, **श्लेष्म-कोपतः** કફના પ્રકોપથી कफके प्रकोपसे, **तन्तुबद्धम् इव** તાંતણાથી બંધાયેલા જેવા तन्तुओंसे बन्धाहुआसा, **आलालम्** લાળયુક્ત लालायुक्त, **पिच्छिलम्** તથા ચીકણો तथा चिपचिपा, **प्रमेहति** પેશાબ કરે છે पेशाब करता है, **तम् नरम्** તે મનુષ્યને उस मनुष्यको, **आलालमेहिनम्** આલાલમેહી आलालमेही, **विद्यात्** જાણવો जानना चाहिए ॥२२॥

22. That person is said to be suffering from Pyuria born of provoked kapha, whose urine appears to be full of mucus threads and is slimy and viscid.

**इत्येते दश प्रमेहाः श्लेष्मप्रकोपनिमित्ता व्याख्याता भवन्ति ॥२३॥**

**इति** આ પ્રમાણે इस प्रकार, **श्लेष्म-प्रकोप-निमित्ताः** કફના પ્રકોપથી થતા कफके प्रकोपसे होनेवाले, **एते** આ ये, **दश** દસ दस, **प्रमेहाः** પ્રમેહોનું प्रमेहोंका, **व्याख्याताः भवन्ति** વ્યાખ્યાન કરવામાં આવ્યું છે व्याख्यान किया गया है ॥२३॥

23. Thus, the ten anomalies of urinary secretion caused by the provocation of kapha, have been described.

पित्तप्रमेहस्य निदानं संप्राप्तिश्च—

**उष्णाम्ललवणक्षारकटुकाजीर्णभोजनोपसेविनस्तथाऽतितीक्ष्णातपाग्निसंतापश्रमक्रोधविषमाहारोपसेविनश्च तथाविधशरीरस्यैव क्षिप्रं पित्तं प्रकोपमापद्यते, तत्तु प्रकुपितं तयैवानुपूर्व्या प्रमेहानिमान् षट् क्षिप्रतरमभिनिर्वर्तयति ॥२४॥**

**उष्ण-** ઉષ્ણ उष्ण, **अम्ल-** ખાટાં खट्टे, **लवण-** ખારાં नमकीन, **क्षार-** ક્ષાર क्षार, **कटुक-** તીખાં चरपरे, **अजीर्ण-** અજીર્ણ अजीर्ण, **भोजन-** ભોજનનું भोजनका, **उपसेविनः** સેવન કરનારા सेवन करनेवाले, **तथा** તથા तथा, **अतितीक्ष्ण-** અત્યન્ત તીક્ષ્ણ अत्यन्त तीक्ष्ण, **आतप-** તડકા धूप, **अग्निसंताप-** અગ્નિના તાપ अग्निके संताप, **श्रम-** શ્રમ श्रम, **क्रोध-** ક્રોધ क्रोध, **विषमाहार-** તેમજ વિષમ

२४. तथाविध—तथात्मक (क. घ. छ. ठ.)
,, क्षिप्रं पित्तम्—पित्तमाशु (ध.)

ભોજનનું एवं विषम भोजनका, उपसेविनः च સેવન કરનારા सेवन करनेवाले, तथाविधशरीरस्य અને તેવી જાતના (કફપ્રમેહમાં બતાવેલા) શરીરવાળાનું और उसी प्रकारके (कफप्रमेहमें बताये गये) शरीरवालेका, पित्तम् પિત્ત पित्त, क्षिप्रम् જલદી शीघ्र, प्रकोपम् પ્રકોપને प्रकोपको, आपद्यते પામે છે प्राप्त होता है, प्रकुपितम् तु અને પ્રકુપિત થયેલું और प्रकुपित हुआ, तत् તે वह, तया एव ते જ उसी, आनुपूर्व्या કફપ્રમેહમાં બતાવેલા ક્રમથી कफप्रमेहमें बताये गये क्रमसे, इमान् આ इन, षट् છ छः, प्रमेहान् પ્રમેહોને प्रमेहोंको, क्षिप्रतरम् બહુ જલદીથી अति शीघ्रतासे, अभिनिर्वर्तयति ઉત્પન્ન કરે છે उत्पन्न करता है ॥ २४ ॥

24. In a man afflicted already with the above mentioned condition, the habitual use of hot, acid, salt, alkaline and pungent articles, predigestion-meal, and similarly exposure to severe sunshine and fire, anxiety, over-work, anger and promiscuous diet cause immediate provocation of pitta. This provoked pitta, very soon, brings about the manifestation of the following six kinds of the urinary anomalies by the same process as described above.

पित्तप्रमेहनामानि—

**तेषामपि तु खलु पित्तगुणविशेषेणैव नामविशेषा भवन्ति; तद्यथा—क्षारमेहश्च, कालमेहश्च, नीलमेहश्च, लोहितमेहश्च, माञ्जिष्ठमेहश्च, हारिद्रमेहश्चेति ॥ २५ ॥**

पित्तगुण- પિત્તના ગુણોની पित्तके गुणोंकी, विशेषेण एव ભિન્નતાથી જ भिन्नतासे ही, तेषाम् अपि તેઓનાં પણ उनके भी, नामविशेषाः જુદાં જુદાં નામ भिन्न भिन्न नाम, भवन्ति થાય છે होते हैं, तद् यथा જેમકે जैसे कि, क्षारमेहः च ક્ષારમેહ क्षारमेह, कालमेहः च કાલમેહ कालमेह, नीलमेहः च નીલમેહ नीलमेह, लोहितमेहः च લોહિતમેહ लोहितमेह, माञ्जिष्ठमेहः च માંજિષ્ઠમેહ मांजिष्ठमेह, हारिद्रमेहः च इति અને હારિદ્રમેહ और हारिद्रमेह ॥२५॥

25. These again acquire special designation according to the particular qualities of pitta. They are— Kshara-meha, Kalameha, Nilameha, Lohita-meha, Manjishthameha and Haridra-meha.

**ते षड्भिरेव क्षाराम्ललवणकटुकविस्रोष्णैः पित्तगुणैः पूर्ववद्युक्ता भवन्ति ॥ २६ ॥**

ते તેઓ वे, पूर्ववत् કફપ્રમેહની પેઠે વૃદ્ધિ અને ક્ષયરૂપ વૈષમ્યવાળા कफप्रमेहकी भांति वृद्धि और क्षयरूप वैषम्यवाले, क्षार- ક્ષાર क्षार, अम्ल- અમ્લ अम्ल, लवण- લવણ लवण, कटुक- કટુ कटु, विस्र- વિસ્ર विस्र, उष्णैः તથા ઉષ્ણ तथा उष्ण, षड्भिः एव એ છ ये इन छः ही, पित्तगुणैः પિત્તના ગુણોથી पित्तके गुणोंसे, युक्ताः યુક્ત युक्त, भवन्ति થાય છે होते हैं ॥ २६ ॥

26. They combine with the six qualities of pitta as described above viz. alkaline quality, acidity, saltishness, pungency, smell of raw meat and heat.

तेषां याप्यत्वे हेतुः —

**सर्व एव ते याप्याः, संसृष्टदोषमेदःस्थानत्वाद्विरुद्धोपक्रमत्वाच्चेति ॥ २७ ॥**

संसृष्ट-दोष-मेदः-स्थानत्वात् સાથે મળેલા કફ અને પિત્તનો મેદ આશ્રય હોવાથી मिलित कफ और पित्तका मेद आश्रय होनेसे, विरुद्धोपक्रमत्वात् च અને એકની ચિકિત્સા બીજાને માટે વિરુદ્ધ ચિકિત્સા હોવાથી और एककी चिकित्सा दूसरेके लिए विरुद्ध चिकित्सा होनेसे, ते તે ये, सर्वे एव બધા જ सभी, याप्याः इति યાપ્ય છે याप्य हैं ॥ २७ ॥

२५. माञ्जिष्ठमेहश्च—मञ्जिष्ठामेहश्च (ध.)

२६. युक्ता—समन्विता (ध ब. छ.)
,, षड्भिरेव—षड्भिरेतैः (छ. न.)

27. They are all only palliable owing to the proximity of the seat of the discordant humors, and that of the adipose tissue, and owing to the incompatibility involved in the treatment.

पित्तप्रमेहाणां लक्षणानि—

**तत्र श्लोकाः पित्तप्रमेहविशेषविज्ञानार्था भवन्ति—॥ २८ ॥**

तत्र અહીં यहां, पित्तप्रमेह- પિત્તપ્રમેહોના पित्तप्रमेहोंके, विशेष- ભેદ मेद, विज्ञानार्थाः જાણવા માટે जाननेके लिए, श्लोकाः શ્લોકો श्लोक, भवन्ति છે हैं ॥२८॥

28. Here are the following verses regarding the special characteristics of the urinary disorders of pitta type.

**गन्धवर्णरसस्पर्शैर्यथा क्षारस्तथाविधम् ।**
**पित्तकोपान्नरो मूत्रं क्षारमेही प्रमेहति ॥ २९ ॥**

पित्तकोपात् પિત્તના પ્રકોપથી पित्तके प्रकोपसे, क्षारमेही ક્ષારમેહી क्षारमेही, नरः મનુષ્ય मनुष्य, गन्ध- ગન્ધ गन्ध, वर्ण- વર્ણ वर्ण, रस- રસ रस, स्पर्शैः અને સ્પર્શમાં और स्पर्शमें, यथा જેવો जैसा, क्षारः ક્ષાર હોય છે क्षार होता है, तथाविधम् તેવી જાતનો જ उसी प्रकारका ही, प्रमेहति પેશાબ કરે છે पेशाब करता है ॥ २९ ॥

29. That person is said to be suffering from (Ksharameha) Alkalinuria, born of the excessive provocation of pitta, who passes urine resembling alkali in smell, color, taste and touch.

**मसीवर्णमजस्रं यो मूत्रमुष्णं प्रमेहति ।**
**पित्तस्य परिकोपेण तं विद्यात् कालमेहिनम् ॥३०॥**

पित्तस्य પિત્તના पित्तके, परिकोपेण પ્રકોપથી प्रकोपसे, यः જે जो, अजस्रम् વારંવાર बार बार, मसीवर्णम् કાજળના રંગનો मसीके समान कृष्ण वर्णका, उष्णम् ઊનો गरम, मूत्रम् પેશાબ पेशाब, प्रमेहति કરે છે करता है, तम् તેને उसको, कालमेहिनम् કાલમેહી कालमेही, विद्यात् જાણવો जानना चाहिए ॥ ३० ॥

30. That person is said to be suffering from (Kalameha) Melanuria, born of the excessive provocation of pitta, who passes soot-black and warm urine constantly.

**चाषपक्षनिभं मूत्रमम्लं मेहति यो नरः ।**
**पित्तस्य परिकोपेण तं विद्यान्नीलमेहिनम् ॥३१॥**

पित्तस्य પિત્તના पित्तके, परिकोपेण પ્રકોપથી प्रकोपसे, यः नरः જે મનુષ્ય जो मनुष्य, चाषपक्षनिभम् ચાષની પાંખ જેવો નીલ चाषके पक्ष समान नील, अम्लम् અને અમ્લ और अम्ल, मूत्रम् પેશાબ पेशाब, मेहति કરે છે करता है, तम् તેને उसको, नीलमेहिनम् નીલમેહી नीलमेही, विद्यात् જાણવો जानना चाहिए ॥ ३१ ॥

31. That person is said to be suffering from (Nilameha) Indigouria, born of the excessive provocation of pitta, who passes urine of the color of the wings of (Casha) blue Jay bird and which is acid.

**विस्रं लवणमुष्णं च रक्तं मेहति यो नरः ।**
**पित्तस्य परिकोपेण तं विद्याद्रक्तमेहिनम् ॥ ३२॥**

पित्तस्य પિત્તના पित्तके, परिकोपेण પ્રકોપથી प्रकोपसे, यः नरः જે મનુષ્ય जो मनुष्य, विस्रम् વિસ્ર विस्र, लवणम् લવણ लवण, उष्णम् ઉષ્ણ उष्ण, रक्तम् च અને લાલ और रक्त वर्णका, मेहति પેશાબ કરે છે पेशाब करता है, तम् તેને उसको, रक्तमेहिनम् રક્તમેહી रक्तमेही, विद्यात् જાણવો जानना चाहिए ॥ ३२ ॥

32. That person is said to be suffering from (Raktameha) Hematuria,

२९. तथाविधम्—तथात्मकम् (ग.)
३०. मसीवर्णम्—मषीवर्णम् (क. ग. ङ.)

born of the excessive provocation of pitta, whose urine smells like raw meat and which is salt, warm and red.

**मञ्जिष्ठोदकसंकाशं भृशं विस्रं प्रमेहति ।**
**पित्तस्य परिकोपात्तं विद्यान्माञ्जिष्ठमेहिनम् ॥३३॥**

पित्तस्य પિત્તના पित्तके, परिकोपात् પ્રકોપથી प्रकोपसे, (यः જે મનુષ્ય जो मनुष्य), मञ्जिष्ठोदक- મજીઠના પાણી मंजीठके जलके, संकाशम् જેવું समान, भृशम् ઘણું बहुत, विस्रम् અને વિસ્ર और विस्र, प्रमेहति પેશાબ કરે છે पेशाब करता है, तम् તેને उसको, माञ्जिष्ठमेहिनम् માંજિષ્ઠમેહી माञ्जिष्ठमेही, विद्यात् જાણવો जानना चाहिए ॥ ३३ ॥

33. That man is said to be suffering from (Manjishthameha) Hemoglobinuria born of the provocation of pitta, who passes urine of the color of indian madder water, which is increased in quantity, and which smells like raw meat.

**हरिद्रोदकसङ्काशं कटुकं यः प्रमेहति ।**
**पित्तस्य परिकोपात्तं विद्याद्धारिद्रमेहिनम् ॥३४॥**

पित्तस्य પિત્તના पित्तके, परिकोपात् પ્રકોપથી प्रकोपसे, यः જે મનુષ્ય जो मनुष्य, हरिद्रोदक- હળદરના પાણી हल्दीके पानीके, संकाशम् જેવો समान, कटुकम् કડુ कटु, प्रमेहति પેશાબ કરે છે पेशाब करता है, तम् તેને उसको, हारिद्रमेहिनम् હરિદ્રામેહી हरिद्रामेही, विद्यात् જાણવો जानना चाहिए ॥ ३४ ॥

34. That person is said to be suffering from (Haridrameha) Urobilinuria born of the provocation of pitta, whose urine is of the color of turmeric-water, and is pungent.

**इत्येते षट् प्रमेहाः पित्तप्रकोपनिमित्ता व्याख्याता भवन्ति ॥ ३५ ॥**

इति આ પ્રમાણે इस प्रकार, पित्तप्रकोप- પિત્તના પ્રકોપને पित्तके प्रकोपके, निमित्ताः કારણે થતા कारण होनेवाले, एते આ इन, षट् ૭ छः, प्रमेहाः પ્રમેહોનું प्रमेहोंका, व्याख्याताः भवन्ति વ્યાખ્યાન કરવામાં આવ્યું છે व्याख्यान किया गया है ॥ ३५ ॥

35. Thus have been described the six anomalies of urinary secretion caused by the excessive provocation of pitta.

वातमेहानां निदानं संप्राप्तिश्च—

**कषायकटुतिक्तरूक्षलघुशीतव्यवायव्यायामवमनविरेचनास्थापनशिरोविरेचनातियोगसंधारणानशनाभिघातातपोद्वेगशोकशोणितातिषेकजागरणविषमशरीरन्यासानुपसेवमानस्य तथाविधशरीरस्यैव क्षिप्रं वातः प्रकोपमापद्यते ॥ ३६ ॥**

कषाय- કષાય कषाय, कटु- કડુ कटु, तिक्त- તિક્ત तिक्त, रूक्ष- રૂક્ષ रूक्ष, लघु- લઘુ लघु, शीत- શીતળ शीतल, व्यवाय- મૈથુન मैथुन, व्यायाम- વ્યાયામ व्यायाम, वमन- વમન वमन, विरेचन- વિરેચન विरेचन, आस्थापन- નિરૂહ निरूह, शिरोविरेचन- અને શિરોવિરેચનના और शिरोविरेचनके, अतियोग- અતિયોગ अतियोग, संधारण- વેગોને રોકવા वेगोंको रोकना, अनशन- ઉપવાસ उपवास, अभिघात- ચોટ चोट, आतप- તડકા धूप, उद्वेग- ઉદ્વેગ उद्वेग, शोक- શોક शोक, शोणित- લોહીના रक्तका, अतिषेक- અતિસ્રાવ अतिस्राव, जागरण- જાગરણ जागरण, विषम- અને વિષમ और विषम, शरीरन्यासान् શરીરની સ્થિતિઓનું देहन्यासोंको, उपसेवमानस्य સેવન કરનાર सेवन करनेवाले, तथाविधशरीरस्य તેવી જાતના (ઘણા તથા શિથિલ મેદથી યુક્ત ઇત્યાદિ) શરીરવાળાનો उसी प्रकारके ( बहुत तथा शिथिल मेदयुक्त आदि) शरीरवालेका, वातः વાયુ वायु, क्षिप्रम् एव

३६. आस्थापन—आस्थापनानुवासन (प.)
,, संधारण—वेगसंधारण (छ.)
,, आतप—व्यायाम (प.)
,, तथाविध—तथात्मक (ध.)
,, वातः—वायुः (ध.)

તરતજ शीघ्र ही, प्रकोपम् પ્રકોપ प्रकोपको, आपद्यते પામે છે प्राप्त होता है ॥ ३६ ॥

36. In a man afflicted with the above mentioned condition, the habitual use of astringent, pungent, bitter, dry, light and cold articles, and over-indulgence in sex-act, exercise, emesis, purgation, enemata and errhines, suppression of natural urges, fasting, trauma, sun-heat, worry, grief, depletion of blood, waking and unwholesome postures of the body cause immediate provocation of vata.

**स प्रकुपितस्तथाविधे शरीरे विसर्पन् यदा वसामादाय मूत्रवहानि स्रोतांसि प्रतिपद्यते तदा वसामेहमभिनिर्वर्तयति; यदा पुनर्मज्जानं मूत्रबस्तावाकर्षति तदा मज्जमेहमभिनिर्वर्तयति;**

**प्रकुपितः सः** પ્રકુપિત થયેલો તે प्रकुपित हुआ वह, **तथाविधे** તેવી જાતના उसी प्रकारके, **शरीरे** શરીરમાં शरीरमें, **विसर्पन्** ફેલાતાં फैलता हुआ, **यदा** જ્યારે जब, **वसाम्** વસાને वसाको, **आदाय** લઈને ले कर, **मूत्रवहानि** મૂત્રવાહી मूत्रवाही, **स्रोतांसि** સ્રોતોમાં स्रोतोंमें, **प्रतिपद्यते** પહોંચે છે पहुंचता है, **तदा** ત્યારે तब, **वसामेहम्** વસામેહને वसामेहको, **अभिनिर्वर्तयति** ઉત્પન્ન કરે છે उत्पन्न करता है, **यदा पुनः** અને જ્યારે और जब, **मज्जानम्** મજ્જાને मज्जाको, **मूत्रबस्तौ** મૂત્રબસ્તિમાં मूत्रबस्तिमें, **आकर्षति** ખેંચી લાવે છે खींच लाता है, **तदा** ત્યારે तब, **मज्जमेहम्** મજ્જમેહને मज्जमेहको, **अभिनिर्वर्तयति** ઉત્પન્ન કરે છે उत्पन्न करता है;

37-(1). When the provoked vata while circulating in such body, carrying fat with it, goes to the urinary channels, there occurs the condition of (Vasameha) Lipuria. When it carries marrow to the urinary organs, there occurs the condition of (Majjameha) Myelo-uria.

**यदा तु लसीकां मूत्राशयेऽभिवहन्मूत्रमनुबन्धं च्योतयति लसीकातिबहुत्वाद्विक्षेपणाच्च वायोः खल्वस्यातिमूत्रप्रवृत्तिसङ्गं करोति, तदा स मत्त इव गजः क्षरत्यजस्रं मूत्रमवेगं, तं हस्तिमेहिनमाचक्षते;**

**यदा तु** અને જ્યારે और जब, **लसीकाम्** લસીકાને लसीकाको, **मूत्राशये** મૂત્રાશયમાં मूत्राशयमें, **अभिवहन्** લઈ જતો ले जा कर, **मूत्रम्** મૂત્રને मूत्रको, **अनुबन्धम्** લગાતાર लगातार, **च्योतयति** બહાર કાઢે છે निकालता रहता है, **लसीका-** અને લસીકા और लसीकाके, **अतिबहुत्वात्** અત્યન્ત વધુ હોવાને લીધે अत्यन्त अधिक होनेसे, **वायोः** તથા પોતાના एवं अपने, **विक्षेपणात् च** વિક્ષેપણ ગુણથી विक्षेपण गुणसे, **अस्य** એને उसे, **अतिमूत्रप्रवृत्तिसङ्गम्** અત્યન્ત મૂત્રની પ્રવૃત્તિ તથા અવરોધ अत्यन्त मूत्रकी प्रवृत्ति और अवरोधको, **करोति** કરે છે करता है, **तदा** ત્યારે तब, **सः** તે वह, **मत्तः** મત્ત मत्त, **गजः इव** હાથી પેઠે हाथीकी भांति, **अवेगम्** વેગરહિત वेगरहित, **मूत्रम्** મૂત્રને मूत्रको, **अजस्रम्** નિરન્તર निरन्तर, **क्षरति** વહાવે છે बहाता है, **तम्** તેને उसको, **हस्तिमेहिनम्** હસ્તિમેહી हस्तिमेही, **आचक्षते** કહે છે कहते हैं;

37-(2). When it carries the lymph to the urinary organs and causes the continual flow of urine, then owing to excessiveness of lymph and the expelling quality of vata, there occurs markedly frequent urge for micturition, and retention of the residual urine. In such a condition the man continuously discharges urine without any force like a mad elephant; this condition is called Hastimeha.

---

३७. तथाविधे—तथात्मके (ख.)

३७. अनुबन्धं—अनुषङ्गम् (प.)

**ओजः पुनर्मधुरस्वभावं, तद् यदा रौक्ष्याद्वायुः कषायत्वेनाभिसंसृज्य मूत्राशयेऽभिवहति तदा मधुमेहं करोति ॥ ३७ ॥**

**ओजः** ઓજ ओज, **पुनः** તો तो, **मधुरस्वभावम्** મધુર સ્વભાવવાળું છે मधुर स्वभाववाला है, **तत्** તેને उसको, **यदा** જ્યારે जब, **वायुः** વાયુ वायु, **रौक्ष्यात्** રૂક્ષતાને લીધે रूक्षताके कारण, **कषायत्वेन अभिसंसृज्य** કષાયરસયુક્ત કરીને कषायरसयुक्त करके, **मूत्राशये** મૂત્રાશયમાં मूत्राशयमें, **अभिवहति** લઈ જાય છે ले जाता है, **तदा** ત્યારે तब, **मधुमेहम्** મધુમેહને मधुमेहको, **करोति** કરે છે करता है ॥ ३७ ॥

37. If vata by its dry quality changes the vital essence which is naturally of sweet taste into one of astringent taste and carries it to the urinary organs, then it causes the condition called (Madhumeha) Diabetes.

वातमेहानामसाध्यत्वे हेतुः—

**इमांश्चतुरः प्रमेहान् वातजानसाध्यानाचक्षते भिषजः, महात्ययिकत्वाद्विरुद्धोपक्रमत्वाच्चेति॥३८॥**

**महात्ययिकत्वात्** મહાવિનાશકારી હોવાથી महाविनाशकारक होनेसे, **विरुद्धोपक्रमत्वात् च** અને દોષ તથા દૂષ્યની પરસ્પર વિરુદ્ધ ચિકિત્સાવાળા હોવાથી और दोष तथा दूष्यकी परस्पर विरुद्ध चिकित्सावाले होनेसे, **भिषजः** વૈદ્યો वैद्य लोग, **इमान् चतुरः** આ ચાર इन चार, **वातजान्** વાતજ वातज, **प्रमेहान्** પ્રમેહોને प्रमेहोंको, **असाध्यान्** અસાધ્ય असाध्य, **आचक्षते** કહે છે कहते हैं ॥ ३८ ॥

38. Physicians consider these four urinary disorders caused by vata as incurable owing to their great urgency and the antagonism involved in the treatment.

३८. इमांश्चतुरः–तानिमांश्चतुरः (ख. घ. ज.)

वातमेहनामानि—

**तेषामपि पूर्ववद्गुणविशेषेण नामविशेषा भवन्ति; तद्यथा—वसामेहश्च, मज्जमेहश्च, हस्तिमेहश्च, मधुमेहश्चेति ॥ ३९ ॥**

**तेषाम् अपि** તેઓના પણ उनके भी, **पूर्ववत्** પ્રથમની પેઠે प्रथमकी भांति, **गुणविशेषेण** ગુણભેદથી गुणभेदसे, **नामविशेषाः** નામભેદ नामभेद, **भवन्ति** થાય છે होते हैं, **तद् यथा** જેમકે जैसे कि, **वसामेहः च** વસામેહ वसामेह, **मज्जमेहः च** મજ્જમેહ मज्जमेह, **हस्तिमेहः च** હસ્તિમેહ हस्तिमेह, **मधुमेहः च इति** અને મધુમેહ और मधुमेह ॥ ३९ ॥

39. They too again as before obtain special appellation according to the respective qualities of vata. They are Lipuria, Myelo-uria, Hastimeha and Diabetes.

तेषां लक्षणानि—

**तत्र श्लोका वातप्रमेहविशेषविज्ञानार्था भवन्ति— ॥ ४० ॥**

**तत्र** અહીં यहां, **वातप्रमेह-** વાતપ્રમેહોના वातप्रमेहोंके, **विशेषविज्ञानार्थाः** ભેદ જાણવા માટે भेद जाननेके लिए, **श्लोकाः** શ્લોકો श्लोक, **भवन्ति** છે हैं ॥४०॥

40. Here are the following verses describing the special characteristics of the various urinary disorders of the vata type.

**वसामिश्रं वसाभं वा मुहुर्मेहति यो नरः ।**
**वसामेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४१ ॥**

**वातकोपतः** વાયુના પ્રકોપથી वायुके प्रकोपसे, **यः** જે जो, **नरः** મનુષ્ય मनुष्य, **वसामिश्रम्** વસામિશ્ર वसामिश्र, **वसाभम् वा** કે વસા જેવો अथवा वसाके समान, **मुहुः**

३९. पूर्ववद्गुण°–वातगुण° (च. छ.)

४१. वसाभं वा–वसां वापि (ग. प.)

વારંવાર बारबार, मेहति પેશાબ કરે છે पेशाब करता है, तम् તે उस, वसामेहिनम् વસામેહીને वसामेहीको, असाध्यम् અસાધ્ય असाध्य, आहुः કહે છે कहते हैं ॥४१॥

41. That person is said to be suffering from incurable (Vasameha) Lipuria owing to the provoked vata, who frequently passes urine mixed with fat or having the appearance of fat.

**मज्जानं सह मूत्रेण मुहुर्मेहति यो नरः ।**
**मज्जमेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४२ ॥**

वातकोपतः વાયુના પ્રકોપથી वायुके प्रकोपसे, यः જે जो, नरः મનુષ્ય मनुष्य, मूत्रेण सह મૂત્રની સાથે मूत्रके साथ, मज्जानम् મજ્જાનો मज्जाका, मुहुः વારંવાર बारबार, मेहति પેશાબ કરે છે पेशाब करता है, तम् તે उस, मज्जमेहिनम् મજ્જમેહીને मज्जमेहीको, असाध्यम् અસાધ્ય असाध्य, आहुः કહે છે कहते हैं ॥ ४२ ॥

42. That person is said to be suffering from incurable (Majjameha) Myelo-uria born of the provoked vata who passes frequently urine mixed with marrow.

**हस्ती मत्त इवाजस्रं मूत्रं क्षरति यो भृशम् ।**
**हस्तिमेहिनमाहुस्तमसाध्यं वातकोपतः ॥ ४३ ॥**

वातकोपतः વાયુના પ્રકોપથી वायुके प्रकोपसे, यः જે जो, मत्तः મત્ત मत्त, हस्ती इव હાથીની પેઠે हाथीकी भांति, भृशम् ઘણું बहुत, मूत्रम् મૂત્ર मूत्र, अजस्रम् નિરન્તર निरन्तर, क्षरति કરે છે करता हैं, तम् हस्तिमेहिनम् તે હસ્તિમેહીને उस हस्तिमेहीको, असाध्यम् અસાધ્ય असाध्य, आहुः કહે છે कहेते हैं ॥ ४३ ॥

43. That person is said to be suffering from incurable Hastimeha born of the provoked vata, who continuously dribbles excessive amount of urine like a mad elephant.

**कषायमधुरं पाण्डु रूक्षं मेहति यो नरः ।**
**वातकोपादसाध्यं तं प्रतीयान्मधुमेहिनम् ॥ ४४ ॥**

वातकोपात् વાયુના પ્રકોપથી वायुके प्रकोपसे, यः જે जो, नरः મનુષ્ય मनुष्य, कषायमधुरम् કષાયમધુર कषायमधुर, पाण्डु પાંડુ पाण्डु, रूक्षम् તથા રૂક્ષ तथा रूक्ष, मेहति પેશાબ કરે છે पेशाब करता है, तम् તે उस, मधुमेहिनम् મધુમેહીને मधुमेहीको, असाध्यम् અસાધ્ય असाध्य, प्रतीयात् જાણવો जानना चाहिए ॥४४॥

44. That person is said to be suffering from incurable (Madhumeha) Diabetes born of the provoked vata, who passes urine which is astringent and sweet in taste, yellowish–white in color and which is unctuous.

**इत्येते चत्वारः प्रमेहा वातप्रकोपनिमित्ता व्याख्याता भवन्ति ॥ ४५ ॥**

इति આ પ્રમાણે इस प्रकार, वातप्रकोपनिमित्ताः વાયુના પ્રકોપથી થતા वायुके प्रकोपके कारण होनेवाले, एते આ ये, चत्वारः ચાર चार, प्रमेहाः પ્રમેહોનું प्रमेहोंका, व्याख्याताः भवन्ति વ્યાખ્યાન કરવામાં આવ્યું છે व्याख्यान किया गया है ॥ ४५ ॥

45. Thus have been described the four anomalies of urinary secretion caused by the provocation of vata.

**एवं त्रिदोषप्रकोपनिमित्ता विंशतिः प्रमेहा व्याख्याता भवन्ति ॥ ४६ ॥**

एवम् એ પ્રમાણે इस प्रकार, त्रिदोष- ત્રિદોષના त्रिदोषके, प्रकोप- પ્રકોપથી प्रकोपके, निमित्ताः થતા कारण होनेवाले, विंशतिः વીસ बीस, प्रमेहाः પ્રમેહોનું प्रमेहोंका, व्याख्याताः भवन्ति વ્યાખ્યાન કરવામાં આવ્યું છે व्याख्यान किया गया है ॥ ४६ ॥

४३. भृशम्—नरः (द.)

४६. एवं—त एवं (ख.)

46. Thus the twenty anomalies of urinary secretion caused by the provocation of the three humors have been described.

प्रमेहाणां पूर्वरूपाणि—

**त्रयस्तु खलु दोषाः प्रकुपिताः प्रमेहानभिनिर्वर्तयिष्यन्त इमानि पूर्वरूपाणि दर्शयन्ति;**

प्रकुपिताः પ્રકુપિત થએલા प्रकुपित हुए, त्रयः दोषाः ત્રણ દોષ तीनों दोष, प्रमेहान् પ્રમેહોને प्रमेहोंको, अभिनिर्वर्तयिष्यन्तः ઉત્પન્ન કરતાં उत्पन्न करते हुए, इमानि આ इन, पूर्वरूपाणि પૂર્વરૂપોને पूर्वरूपोंको, दर्शयन्ति દર્શાવે છે दिखाते हैं;

47-(1). These three provoked morbid humors during the course of the development of the urinary disorders manifest the following premonitory symptoms.

**तद्यथा—जटिलीभावं केशेषु, माधुर्यमास्यस्य, करपादयोः सुप्ततादाहौ, मुखतालुकण्ठशोषं, पिपासाम्, आलस्यं, मलं काये, कायच्छिद्रेषूपदेहं, परिदाहं सुप्ततां चाङ्गेषु, षट्पदपिपीलिकाभिश्च शरीरमूत्राभिसरणं, मूत्रे च मूत्रदोषान्, विस्रं शरीरगन्धं, निद्रां, तन्द्रां च सर्वकालमिति ॥४७॥**

तद् यथा જેમકે जैसे कि, केशेषु जटिलीभावम् કેશોનું એક બીજા સાથે મળી જટાની પેઠે થવું केशोंका आपसमें मिल कर जटाकी तरह होना, आस्यस्य મુખની मुखकी, माधुर्यम् મધુરતા मधुरता, करपादयोः હાથપગમાં हाथपैरमें, सुप्तता- સ્પર્શનું અજ્ઞાન स्पर्शका अज्ञान, दाहौ અને જલન और दाह, मुख- મુખ मुख, तालु- તાળવા तालु, कण्ठ- અને ગળાનો और गलेका, शोषम् શોષ शोष, पिपासाम् તરસ प्यास, आलस्यम् આળસ आलस्य, काये દેહમાં देहमें, मलम् મલની અધિકતા मलकी अधिकता, कायच्छिद्रेषु શરીરનાં છિદ્રોમાં शरीरके छिद्रोंमें, उपदेहम् મલથી ઉપલેપ मलसे उपलेप, अङ्गेषु અંગોમાં अङ्गोंमें, परिदाहम् પરિદાહ परिदाह, सुप्तताम् च તથા સુપ્તતા एवं सुप्तता, षट्पद- માખો मक्खियों, पिपीलिकाभिः च અને કીડીઓનું और चिऊंटियोंका, शरीर- શરીર शरीर, मूत्र- અને મૂત્ર ઉપર और मूत्र पर, अभिसरणम् આવવું आना, मूत्रे च મૂત્રમાં मूत्रमें, मूत्रदोषान् મૂત્રના દોષો मूत्रके दोष, विस्रम् વિસ્ર विस्र, शरीरगन्धम् શરીરની ગંધ થવી, शरीरकी गंधका होना, सर्वकालम् અને બધો વખત और सदा, निद्राम् નિદ્રા नींद, तन्द्राम् च इति અને તન્દ્રા और तन्द्रा ॥ ४७ ॥

47. They are the matting of hair, sweet taste in the mouth, numbness and burning of hands and feet, dryness in the mouth, palate and throat, thirst, indolence, increased excrement in the body, increased discharge in the orifices of the body, thermalgia and numbness in the body, attraction of insects and ants to the body and urine, abnormalities in urine, smell like raw meat in the body, sleep and continuous torpor.

प्रमेहाणामुपद्रवाः—

**उपद्रवास्तु खलु प्रमेहिणां तृष्णातीसारज्वरदाहदौर्बल्यारोचकाविपाकाः पूतिमांसपिडकालजीविद्रध्यादयश्च तत्प्रसङ्गाद्भवन्ति ॥ ४८ ॥**

प्रमेहिणाम् પ્રમેહીઓને प्रमेहियोंको, तृष्णा- તૃષ્ણા तृष्णा, अतीसार- અતિસાર अतीसार, ज्वर- જ્વર ज्वर, दाह- દાહ दाह, दौर्बल्य- દુર્બલતા दुर्बलता, अरोचक- અરુચિ अरुचि, अविपाकाः અપચો अन्नका न पचना, पूतिमांस- દુર્ગન્ધી માંસવાળી दुर्गन्धी मांसवाली, पिडका- પિડકાઓ पिडकायें, अलजी- અલજી अलजी, विद्रध्यादयः च વિદ્રધિ આદિ રોગો विद्रधि आदि रोगों, तत्प्रसङ्गात् પ્રમેહોના લાંબા સમય સુધી જારી રહેવાથી प्रमेहके देरतक रहेनेसे, उपद्रवाः तु ઉપદ્રવરૂપે उपद्रवरूपमें, भवन्ति થઈ જાય છે हो जाते हैं ॥ ४८ ॥

४७. माधुर्यमास्यस्य–माधुर्यमास्ये (क. ग. घ. ज. ठ.)

48. The complications of the urinary disorders are:–thirst, diarrhea, fever, burning, debility, anorexia, indigestion, putrefaction, sloughing, and inflammatory swelling such as dry gangrene, abscesses etc, due to the prolonged existence of the condition.

प्रमेहचिकित्सासूत्रम्—

**तत्र साध्यान् प्रमेहान् संशोधनोपशमनैर्यथार्हमुपपादयंश्चिकित्सेदिति ॥ ४९ ॥**

**तत्र** તેમાં उनमें, **साध्यान्** સાધ્ય साध्य, **प्रमेहान्** પ્રમેહોના प्रमेहोंकी, **संशोधन-** સંશોધન संशोधन, **उपशमनैः** અને સંશમનોથી और संशमनो द्वारा, **यथार्हम्** યથાયોગ્ય यथायोग्य, **उपपादयन्** ઉપચાર કરી उपचार करके, **चिकित्सेत् इति** ચિકિત્સા કરવી चिकित्सा करनी चाहिए ॥ ४९ ॥

49. The physician should treat these curable urinary anomalies by carrying out purificatory and sedative measures as required.

केषां प्रमेहः सहसा भवति? —

**भवन्ति चात्र—**

**गृध्नुमभ्यवहार्येषु स्नानचङ्क्रमणद्विषम् ।**
**प्रमेहः क्षिप्रमभ्येति नीडद्रुममिवाण्डजः ॥ ५० ॥**

**अत्र च** આ વિષયમાં इस विषयमें, **भवन्ति** શ્લોકો છે કે श्लोक हैं कि, **अण्डजः** જેવી રીતે પક્ષી जिस प्रकार पक्षी, **नीडद्रुमम् इव** પોતાના માળાવાળા ઝાડ-પર આવે છે अपने घोंसलेवाले वृक्ष पर आता है, **प्रमेहः** તેવી રીતે પ્રમેહ उसी प्रकार प्रमेह, **अभ्यवहार्येषु** ખાદ્ય પદાર્થોમાં आहारोंमें, **गृध्नुम्** લાલચ રાખનારા लोभ रखनेवाले, **स्नान-** તેમજ સ્નાન एवं स्नान, **चङ्क्रमण-** તથા હરવાફરવાના तथा भ्रमणके, **द्विषम्** દ્વેષી અર્થાત નહિ હરતા ફરતા પુરુષને द्वेषी अर्थात् भ्रमण नहीं करनेवाले पुरुषको, **क्षिप्रम्** જલદી शीघ्र, **अभ्येति** પ્રાપ્ત થાય છે प्राप्त होता है ॥ ५० ॥

Here are verses again—

50. Urinary disease soon nestles into him who is a gormandizer and averse to cleanliness and exertion even as birds nestle into their nidal tree.

**मन्दोत्साहमतिस्थूलमतिस्निग्धं महाशनम् ।**
**मृत्युः प्रमेहरूपेण क्षिप्रमादाय गच्छति ॥ ५१ ॥**

**मन्दोत्साहम्** મન્દ ઉત્સાહવાળા मन्द उत्साहवाले, **अतिस्थूलम्** અતિસ્થૂલ अत्यन्तस्थूल, **अतिस्निग्धम्** અતિસ્નિગ્ધ अतिस्निग्ध, **महाशनम्** અને બહુ ખાનારને और बहुत खानेवालेको, **मृत्युः** મૃત્યુ मृत्यु, **प्रमेहरूपेण** પ્રમેહરૂપે प्रमेहरूपसे, **क्षिप्रम्** જલદી शीघ्र, **आदाय** લઈ लेकर, **गच्छति** જાય છે जाती है ॥ ५१ ॥

51. The death in the garb of urinary disease catching hold of the person who is low-spirited, very corpulent, hyper-unctuous and gluttonous, carries him away.

केषां प्रमेहो न भवति? —

**यस्त्वाहारं शरीरस्य धातुसाम्यकरं नरः ।**
**सेवते विविधाश्चान्याश्चेष्टाः स सुखमश्नुते ॥५२॥**

**यः नरः** જે મનુષ્ય जो मनुष्य, **शरीरस्य** શરીરના शरीरके, **धातुसाम्यकरम्** ધાતુઓને સમાન કરનાર धातुओंको समान करनेवाला, **आहारम्** આહાર आहार, **विविधाः च** અને વિવિધ और नाना प्रकारकी, **अन्याः** બીજી अन्य, **चेष्टाः** ચેષ્ટાઓને चेष्टाओंका, **सेवते** સેવે છે सेवन करता है, **सः** તે वह, **सुखम्** આરોગ્યને आरोग्यको, **अश्नुते** ભોગવે છે भोगता है ॥ ५२ ॥

52. The person who takes only the food which is homologatory to the

---

५२. आहारं—आहारान् (ग.)

,, धातुसाम्यकरं—धातुसाम्यकरान् (ग.)

body-elements as also practises all other wholesome activities of life, enjoys happy life.

अध्यायोक्तविषयाः—

**तत्र श्लोकाः—**

**हेतुर्व्याधिविशेषाणां प्रमेहाणां च कारणम् ।**
**दोषधातुसमायोगो रूपं विविधमेव च ॥५३॥**

तत्र તે વિષયમાં उस विषयमें, श्लोकाः ઉપસંહારના શ્લોકો છે કે उपसंहारके श्लोक हैं कि, व्याधिविशेषाणाम् જુદા જુદા રોગોનાં भिन्न भिन्न रोगोंके, हेतुः કારણ कारण, दोषधातु- દોષ અને ધાતુઓનો दोष और धातुओंका, समायोगः સંયોગ संयोग, विविधम् च एव અને વિવિધ और नानाप्रकारके, रूपम રૂપ रूप ॥५३॥

Here are the recapitulatory verses—

53. Etiology of the special pathological factors in the evolution of the urinary disorders, the combination of the morbid humors and body-elements, the various forms;

**दश श्लेष्मकृता यस्मात् प्रमेहाः षट् च पित्तजाः।**
**यथा च वायुश्चतुरः प्रमेहान् कुरुते बली ॥५४॥**

यस्मात् જે કારણથી जिस कारणसे, श्लेष्मकृताः કફજન્ય कफजन्य, दश દશ दस, प्रमेहाः પ્રમેહો થાય છે प्रमेह होते हैं, पित्तजाः च અને પિત્તજ और पित्तज, षट् છ થાય છે छः होते हैं, बली वायुः च અને બળવાન વાયુ और बलवान वायु, चतुरः ચાર चार, प्रमेहान् પ્રમેહોને प्रमेहोंको, यथा જે પ્રકારે जिस प्रकारसे, कुरुते કરે છે करता है ॥५४॥

54. the ten urinary disorders of kapha type, the six of pitta type and the four types caused by the powerful vata;

**साध्यासाध्यविशेषाश्च पूर्वरूपाण्युपद्रवाः ।**
**प्रमेहाणां निदानेऽस्मिन् क्रियासूत्रं च भाषितम् ॥५५॥**

साध्य- સાધ્ય साध्य, असाध्य- तथा અસાધ્યના तथा असाध्यके, विशेषाः ભેદો भेद, पूर्वरूपाणि પૂર્વરૂપ पूर्वरूप, उपद्रवाः ઉપદ્રવો उपद्रव, क्रियासूत्रं च અને સંક્ષિપ્ત ચિકિત્સા और संक्षिप्त चिकित्सा, अस्मिन् આ इस, प्रमेहाणाम् निदाने 'પ્રમેહનિદાન' અધ્યાયમાં 'प्रमेहनिदान' अध्यायमें, भाषितम् કહ્યાં છે कहे हैं ॥५५॥

55. the classification of the curable and incurable, the premonitory symptoms, complications and the line of treatment—all these have been described in this chapter on the Pathology of the anomalies of urinary secretion.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने प्रमेहनिदानं नाम चतुर्थोऽध्यायः ॥४॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा प्रतिसंस्कृत इस शास्त्रके, निदानस्थाने નિદાનસ્થાન વિષે निदानस्थानमें, प्रमेहनिदानम् 'પ્રમેહનિદાન' 'प्रमेहनिदान', नाम નામનો नामका, चतुर्थः ચોથો चौथा, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥४॥

4. Thus in the section on Pathology in the treatise compiled by Agnivesa and revised by Caraka, the fourth chapter entitled, "The Pathology of the Anomalies of the Urinary Secretion" is completed.

## पञ्चमोऽध्यायः ।

## પાંચમો અધ્યાય अध्याय पाँचवाँ

## Chapter V

कुष्ठनिदानाध्यायोपक्रमः—

**अथातः कुष्ठनिदानं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**अथ अतः** હવે અહીંથી अब आगे, **'कुष्ठनिदानम्'** 'કુષ્ઠનિદાન' નામના અધ્યાયનું 'कुष्ठनिदान' नामके अध्यायका, **व्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

**भगवान्** ભગવાન भगवान, **आत्रेयः** આત્રેયે आत्रेयने, **इति ह** આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, **आह स्म** કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the chapter on "The Pathology of Dermatosis."

2. Thus declared the worshipful Atreya.

कुष्ठानां दोषदूष्यसंग्रहः—

**सप्त द्रव्याणि कुष्ठानां प्रकृतिर्विकृतिमापन्नानि भवन्ति । तद्यथा—त्रयो दोषा वातपित्तश्लेष्माणः प्रकोपणविकृताः; दूष्याश्च शरीरधातवस्त्वङ्मांसशोणितलसीकाश्चतुर्धा दोषोपघातविकृता इति ।**

**विकृतिम्** વિકૃતિ विकृतिको, **आपन्नानि** પામેલાં प्राप्त हुए, **सप्त** સાત सात, **द्रव्याणि** દ્રવ્યો द्रव्य, **कुष्ठानाम्** કુષ્ઠોનાં कुष्ठोंके, **प्रकृतिः** કારણરૂપ कारणरूप, **भवन्ति** થાય છે होते हैं, **तद् यथा** જેમકે जैसे कि, **प्रकोपण-** પ્રકોપક કારણોથી प्रकोपक कारणोंसे, **विकृताः** વિકૃત થયેલા विकृत हुए, **वात-** વાત वात, **पित्त-** પિત્ત पित्त, **श्लेष्माणः** તથા કફ तथा कफ, **त्रयः** એ ત્રણ ये तीन, **दोषाः** દોષ दोष, **दोष-** તેમજ દોષના एवं दोषोंके, **उपघात-** સંસર્ગથી संसर्गसे, **विकृताः** વિકૃત થયેલા विकृत हुई, **दूष्याः** દૂષ્યરૂપ दूष्यरूप, **त्वक्-** ચામડી त्वक्, **मांस-** માંસ मांस, **शोणित-** રક્ત रक्त, **लसीकाः** તથા લસીકા तथा लसीका, **चतुर्धा इति** એ ચાર પ્રકારના ये चार प्रकारकी, **शरीर-** શરીરના शरीरकी, **धातवः** ધાતુઓ धातुएं;

3-(1). Seven are the causative factors of dermatosis. They are:— the three humors of vata, pitta and kapha rendered morbid by provocation and the four susceptible body-elements viz., skin, flesh, blood and lymph that are vitiated by morbid humors.

**एतत् सप्तानां सप्तधातुकमेवङ्गतमाजननं कुष्ठानाम्, अतःप्रभवाण्यभिनिर्वर्तमानानि केवलं शरीरमुपतपन्ति ॥ ३ ॥**

**एवम्** આ પ્રમાણે इस प्रकार, **गतम्** થયેલા होता हुआ, **एतत्** આ यह, **सप्तधातुकम्** સાત ધાતુઓનો સમૂહ सात धातुओंका समूह, **सप्तानाम्** સાત सात, **कुष्ठानाम्** કુષ્ઠોનો कुष्ठोंका, **आजननम्** ઉત્પન્ન કરનાર થાય છે उत्पादक होता है, **अतःप्रभवाणि** આ કારણથી ઉત્પન્ન થયેલા इस कारणसे उत्पन्न हुए, **अभिनिर्वर्तमानानि** અને સર્વ બાજુએ પ્રસરતા કુષ્ઠો और सब ओर फैलते हुए कुष्ठ, **केवलम्** સંપૂર્ણ संपूर्ण, **शरीरम्** શરીરને शरीरको, **उपतपन्ति** હેરાન કરે છે पीड़ित करते हैं ॥३॥

3. These seven body-elements are the source of many varieties of dermatosis. These, having been thus brought about, manifest local signs, and afflict the entire body.

१. प्रकृतिर्विकृतिमापन्नानि—प्रकृतिमापन्नानि (क. ख. घ. ठ.)
,, ,, —प्रकृतिविकृतिमापन्नानि (च. ध.)
,, प्रकोपणविकृताः—क्रमेण विकृताः (ठ.)
,, ,, —प्रकोपविकृताः (प.)
,, °लसीकाश्चतुर्धा—°लसीकाचतुर्धा (क.)

३. प्रभवाण्यभिनिर्वर्तमानानि—प्रभवादभिनिर्वर्तमानानि (क. च छ.)
,, °प्रभवाणि—°प्रभावाणि (त.)
,, शरीरम्—शरीरमुष्णम् (ग.)

समानप्रकृतीनामपि कुष्ठानां दोषांशविकल्पादिभिर्वेदनादिविशेषाः—

**न च किञ्चिदस्ति कुष्ठमेकदोषप्रकोपनिमित्तम्, अस्ति तु खलु समानप्रकृतीनामपि कुष्ठानां दोषांशांशविकल्पानुबन्धस्थानविभागेन वेदनावर्णसंस्थानप्रभावनामचिकित्सितविशेषः ।**

**एक-** એક एक, **दोष-** દોષના दोषके, **प्रकोप-** પ્રકોપના प्रकोपके, **निमित्तम्** કારણવાળું कारणवाला, **किञ्चित्** કોઈ પણ कोई भी, **कुष्ठम्** કુષ્ઠ कुष्ठ, **न च अस्ति** નથી नहीं है, **समान-** સમાન समान, **प्रकृतीनाम्** પ્રકૃતિવાળા प्रकृतिवाले, **अपि** પણ भी, **कुष्ठानाम्** કુષ્ઠોના कुष्ठोंके, **तु खलु** તો तो, **दोष-** દોષોના दोषोंके, **अंश-** अंश-અંશાંશ अंशांश, **विकल्प-** ભેદથી भेदसे, **अनुबन्ध-** અનુબન્ધથી अनुबन्धसे, **स्थान-** તથા સ્થાનના तथा स्थानके, **विभागेन** વિભાગથી विभागसे, **वेदना-** વેદના वेदना, **वर्ण-** વર્ણ वर्ण, **संस्थान-** સંસ્થાન संस्थान, **प्रभाव-** પ્રભાવ प्रभाव, **नाम-** નામ नाम, **चिकित्सित-** અને ચિકિત્સામાં और चिकित्सामें, **विशेषः** ભેદ भेद, **अस्ति** થઈ જાય છે हो जाता है;

4-(1). Dermatosis is never born as a result of the provocation of one single humor only. Though the causative morbid humors are the same in all the dermatoses, yet they are differentiated by the minutia of provocation, the sequela and site, which produce the differences in their characteristic pain, color, shape, effects, name and treatment.

कुष्ठानां बहुत्वेऽपि सप्तस्वेवान्तर्भावं कृत्वोपदेशः —

**स सप्तविधोऽष्टादशविधोऽपरिसंख्येयविधो वा भवति । दोषा हि विकल्पनैर्विकल्प्यमाना विकल्पयन्ति विकारान्, अन्यत्रासाध्यभावात् । तेषां विकल्पविकारसंख्यानेऽतिप्रसङ्गमभिसमीक्ष्य सप्तविधमेव कुष्ठविशेषमुपदेक्ष्यामः ॥ ४ ॥**

**सः** તે वह, **सप्तविधः** સાત પ્રકારનો सात प्रकारका, **अष्टादशविधः** અઢાર પ્રકારનો अठारह प्रकारका, **अपरिसंख्येयविधः वा** અથવા અસંખ્ય પ્રકારનો अथवा असंख्य प्रकारका, **भवति** થાય છે होता है, **हि** કારણકે क्योंकि, **विकल्पनैः** ભેદોથી भेदोंसे, **विकल्प्यमानाः** વિભાજિત કરાતા विभक्त किये जाते, **दोषाः** દોષો दोष, **असाध्यभावात्** અસાધ્યભાવ असाध्यभावके, **अन्यत्र** સિવાય बिना, **विकारान्** વિકારોના विकारोंके, **विकल्पयन्ति** ભેદ પાડે છે भेद कर देते हैं, **तेषाम्** તેઓના उनके, **विकल्प-** ભેદ પ્રમાણે भेदके अनुसार, **विकार-** વિકારો विकारोंको, **संख्याने** ગણવામાં गिननेमें, **अतिप्रसङ्गम्** બહુ વિસ્તાર अत्यधिक विस्तार, **अभिसमीक्ष्य** જોઈને देख कर, **सप्तविधम्** સાત પ્રકારના सात प्रकारके, **कुष्ठविशेषम्** કુષ્ઠભેદોને कुष्ठभेदोंका, **उपदेक्ष्यामः** ઉપદેશ કરશું उपदेश करेंगे ॥ ४ ॥

4. They may be classified into seven kinds or eighteen kinds or innumerable varieties. When the morbidised humors are classified according to the various combinations, diseases too, fall into similar classifications except in the case of irremediable disorders. As the list of the varieties of disorders is too long to narrate, we shall content ourselves here with describing only seven main varieties of dermatoses.

दोषाधिक्यविशेषेण सप्तविधः कुष्ठविशेषः —

**इह वातादिषु त्रिषु प्रकुपितेषु त्वगादींश्चतुरः प्रदूषयत्सु वातेऽधिकतरे कपालकुष्ठमभिनिर्वर्तते, पित्ते त्वौदुम्बरं, श्लेष्मणि मण्डलकुष्ठं, वातपित्तयोर्ऋष्यजिह्वं, पित्तश्लेष्मणोः पुण्डरीकं, श्लेष्ममारु-**

४. विकल्पानुबन्ध—विकल्पस्थान (ख. ठ.)

,, विकल्पनैः—रूपणैः (ग.)

, अन्यत्रासाध्यभावात्—संख्यानसाध्यभावात् (ख.)

५. कपालकुष्ठम्—कापालकुष्ठम् (ठ.)

**तयोः सिध्मकुष्ठं, सर्वदोषाभिवृद्धौ काकणकमभिनिर्वर्तते;**

**इह** અહીં यहां, **प्रकुपितेषु** પ્રકુપિત થયેલા प्रकुपित हुए, **त्रिषु** ત્રણેય तीनों, **वातादिषु** વાતાદિક દોષો वात आदि दोष, **त्वक्- आदीन्** ત્વચા આદિ त्वचा आदि, **चतुरः** ચારને चारोंको, **प्रदूषयत्सु** દૂષિત કરતાં दूषित करते हुए, **वाते** વાત वातके, **अधिकतरे** અન્યની અપેક્ષાથી અધિક થાય ત્યારે अन्यकी अपेक्षासे अधिक होने पर, **कपालकुष्ठम्** કપાલકુષ્ઠ कपालकुष्ठ, **अभिनिर्वर्तते** ઉત્પન્ન થાય છે उत्पन्न होता है, **पित्ते** પિત્ત અધિક થાય ત્યારે पित्तके अधिक होने पर, **तु** તો तो, **औदुम्बरम्** ઔદુમ્બર औदुम्बर, **श्लेष्मणि** કફ અધિક થાય ત્યારે कफके अधिक होने पर, **मण्डलकुष्ठम्** મંડલ કુષ્ઠ मण्डलकुष्ठ, **वातपित्तयोः** વાત તથા પિત્ત અધિક થાય ત્યારે वात और पित्त अधिक होने पर, **ऋष्यजिह्वम्** ઋષ્યજિહ્વ ऋष्यजिह्व, **पित्तश्लेष्मणोः** પિત્ત તથા કફ અધિક થાય ત્યારે पित्त और कफ अधिक होने पर, **पुण्डरीकम्** પુંડરીક पुण्डरीक, **श्लेष्ममारुतयोः** કફ તથા વાત અધિક થાય ત્યારે कफ और वात अधिक होने पर, **सिध्मकुष्ठम्** સિધ્મકુષ્ઠ सिध्मकुष्ठ, **सर्वदोष-** અને બધા દોષની और सब दोषोंकी, **अभिवृद्धौ** અભિવૃદ્ધિ થાય ત્યારે अभिवृद्धि होने पर, **काकणकम्** કાકણક काकणक, **अभिनिर्वर्तते** ઉત્પન્ન થાય છે उत्पन्न होता है;

5-(1). When vata and other humors get provoked and vitiate the four body-elements such as skin etc, if vata is predominant, there results Kapala dermatosis and if kapha is predominant Mandala dermatosis is the result. When both vata and pitta are predominant, the Rishyajihva type of dermatosis is the result. When pitta and kapha predominate the Pundarika dermatosis results; when kapha and vata predominate Sidhma dermatosis and when all the three humors equally predominate the Kakanaka type of dermatosis is the result.

**एवमेष सप्तविधः कुष्ठविशेषो भवति। स चैष भूयस्तरतमतः प्रकृतौ विकल्प्यमानायां भूयसीं विकारविकल्पसंख्यामापद्यते ॥ ५ ॥**

**एवम्** આ પ્રમાણે इस प्रकार, **एषः** આ यह, **सप्तविधः** સાતપ્રકારનો सात प्रकारका, **कुष्ठविशेषः** કુષ્ઠભેદ कुष्ठभेद, **भवति** થાય છે होता है. **सः च** અને તે और वह, **एषः** આ यह, **भूयः** વળી और भी, **तर-तमतः** અંશાંશથી अंशांशद्वारा, **प्रकृतौ** પ્રકૃતિના प्रकृतिके, **विकल्प्यमानायाम्** ભેદ પડતાં विकल्प करनेपर, **भूयसीम्** અધિક अधिक, **विकार-** વિકારના विकारके, **विकल्प-** ભેદોની भेदोंकी, **संख्याम्** સંખ્યાને संख्याको, **आपद्यते** પ્રાપ્ત કરે છે प्राप्त करता है ॥ ५ ॥

5. Thus these are the seven main types of dermatosis. When these combine in varying degrees, they cause various types of the disease.

समासेन सर्वकुष्ठनिदानम्—

**तत्रेदं सर्वकुष्ठनिदानं समासेनोपदेक्ष्यामः— शीतोष्णव्यत्यासमनानुपूर्व्योपसेवमानस्य तथा संतर्पणापतर्पणाभ्यवहार्यव्यत्यासं, मधुफाणितमत्स्यलकुचमूलककाकमाचीः सततमतिमात्रमजीर्णे च समश्नतः, चिलिचिमं च पयसा, हायनकयवकचीनकोद्दालककोरदूषप्रायाणि चान्नानि क्षीरदधितक्रकोलकुलत्थमाषातसीकुसुम्भस्नेहवन्ति, एतैरेवातिमात्रं सुहितस्य च व्यवायव्यायामसंतापानत्युपसेवमानस्य, भयश्रमसंतापोपहतस्य च सहसा शीतोदकमवतरतः, विदग्धं चाहारजातमनुल्लिख्य**

५. सिध्मकुष्ठं–सिध्म (च. ज. द.)

५. स चैष–स एव (च.)

,, भूयस्तरतमतः प्रकृतौ विकल्प्यमानायां–भूयोनः प्रकृतिविकल्पनया (फ.)

६. °कुसुम्भस्नेहवन्ति–°कुसुम्भपरूषस्नेहवन्ति (क. ध. त.)

,, भयश्रम°–श्रमक्लम° (ग.)

,, आहारजातम्–आहारम् (ध.)

**विदाहीन्यभ्यवहरतः, छर्दिं च प्रतिघ्नतः, स्नेहांश्चातिचरतः, त्रयो दोषाः युगपत् प्रकोपमापद्यन्ते; त्वगादयश्चत्वारः शैथिल्यमापद्यन्ते; तेषु शिथिलेषु दोषाः प्रकुपिताः स्थानमधिगम्य संतिष्ठमानास्तानेव त्वगादीन् दूषयन्तः कुष्ठान्यभिनिर्वर्तयन्ति ॥६॥**

**तत्र** અહીં यहां, **इदम्** આ यह, **सर्व-** સર્વ सब, **कुष्ठ-** કુષ્ઠોનું कुष्ठोंका, **निदानम्** નિદાન निदान, **समासेन** સંક્ષેપમાં संक्षेपमें, **उपदेक्ष्यामः** કહેશું कहेंगे, **शीत-** શીતના शीतके, **उष्ण-** અને ઉષ્ણના और उष्णके, **व्यत्यासम्** પરિવર્તનને परिवर्तनको, तथा અને और, **संतपर्ण-** સંતર્પણ संतर्पण, **अपतर्पण-** અપતર્પણ अपतर्पण, **अभ्यवहार्य-** तथा ભોજ્ય પદાર્થોના एवं भोज्यपदार्थके, **व्यत्यासम्** પરિવર્તનને परिवर्तनको, **अनानुपूर्व्या** ક્રમ સિવાય क्रमके बिना, **उपसेवमानस्य** સેવનારના सेवन करनेवालेके, **मधु-** મધુ मधु, **फाणित-** ફાણિત फाणित, **मत्स्य-** મત્સ્ય मत्स्य, **लकुच-** લકુચ बडहल, **मूलक** મૂળા मूली, **काकमाचीः** तथा કાકમાચીને तथा मकोयको, **सततम्** સતત निरन्तर, **अतिमात्रम्** અતિમાત્રામાં अधिक मात्रामें, **अजीर्णे च** અને અજીર્ણમાં और अजीर्णमें, **समश्नतः** ભોજન કરનારના खानेवालेके, **पयसा च** દૂધની સાથે दूधके साथ, **चिलिचि म्** ચિલિચિમ ખાનારના चिलिचिमको खानेवालेके, **क्षीर-** દૂધ दूध, **दधि-** દહીં दही, **तक्र-** છાસ तक्र, **कोल-** બોર बेर, **कुलत्थ-** કળથી कुलत्थ, **माष-** અડદ माष, **अतसी-** અળસી अलसी, **कुसुम्भ-** કુસુંભ कुसुम्भ, **स्नेहवन्ति** तथा સ્નેહયુક્ત और स्नेहयुक्त, **हायनक-** હાયનક हायनक, **यवक-** યવક यवक, **चीनक-** ચીનક चीनक, **उद्दालक-** ઉદ્દાલક उद्दालक, **कोरदूष-** તેમજ કોરદૂષ एवं कोरदूष, **प्रायाणि** જેમાં મુખ્ય છે એવાં जिनमें मुख्य हैं ऐसे, **अन्नानि च** અન્નોનું ભોજન કરનારના अन्नोंका भोजन करनेवालेके, **एतैः** એઓથી इन पदार्थोंसे, **एव** જ ही, **अतिमात्रम्** અતિપ્રમાણમાં अतिप्रमाणमें, **सुहितस्य** તૃપ્ત થયેલાના तृप्त होनेवालेके, **व्यवाय-** મૈથુન मैथुन, **व्यायाम-** વ્યાયામ व्यायाम, **संतापान्** तथा સંતાપનું तथा धूपका, **अति- उपसेवमानस्य** અતિશય સેવન કરનારના अति सेवनकरनेवालेके, **भय-** ભય भय, **श्रम-** શ્રમ श्रम, **संताप-** तथा સંતાપથી तथा संतापसे, **उपहतस्य** પીડા પામતાં પામતાં पीडित हुए हुए, **सहसा** એકદમ सहसा, **शीत-** ઠંડા शीतल, **उदकम्** પાણીમાં जलमें, **अवतरतः च** ઉતરનારના उतरनेवालेके, **विदग्धम्** વિદગ્ધ विदग्ध, **आहारजातम्** આહારસમૂહનું आहारसमूहका, **अनुल्लिख्य** વમન કર્યા સિવાય वमन किये विना, **विदाहीनि** વિદાહી દ્રવ્યો। विदाही द्रव्यका, **अभ्यवहरतः च** ખાનારના भोजन करनेवालेका, **छर्दिम्** ઉલટીના વેગને वमनके वेगको, **प्रतिघ्नतः** રોકનારના रोकनेवालेके, **स्नेहान् च** અને સ્નેહોનો और स्नेहोंका, **अतिचरतः** અતિ ઉપયોગ કરનારના अति सेवनकरनेवालेके, **त्रयः** ત્રણે तीनों, **दोषाः** દોષો दोष, **युगपत्** એકસાથે एकसाथ, **प्रकोपम्** પ્રકોપ प्रकुपित, **आपद्यन्ते** પામે છે हो जाते हैं, **त्वक्- आदयः** तथा ત્વચા આદિ तथा त्वचा आदि, **चत्वारः** ચાર चारों, **शैथिल्यम्** શિથિલતા शिथिलताको, **आपद्यन्ते** પામે છે प्राप्त करते हैं, **तेषु** તેઓ उनके, **शिथिलेषु** શિથિલ થતાં शिथिल होनेपर, **प्रकुपिताः** પ્રકોપ પામેલા प्रकुपित हुए, **दोषाः** દોષો दोष, **स्थानम्** સ્થાન स्थान, **अधिगम्य** પામીને पा कर, **सन्तिष्ठमानाः** રહેતાં रहते हुए, **तान् एव** તે જ उन ही, **त्वगादीन्** ત્વચા વગેરેને त्वचा आदिको, **दूषयन्तः** દૂષિત કરતા કરતા दूषित करते हुए हुए, **कुष्ठानि** કુષ્ઠ कुष्ठोंको, **अभिनिर्वर्तयन्ति** ઉત્પન્ન કરે છે उत्पन्न करते हैं ॥ ६ ॥

६. अभ्यवहरतः—अभ्यस्यतः (ग.)

6. Here we explain in short the pathology of all types of dermatosis. Sudden changes from cold to heat without observing the rules of gradual change and similarly sudden change from fasting and diet without observing the rules of gradual change, and taking constantly and excessively honey, treacle, fish, lakucha, radish, kakamachi, taking predigestion-meals; also eating the chilichima fish with milk and taking food made mainly of hayanaka, wild barley, cheenaka, uddalaka and common-millet grains

along with milk, curds, butter-milk, indian jujube, horse-gram, black-gram, linseed, safflower and unctuous articles. If having indulged excessively in these, a person is addicted to excessive sexual intercourse, excercise or grief, plunges suddenly into cold water or if he eats irritant food without vomiting out the mis-digested food or suppresses the urge for vomiting or indulges in excessive oleation, all the three humors get simultaneously provoked. The four body-elements such as skin, etc, become flabby. The provoked humors settling themselves in these vitiated body-elements and getting localised then vitiate them further and generate skin lesions.

कुष्ठानां पूर्वरूपाणि —

**तेषामिमानि पूर्वरूपाणि भवन्ति; तद्यथा—अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णता वैवर्ण्यं कण्डूर्निस्तोदः सुप्तता परिदाहः परिहर्षो लोमहर्षः खरत्वमूष्मायणं गौरवं श्वयथुर्वीसर्पागमनमभीक्ष्णं च काये कायच्छिद्रेषूपदेहः पक्वदग्धदष्टभग्नक्षतोपस्खलितेष्वतिमात्रं वेदना स्वल्पानामपि च व्रणानां दुष्टिरसंरोहणं चेति ॥ ७ ॥**

**तेषाम्** તેઓનાં इनके, **इमानि** આ ये, **पूर्वरूपाणि** પૂર્વરૂપો पूर्वरूप, **भवन्ति** થાય છે होते हैं, **तत् यथा** જેમકે जैसे कि, **अस्वेदनम्** પરસેવો ન આવવો पसीना न आना, **अतिस्वेदनम्** પરસેવો બહુ આવવો पसीना बहुत आना, **पारुष्यम्** કઠોરતા कर्कशता, **अतिश्लक्ष्णता** અતિશ્લક્ષ્ણતા अतिश्लक्ष्णता, **वैवर्ण्यम्** વિવર્ણતા विवर्णता, **कण्डूः** ખજવાળ कण्डू, **निस्तोदः** સોઈ ભોંકવા જેવી પીડા सूई चूभनेसी दर्द, **सुप्तता** સ્પર્શાજ્ઞાન सुप्तता, **परिदाहः** અતિદાહ अतिदाह, **परिहर्षः** ઝણઝણાટી अङ्गोंमें झनझन होना, **लोमहर्षः** રોમાંચ रोमांच, **खरत्वम्** ખરતા खरत्व, **ऊष्मायणम्** ગરમી જેવું નીકળવું गरमीकी निकलना, **गौरवम्** ભારેપણું भारीपन, **श्वयथुः** સોજો शोथ, **अभीक्ष्णम्** વારંવાર बारबार, **वीसर्प- आगमनम् च** વીસર્પનું થવું विसर्पका होना, **काये** શરીરમાં शरीरमें **कायच्छिद्रेषु** તથા શરીરનાં છિદ્રોમાં तथा शरीरके छिद्रोंमें, **उपदेहः** ઉપલેપ उपलेप, **पक्व-** પાક થતાં पाकनेपर, **दग्ध-** બળી જતાં जलने पर, **दष्ट-** દંશ થતાં काटने पर, **भग्न-** ભાંગી જતાં टूटने पर, **क्षत-** क्षत થતાં क्षत होने पर, **उपस्खलितेषु** ઠેસ લાગતાં गिर पड़नेपर, **अतिमात्रम्** અતિશય अत्यन्त, **वेदना** વેદના वेदना, **स्वल्पानाम्** સ્વલ્પ छोटेसे, **अपि** પણ भी, **व्रणानाम् च** વ્રણોનું व्रणोंका, **दुष्टिः** દૂષિત થવું दूषित होना, **असंरोहणम् च इति** અને રૂઝ ન આવવી और रोहण न होना ॥ ७ ॥

7. These are the premonitory symptoms of these dermatoses viz., anhidrosis, hyper-hidrosis, hardness, extreme smoothness, discoloration, pruritus, pricking pain, anesthesia, all-round burning, hyperesthesia, horripilation, roughness, releasing of heat, thickening, edema and acute spreading affection frequently on the body, discharge in the various orifices of the body, excessive pain in case of suppurations, burns, bites, fractures, wounds and stumbling, and the putrefaction and non-healing of even slight wounds.

कपालकुष्ठस्य लक्षणम्—

**ततोऽनन्तरं कुष्ठान्यभिनिर्वर्तन्ते, तेषामिदं वेदनावर्णसंस्थानप्रभावनामविशेषविज्ञानं भवति; तद्यथा—रूक्षारुणपरुषाणि विषमविसृतानि खर-**

७. °दष्टभग्नक्षत—°दष्टक्षत (क. ग.)
,, चेति-अस्मादनन्तरम्—
'कुष्ठानां पूर्वरूपाणि भवन्ति' इत्यधिकः पाठः (ख.घ.) पुस्तकयोः।

८-(१). ततोऽनन्तरं कुष्ठान्यभिनिर्वर्तन्ते—तेभ्योऽनन्तरं कुष्ठानि जायन्ते (ठ. त)

**पर्यन्तानि तनून्युद्वृत्तबहिस्तनूनि सुप्तवत्सुप्तानि हृषितलोमाचितानि निस्तोदबहुलान्यल्पकण्डूदाहपूयलसीकान्याशुगतिसमुत्थानान्याशुभेदीनि जन्तुमन्ति कृष्णारुणकपालवर्णानि च कपालकुष्ठानीति विद्यात् (१);**

**ततः अनन्तरम्** તે પછી उसके बाद, **कुष्ठानि** કુષ્ઠો कुष्ठ, **अभिनिर्वर्तन्ते** ઉત્પન્ન થાય છે उत्पन्न होते हैं, **तेषाम्** તેઓનાં इनके, **इदम्** આ यह, **वेदना-** વેદના वेदना, **वर्ण-** વર્ણ वर्ण, **संस्थान-** સંસ્થાન संस्थान, **प्रभाव-** પ્રભાવ प्रभाव, **नाम-** અને નામના और नामके, **विशेष-** ભેદનું विशेषका, **विज्ञानम्** જ્ઞાન ज्ञान, **भवति** થાય છે होता है, **तत् यथा** જેમકે जैसे कि, **रूक्ष-** રૂક્ષ रूक्ष, **अरुण-** અરુણ अरुण, **परुषाणि** કઠોર परुष, **विषम-** વિષમપણે विषम रूपमें, **विसृतानि** ફેલાયેલાં फैले हुए, **खरपर्यन्तानि** ખરબચડી કિનારવાળાં किनारों पर खर, **तनूनि** પાતળાં पतले, **उद्वृत्त-** ઊંચે આવેલા ऊंचे ऊठे हुए, **बहिस्तनूनि** બહારના ભાગવાળાં बाहिरके भागवाले, **सुप्तवत्** સુપ્તની પેઠે सोये हुएकी तरह, **सुप्तानि** સ્પર્શજ્ઞાનરહિત स्पर्शज्ञानरहित, **हृषित-लोमाचितानि** રોમાંચયુક્ત रोमांचयुक्त, **निस्तोदबहुलानि** મોટે ભાગે સોઈ ભોંકાયા જેવી પીડાવાળાં अधिक तोदयुक्त, **अल्प-** અલ્પ अल्प, **कण्डू-** કંડૂ कण्डू, **दाह-** દાહ दाह, **पूय-** પરુ पूय, **लसीकानि तथा** લસીકાવાળાં और लसीकावाले, **आशु-** તરત शीघ्र, **गति-** ફેલાવાવાળાં फैलनेवाले, **समुत्थानानि तथा** ઉત્પત્તિવાળાં तथा उत्पन्न होनेवाले, **आशुभेदीनि** જલદી ફાટનારાં शीघ्र फटनेवाले, **जन्तुमन्ति** જન્તુયુક્ત कीटयुक्त, **कृष्ण-** કાળાં कृष्ण, **अरुण-** અરુણ अरुण, **कपाल-** અને ઠીકરાં જેવાં और कपाल जैसे, **वर्णानि-** રંગવાળાં કુષ્ઠો वर्णवाले कुष्ठ, **कपालकुष्ठानि** કપાલકુષ્ઠ છે कपालकुष्ठ हैं, **इति** એમ ऐसा, **विद्यात्** જાણવું जानना चाहिए (१);

8-(1). After this the dermic lesions make their appearance. These are the special characteristics regarding the nature of the pains, colors, shapes, effects and names. They are dry, reddish and hard, unevenly spread, have rough edges, are thin, slightly elevated externally, numbed as if paralysed, covered with bristling hair, afflicted with extreme piercing pain, lighting, itching and burning and have scanty purulent or serus discharge, are quickly ulcerating and infected with parasites and are dark-red in color like a piece of broken earthen-pot—such are to be known as Kapala dermatoses (erythema group).

उदुम्बरकुष्ठस्य लक्षणम्—

**ताम्राणि ताम्रखररोमराजीभिरवनद्धानि बहलानि बहुबहलपूयरक्तलसीकानि कण्डूक्लेदकोथदाहपाकवन्त्याशुगतिसमुत्थानभेदीनि ससंतापक्रिमीणि पक्वोदुम्बरफलवर्णान्यौदुम्बरकुष्ठानीति विद्यात् (२);**

**ताम्राणि** તામ્રવર્ણ ताम्रवर्ण, **ताम्र-** તામ્ર જેવા રંગનાં ताम्र, **खर-** ખરબચડાં खर, **रोमराजीभिः** રૂંવાડાંના સમૂહથી रोमराजीसे, **अवनद्धानि** યુક્ત युक्त, **बहलानि** ઘાટાં घन, **बहु-** અધિક बहुत, **बहल-** ઘાટાં गाढे, **पूय-** પરુ पूय, **रक्त-** રક્ત रक्त, **लसीकानि तथा** લસીકાવાળાં तथा लसीकासे युक्त, **कण्डू-** ખજવાળ कण्डू, **क्लेद-** ક્લેદ क्लेद, **कोथ-** સડો कोथ, **दाह-** દાહ दाह, **पाकवन्ति** અને પાકયુક્ત और पाकयुक्त, **आशु-** જલદી जलदी, **गति-** ફેલાનાર फैलनेवाले, **समुत्थान-** ઉત્પન્ન થનાર उत्पन्न होनेवाले, **भेदीनि** તેમજ ફાટનાર एवं फूटनेवाले, **ससन्तापक्रिमीणि** સંતાપ તથા કૃમિ યુક્ત सन्ताप एवं कृमिसे युक्त, **पक्व-** અને પાકેલાં और पके हुए, **उदुम्बर-फल-** ઉંબરાના ફળ જેવાં गूलरके फलके समान, **वर्णानि** વર્ણવાળાં કુષ્ઠો वर्णयुक्त कुष्ठ, **औदुम्बरकुष्ठानि**

८-(१). तनून्युद्वृत्तबहिस्तनूनि—तनूनि (ध.)
,, सुप्तवत्सुप्तानि—सुप्तसुप्तानि (च. त. द. ध.)

८-(२). ताम्रखररोमराजीभिः — ताम्ररोमराजीभिः (क.)
,, ,, — ताम्रगौरराजीभिः (फ.)

ઔદુમ્બર કુષ્ઠ છે औदुम्बर कुष्ठ हैं, इति એમ ऐसा, विद्यात् જાણવું जानना चाहिए (२);

8-(2). Those that are copper colored, covered with copper colored rough rows of hair, dense, have plenty of thick discharge of pus, blood and lymph accompanied with itching, moisture, sloughing, burning and suppuration, those that spread, appear and ulcerate quickly and are infected with afflicting parasites and are of the color of ripe gular fig-fruit, are to be known as Audumbara dermatoses (acute inflammatory group).

मण्डलकुष्ठस्य लक्षणम्—

**स्निग्धानि गुरूण्युत्सेधवन्ति श्लक्ष्णस्थिरपीतपर्यन्तानि शुक्लरक्तावभासानि शुक्लरोमराजीसन्तानानि बहुबहलशुक्लपिच्छिलस्रावीणि बहुक्लेदकण्डूक्रिमीणि सक्तगतिसमुत्थानभेदीनि परिमण्डलानि मण्डलकुष्ठानि विद्यात् (३);**

**स्निग्धानि** સ્નિગ્ધ स्निग्ध, **गुरूणि** ગુરુ गुरु, **उत्सेधवन्ति** ઊંચાઇવાળાં ऊंचे, **श्लक्ष्ण-** શ્લક્ષ્ણ श्लक्ष्ण, **स्थिर-** સ્થિર स्थिर, **पीतपर्यन्तानि** તથા પીળી કિનારવાળાં और पीले किनारोंवाले, **शुक्ल-** ધોળાં शुक्ल, **रक्त-** તથા રક્ત और लाल, **अवभासानि** દેખાવવાળાં दिखाववाले, **शुक्ल-** શ્વેત सफेद, **रोमराजी-** રોમરાજીના रोमराजियोंके, **सन्तानानि** વિસ્તારવાળાં विस्तारवाले, **बहु-** ઘણાં बहुत, **बहल-** ઘટ્ટ घट्ट, **शुक्ल-** શ્વેત शुक्ल, **पिच्छिल-** તથા ચીકણા तथा चिपचिपे, **स्रावीणि** સ્રાવવાળાં स्रावसे युक्त, **बहु-** ઘણાં बहुत, **क्लेद-** ક્લેદ क्लेद, **कण्डू-** કંડૂ कण्डू, **क्रिमीणि** તથા ક્રિમિવાળાં एवं कृमियुक्त, **सक्त-** અને ધીમે વખતે और देरमें, **गति-** ફેલાનાર फेलनेवाले, **समुत्थान-** ઉત્પન્ન થનાર उत्पन्न होनेवाले, **भेदीनि** અને ફાટનાર और फूटनेवाले, **परिमण्डलानि** તથા ગોળ કુષ્ઠો तथा मण्डलाकार कुष्ठ, **मण्डलकुष्ठानि** મંડલકુષ્ઠ છે मण्डल कुष्ठ हैं, **इति** એમ ऐसा, **विद्यात्** જાણવું जानना चाहिए (३);

8-(3). Those that are glossy, large, raised, smooth, stable and have swollen edges of whitish red shade covered with white rows of hair, are with excessive thick white discharge, very moist, itchy and affected with parasites, are sluggish in spreading, appearance and ulceration and which are round in shape are to be known as Mandala dermatoses (urticaria group).

ऋष्यजिह्वस्य लक्षणम्—

**परुषाण्यरुणवर्णानि बहिरन्तःश्यावानि नीलपीतताम्रावभासान्याशुगतिसमुत्थानान्यल्पकण्डूक्लेदक्रिमीणि दाहभेदनिस्तोद(पाक)बहुलानि शूकोपहतोपमवेदनान्युत्सन्नमध्यानि तनुपर्यन्तानि कर्कशपिडकाचितानि दीर्घपरिमण्डलान्यृष्यजिह्वाकृतीनि ऋष्यजिह्वानीति विद्यात् (४);**

**परुषाणि** કઠોર कठोर, **अरुणवर्णानि** અરુણવર્ણનાં अरुणवर्ण, **बहिः** બહાર बाहिर, **अन्तः** તથા અંદર एवं अंदर, **श्यावानि** ઈંટોડી રંગનાં श्याववर्ण, **नील-** નીલ नील, **पीत-** પીળાં पीत, **ताम्र-** તથા તાંબા જેવા तथा ताम्र जैसे, **अवभासानि** દેખાવવાળાં दिखाववाले, **आशु-** જલદી शीघ्र, **गति-** ફેલાનાર फैलनेवाले, **समुत्थानानि** ઉત્પન્ન થનાર उत्पन्न होनेवाले, **अल्प-** અલ્પ अल्प, **कण्डू-** ખજવાળ कण्डू, **क्लेद-** ક્લેદ क्लेद, **क्रिमीणि-** તથા કૃમિવાળાં तथा कृमिवाले, **दाह-** દાહ दाह, **भेद-** ભેદ भेद, **निस्तोद-** નિસ્તોદ तोद, **पाक-** તથા પાક तथा पाक, **बहुलानि** જેમાં વધારે છે એવાં बहुल, **शूक- उपहत- उपम- वेदनानि** શૂકજન્ય क्षत જેવી

८-(३). पीतपर्यन्तानि—पीनपर्यन्तानि (घ. झ. ठ. त. द. ध.)
,, शुक्लरोमराजी—शुक्लराजी (च.)
,, बहुबहल—बहुलबहुल (ख. त.)
,, शुक्लपिच्छिलस्रावीणि—शुक्लरक्तपिच्छास्रावीणि (च. ध.)
,, मण्डलकुष्ठानि विद्यात्—परिमण्डलकुष्ठानीति विद्यात् (ज. ठ).

८-(४). ताम्रावभासानि—ताम्रावभासितानि (ग.)

वेदनावाळां शूकजन्य क्षतकी भांति वेदनायुक्त, उत्सन्नमध्यानि ઊંચા મધ્યભાગવાળાં बीचमें उन्नत, तनुपर्यन्तानि પાતળી કિનારવાળાં किनारोंसे पतले, कर्कश- કર્કશ कर्कश, पिडकाचितानि પિડકાઓવાળાં पिडकाओंसे भरे, दीर्घ- દીર્ઘ लम्बे, परिमण्डलानि ગોળ આકારનાં गोल, ऋष्यजिह्व- અને ઋષ્ય હરિણની જીભ જેવા और ऋष्यजिह्वाके समान, आकृतीनि આકારનાં કુષ્ઠો आकृतिवाले कुष्ठ, ऋष्यजिह्वानि ઋષ્યજિહ્વ છે ऋष्यजिह्व हैं, इति એમ ऐसा, विद्यात् જાણવું जानना चाहिए (४);

8-(4). Those that are rough, reddish -colored, dark brown at the edges and in the centre, have shades of blue, yellow and copper-color, that are quick in spreading and appearance, attended with slight itching, moisture, parasitic infection, much burning, ulceration, pricking pain, (suppuration), pain as if pierced by thorns and are raised in the middle with thin edges, and are surrounded with rough pimples of oval shape like that of the deer's tongue, are known as Rishyajihva dermatoses.

पुण्डरीककुष्ठस्य लक्षणम्—

**शुक्लरक्तावभासानि रक्तपर्यन्तानि रक्तराजीसिरासन्ततान्युत्सेधवन्ति बहुबहलरक्तपूयलसीकानि कण्डूक्रिमिदाहपाकवन्त्याशुगतिसमुत्थानभेदीनि पुण्डरीकपलाशसंकाशानि पुण्डरीकाणीति विद्यात् (५);**

शुक्ल- શ્વેત शुक्ल, रक्त- અને રક્ત और लाल, अवभासानि દેખાવનાં दिखाववाले, रक्तपर्यन्तानि લાલ કિનારવાળાં किनारों पर लाल, रक्त- લાલ लाल, राजी- રેખાઓ रेखाओं, सिरा- અને સિરાઓથી और सिराओंसे, सन्ततानि વ્યાપ્ત व्याप्त, उत्सेधवन्ति ઊંચાઈવાળાં ऊपरको उठे, बहु- ઘણાં बहुत, बहल- ઘાટાં घट्ट, रक्त- રક્ત रक्त, पूय- પરુ पूय, लसीकानि તથા લસીકાવાળાં तथा लसीकासे युक्त, कण्डू- ખજવાળ कण्डू, क्रिमि- કૃમિ कृमि, दाह- દાહ दाह, पाकवन्ति તથા પાકવાળાં और पाकसे युक्त, आशु- જલદી शीघ्र, गति- ફેલાનાર फैलनेवाले, समुत्थान- ઉત્પન્ન થનાર उत्पत्तिवाले, भेदीनि તથા ફાટનાર एवं विदीर्ण होनेवाले, पुण्डरीक- અને પુંડરીકની और पुण्डरीककी, पलाश- પાંખડી पंखडीके, संकाशानि જેવાં કુષ્ઠો समान कुष्ठ, पुण्डरीकाणि પુંડરીક કુષ્ઠ છે पुण्डरीक कुष्ठ हैं, इति એમ ऐसा, विद्यात् જાણવું जानना चाहिए (५);

8-(5). Those that are of white and reddish shades, of red edges, are covered with red row of hair and veins, are elevated, have profuse and dense, sanguinous, purulent and serus discharge, are attended with itching parasitic infection, burning and suppuration and which are quickly spreading, appearing and ulcerating and of the color of the petal of the pink lotus (padma palasa) are to be known as Pundarika dermatoses.

सिध्मकुष्ठस्य लक्षणम्—

**परुषारुणानि विशीर्णबहिस्तनून्यन्तःस्निग्धानि शुक्लरक्तावभासानि बहून्यल्पवेदनान्यल्पकण्डूदाहपूयलसीकानि लघुसमुत्थानान्यल्पभेदक्रिमीण्यलाबुपुष्पसङ्काशानि सिध्मकुष्ठानीति विद्यात्(६);**

परुष- કઠોર परुष, अरुणानि અરુણ अरुण, विशीर्णबहिस्तनूनि વિખરાયેલા બહારના ભાગવાળાં बिखरे हुए बाहिरके भागवाले, अन्तःस्निग्धानि અંદરના ભાગમાં સ્નિગ્ધ अन्दरसे स्निग्ध, शुक्ल- શ્વેત श्वेत, रक्त- તથા લાલ तथा लाल, अवभासानि દેખાવનાં दिखाववाले, बहूनि ઘણાં बहुत, अल्प- અલ્પ अल्प, वेदनानि

८-(५). रक्तराजीसिरासन्ततानि—रक्तराजीसन्ततानि (ठ)

८-(६). परुषारुणानि विशीर्णबहिस्तनूनि—परुषारुणविशीर्णानि बहिस्तनूनि (ख. घ. च. ब.)

वेदनावाळां वेदनावाले, **अल्प-** અલ્પ अल्प, **कण्डू-** ખજવાળ कण्डू, **दाह-** દાહ दाह, **पूय-** પરુ पूय, **लसी-कानि** तथा લસીકાવાળા एवं लसीकासे युक्त, **लघु-समुत्थानानि** નાના કારણથી ઉત્પન્ન થનાર छोटेसे कारणसे उत्पन्न होनेवाले, **अल्प-** ઓછા कम, **भेद-** ફાટવાવાળાં फटनेवाले, **क्रिमीणि** तथा કૃમિવાળાં एवं कृमिसे युक्त, **अलाबु-पुष्पसंकाशानि** અને અલાબુનાં ફૂલ જેવાં કુષ્ઠો अलाबु-पुष्पके समान कुष्ठ, **सिध्मकुष्ठानि** સિધ્મકુષ્ઠ છે सिध्मकुष्ठ हैं, **इति** એમ ऐसा, **विद्यात्** જાણવું जानना चाहिए (६);

8-(6). Those that are rough and reddish, those whose external margins are fissured and glossy at the centre, having red and white shades, which are multiple, and attended with slight pain, itching and burning, and purulent and serus discharge, those that have small beginning and slight tendency to ulceration or parasitic infection, and are of yellow color like the bitter gourd flower are to be known as Sidhma dermatoses (Psoriasis group).

काकणककुष्ठस्य लक्षणम्—

**काकणन्तिकावर्णान्यादौ पश्चात्तु सर्वकुष्ठलिङ्ग-समन्वितानि पापीयसा सर्वकुष्ठलिङ्गसंभवेनानेकव-र्णानि काकणानीति विद्यात्। तान्यसाध्यानि, साध्यानि पुनरितराणि ॥ ८ ॥**

**आदौ** પ્રથમ प्रारम्भमें, **काकणन्तिका-** ચણોઠીના रत्तीके, **वर्णानि** વર્ણના वर्णके, **पश्चात्** અને પછી और पीछेसे, **तु** તો तो, **सर्व-** સર્વ सम्पूर्ण, **कुष्ठ-** કુષ્ઠનાં कुष्ठोंके, **लिङ्ग-** લક્ષણથી लक्षणोंसे, **समन्वितानि** યુક્ત युक्त, **पापीयसा** અને દુષ્ટ और दुष्ट, **सर्व-** સર્વ सम्पूर्ण, **कुष्ठ-** કુષ્ઠનાં कुष्ठके, **लिङ्ग-** લક્ષણ लक्षण, **सम्भवेन** ઉત્પન્ન થવાથી उत्पन्न होनेसे, **अनेकवर्णानि** અનેક વર્ણ-વાળાં કુષ્ઠો अनेक वर्णवाले कुष्ठ, **काकणानि** કાકણક-કુષ્ઠ છે काकणककुष्ठ हैं, **इति** એમ ऐसा, **विद्यात्** જાણવું जानना चाहिए, **तानि** તેઓ वे, **असाध्यानि** અસાધ્ય છે असाध्य हैं, **इतराणि** અને બીજાં और शेष, **पुनः** વળી तो, **साध्यानि** સાધ્ય છે साध्य हैं ॥ ८ ॥

8. Those that are of the color of the grain of Kakanantika (Jequirity seeds) in the beginning, and later, acquiring the sinful characteristics of all the above kinds of dermatoses, acquire the various colors of the varied kinds of dermatoses are to be known as Kakana dermatoses (Malignant lesions). These are incurable while all the rest are curable.

तेषां साध्यासाध्यत्वम्—

**तत्र यदसाध्यं तदसाध्यतां नातिवर्तते, साध्यं पुनः किंचित् साध्यतामतिवर्तते कदाचिदपचारात्। साध्यानि हि षट् काकणकवर्ज्यान्यचिकित्स्यमाना-न्यपचारतो वा दोषैरभिष्यन्दमानान्यसाध्यतामु-पयान्ति ॥ ९ ॥**

**तत्र** તેમાં इनमें, **यत्** જે जो, **असाध्यम्** અસાધ્ય છે असाध्य है, **तत्** તે वह, **असाध्यताम्** અસાધ્યતાને असाध्यताका, **न अतिवर्तते** ઉલ્લંઘી જતું નથી अति-क्रमण नहीं करता, **किञ्चित्** કોઈ कोई, **साध्यम्** સાધ્ય साध्य, **पुनः** પણ भी, **कदाचित्** ક્યારેક कभी, **अपचा-रात्** અપચારને લઈ अपचारके कारण, **साध्यताम्** સાધ્ય-તાને साध्यताका, **अतिवर्तते** ઉલ્લંઘી જાય છે अतिक्रमण कर जाता है, **हि** કારણકે क्योंकि, **काकणक-वर्ज्यानि** કાકણક સિવાયનાં काकणकको छोड़कर, **षट्** ૭ छः, **साध्यानि** સાધ્ય છે साध्य हैं, **अचिकित्स्यमानानि** ચિકિ-ત્સા ન કરવામાં આવે તો चिकित्सा न करनेसे, **अप-चारतः वा** અથવા અપચારથી अथवा अपचारसे, **दोषैः** દોષોથી दोषोंसे, **अभिष्यन्दमानानि** ભરાઈ જતાં परिपूर्ण होनेके कारण, **असाध्यताम्** અસાધ્યતાને असाध्यताको, **उपयान्ति** પામે છે प्राप्त होते हैं ॥ ९ ॥

८. पापीयसा सर्वकुष्ठसम्भवेन–पापीयसां सर्वकुष्ठलिङ्गस-म्भवत्वेन (क. च. छ. ध.)

9. Of them the incurable ones can never change their nature of incurability. But those that are curable, pass beyond the stage of curability owing to faulty regimen. The curables are the six varieties leaving aside the Kakanaka variety. Either due to neglect of treatment or due to faulty regimen, being saturated with morbidity, they become incurable.

साध्यकुष्ठेष्वप्युपेक्ष्यमाणेषु कृमिसंभवः—

**साध्यानामपि ह्युपेक्ष्यमाणानां त्वङ्मांसशोणितलसीकाकोथक्लेदसंस्वेदजाः क्रिमयोऽभिमूर्च्छन्ति; ते भक्षयन्तस्त्वगादीन् दोषाः पुनर्दूषयन्त इमानुपद्रवान् पृथक् पृथगुत्पादयन्ति—**

**साध्यानाम्** સાધ્ય કુષ્ઠોની साध्य कुष्ठोंकी, **अपि हि** પણ भी, **उपेक्ष्यमाणानाम्** ઉપેક્ષા કરવામાં આવે તો उपेक्षा करनेसे, **त्वक्-** ત્વચા त्वचा, **मांस-** માંસ मांस, **शोणित-** રક્ત रक्त, **लसीका-** તથા લસીકાના तथा लसीकाके, **कोथ-** સડાથી कोथसे, **क्लेद-** ક્લેદથી क्लेदसे, **संस्वेदजाः** અને પરસેવાથી ઉત્પન્ન થયેલા एवं पसीनेसे उत्पन्न, **क्रिमयः** કૃમિઓ कृमि, **अभिमूर्च्छन्ति** ઉત્પન્ન થાય છે उत्पन्न होजाते हैं, **ते** તેઓ वे, **त्वक्-आदीन्** ત્વચા વગેરેને त्वचा आदिको, **भक्षयन्तः** ખાતાં भक्षण करते हुए, **दोषाः पुनः** અને દોષો વળી और दोष फिर, **दूषयन्तः** એઓને દૂષિત કરતાં इनको दूषित करते हुए, **पृथक्** જુદા पृथक्, **पृथक्** જુદા पृथक्, **इमान्** આ इन, **उपद्रवान्** ઉપદ્રવોને उपद्रवोंको, **उत्पादयन्ति** ઉત્પન્ન કરે છે उत्पन्न करते हैं;

10-(1). Owing to neglect of even the curable condition of dermatoses, parasites born of the skin, flesh and blood, lymph, slough, softened tissue and sweat grow strong. They eat away the skin and other elements, and further vitiating the already morbidised humors, generate the following complications corresponding to individual humors.

**तत्र वातः श्यावारुणवर्णं परुषतामपि च रौक्ष्यशूलशोषतोदवेपथुहर्षसङ्कोचायासस्तम्भसुप्तिभेदभङ्गान्, पित्तं दाहस्वेदक्लेदकोथस्रावपाकरागान्, श्लेष्मा त्वस्य श्वैत्यशैत्यकण्डूस्थैर्यगौरवोत्सेधोपस्नेहोपलेपान्, क्रिमयस्तु त्वगादींश्चतुरः सिराः स्नायूश्चास्थीन्यपि च तरुणान्याददते ॥ १० ॥**

**तत्र** તેઓમાં इनमें, **वातः** વાત वायु, **श्याव-** ઘેરાડી શ્યાવ, **अरुण-** તેમજ અરુણ एवं अरुण, **वर्णम्** વર્ણ वर्ण, **परुषताम्** કઠોરતા परुषता, **रौक्ष्य-** રૂક્ષતા रूक्षता, **शूल-** શૂલ शूल, **शोष-** શોષ शोष, **तोद-** તોદ तोद, **वेपथु-** કંપ कम्प, **हर्ष-** રોમાંચ रोमांच, **संकोच-** સંકોચ संकोच, **आयास-** આયાસ आयास, **स्तम्भ-** જડતા स्तम्भ, **सुप्ति-** સ્પર્શાજ્ઞાન सुप्ति, **भेद-** ફાટ भेद, **भङ्गान् च अपि** અને ભંગને और भङ्गको, **पित्तम्** પિત્ત पित्त, **दाह-** દાહ दाह, **स्वेद-** સ્વેદ स्वेद, **क्लेद-** ક્લેદ क्लेद, **कोथ-** સડા कोथ, **स्राव-** સ્રાવ स्राव, **पाक-** પાક पाक, **रागान्** અને રંગને और लालिमाको, **श्लेष्मा** તથા કફ तथा कफ, **तु** તો तो, **अस्य** આ કુષ્ઠમાં इस कुष्ठमें, **श्वैत्य-** શ્વેતતા श्वेतिमा, **शैत्य-** શીતતા शैत्य, **कण्डू-** ખજવાળ कण्डू, **स्थैर्य-** સ્થિરતા स्थिरता, **गौरव-** ભારેપણું गौरव, **उत्सेध-** ઊંચાઈ उंचाई, **उपस्नेह-** ઉપસ્નેહ उपस्नेह, **उपलेपान्** અને ઉપલેપને ઉત્પન્ન કરે છે और उपलेपको उत्पन्न करता है, **क्रिमयः** અને કૃમિઓ और कृमि, **तु** તો तो, **त्वक् आदीन्** ત્વચા આદિ त्वचा आदि, **चतुरः** ચાર ધાતુઓ चार धातुएं, **सिराः** સિરાઓ सिरा, **स्नायूः च** સ્નાયુ स्नायु, **तरुणानि** અને કોમળ और कोमल, **अस्थीनि च अपि** હાડકાંઓને પણ अस्थियोंको भी, **आददते** ખાઈ જાય છે भक्षण कर लेते हैं ॥ १० ॥

१०. उपेक्ष्यमाणानाम्–उपेक्ष्यमाणानामेषाम् (ख. छ. ज. त.)
,, दोषाः–दोषान् (छ. ध.)

१०. °शूलशोषतोदवेपथु–°शूलतोदव्यध (ख.)
,, स्नायूश्चास्थीनि–स्नायूर्मांसान्यस्थीनि (ध.)
,, तरुणान्याददते–तरुणानि खादन्ति (ध. च. छ. झ. द. ध.)

10-(2). The vata causes dusky-red color, roughness, dryness, pain, dehydration, pricking sensation, tremor, bristles, contraction, fatigue, rigidity, numbness, ulceration and fissures. The pitta causes burning, sweat, softening, putrefaction, discharge, suppuration and redness. The kapha causes whiteness, coldness, itching, stability, thickness, elevation, increase of secretion and excretion, and parasites which eat away the skin, flesh, blood, lymph, vessels, tendons and cartilage.

क्रमिकर्तृककुष्ठोपद्रवाः —

**अस्यां चैवावस्थायामुपद्रवाः कुष्ठिनं स्पृशन्ति; तद्यथा—प्रस्रवणमङ्गभेदः पतनान्यङ्गावयवानां तृष्णाज्वरातीसारदाहदौर्बल्यारोचकाविपाकाश्च, तथाविधमसाध्यं विद्यादिति ॥ ११ ॥**

**अस्याम्** આ इस, **एव** જ ही, **अवस्थायाम् च** અવસ્થામાં अवस्थामें, **उपद्रवाः** ઉપદ્રવો उपद्रव, **कुष्ठिनम्** કુષ્ઠરોગીને कुष्ठरोगीको, **स्पृशन्ति** સ્પર્શ કરે છે स्पर्श कर लेते हैं, **तत् यथा** જેમકે जैसे कि, **प्रस्रवणम्** સ્રાવ स्राव, **अङ्गभेदः** અંગભેદ अंगोका टूटना, **अङ्ग-** શરીરના अङ्गके, **अवयवानाम्** અવયવોનું अवयवोंका, **पतनानि** ખરી પડવું गिरना, **तृष्णा-** તૃષા प्यास, **ज्वर-** જ્વર ज्वर, **अतीसार-** અતીસાર अतीसार, **दाह-** દાહ दाह, **दौर्बल्य-** દુર્બળતા दुर्बलता, **अरोचक-** અરુચિ अरोचक, **अविपाकाः च** અને અવિપાક और अविपाक, **तथाविधम्** એવી જાતના કુષ્ઠને इस प्रकारके कुष्ठको, **असाध्यम्** અસાધ્ય असाध्य, **विद्यात्** જાણવો जानना चाहिए ॥ ११ ॥

11. It is in this condition that complications afflict the patient; such as—excessive discharge, ulceration of the part, sequestration of the body-parts, thirst, fever, diarrhea, burning, debility, anorexia and misdigestion. Such a condition is to be regarded incurable.

प्रारम्भ एव रोगोऽनुपेक्ष्यः—

**भवन्ति चात्र—**
**साध्योऽयमिति यः पूर्वं नरो रोगमुपेक्षते।**
**स किंचित्कालमासाद्य मृत एवावबुध्यते ॥ १२ ॥**

**अत्र च भवन्ति** આ વિષયમાં શ્લોકો છે કે इस विषयमें श्लोक हैं कि, **यः** જે जो, **नरः** માણસ मनुष्य, **अयम्** આ यह, **साध्यः** સાધ્ય છે साध्य है, **इति** એમ ऐसा, **पूर्वम्** પહેલાં पहले, **रोगम्** રોગની रोगकी, **उपेक्षते** ઉપેક્ષા કરે છે उपेक्षा करता है, **सः** તે वह, **किञ्चित्** થોડોક थोडे, **कालम्** વખત कालको, **आसाद्य** રહીને रह कर, **मृतः एव** મરી જ ગયો છે એમ मरा ही, **अवबुध्यते** જાણવામાં આવે છે जाना जाता है ॥ १२ ॥

12. The patient that thinks "it is easily curable" and neglects the disease in its early stages, will be found after a while to be as good as dead.

रोगाणां तरुणावस्थायां सुखसाध्यत्वम्—

**यस्तु प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा ।**
**भेषजं कुरुते सम्यक् स चिरं सुखमश्नुते ॥ १३ ॥**

**यः** જે जो, **तु** વળી फिर, **रोगेभ्यः** રોગથી रोगसे, **प्राक्** પહેલાં पहले, **एव** જ ही, **रोगेषु तरुणेषु वा** અથવા રોગોની નવીન અવસ્થામાં જ अथवा रोगोंकी नवीनावस्थामें ही, **सम्यक्** સારી રીતે अच्छी तरहसे, **भेषजम्** ઓસડ औषध, **कुरुते** કરે છે करता है, **सः** તે वह, **चिरम्** લાંબા વખત સુધી देर तक, **सुखम्** આરોગ્ય सुख, **अश्नुते** ભોગવે છે भोगता है ॥ १३ ॥

13. But he who treats well the disease from the very beginning or

११. तथाविधम्—तद्विधम् (घ. ज.)

१२. अवबुध्यते—अभिबुध्यते (ग.)

in its early stage attains happiness for long.

रोगाणामतिप्रवृद्धानामसाध्यतागमनम्—

**यथा ह्यल्पेन यत्नेन छिद्यते तरुणस्तरुः ।**
**स एवातिप्रवृद्धस्तु छिद्यतेऽतिप्रयत्नतः ॥ १४ ॥**

**एवमेव विकारोऽपि तरुणः साध्यते सुखम् ।**
**विवृद्धः साध्यते कृच्छ्रादसाध्यो वाऽपि जायते ॥ १५ ॥**

**यथा हि** જેવી રીતે जिस प्रकार, **तरुणः** નાનું छोटा, **तरुः** ઝાડ वृक्ष, **अल्पेन** અલ્પ थोड़ेसे, **यत्नेन** યત્નથી परिश्रमसे, **छिद्यते** કાપી શકાય છે काटा जाता है, **अतिप्रवृद्धः** અતિ વધ્યા પછી बड़ा हुआ, **तु** વળી फिर, **सः एव** તે જ वही, **अतिप्रयत्नतः** અતિ પ્રયત્ને अति प्रयत्नसे, **छिद्यते** કાપી શકાય છે काटा जाता है, **एवम् एव** તેવી જ રીતે इसी प्रकार, **तरुणः** નવો नया, **विकारः** વિકાર रोग, **अपि** પણ भी, **सुखम्** સુખેથી सुखपूर्वक, **साध्यते** મટાડી શકાય છે साध्य होता है, **विवृद्धः** વધી ગયા પછી बढ़ा हुआ, **कृच्छ्रात्** મુશ્કેલીથી कठिनाईसे, **साध्यते** મટાડી શકાય છે साध्य होता है, **असाध्यः वा** અથવા અસાધ્ય अथवा असाध्य, **अपि** પણ भी, **जायते** થઈ જાય છે हो जाता है ॥ १४-१५ ॥

14-15. Just as a plant when tender is easily cut down but demands great efforts in cutting when grown big, even so a disease when in its early stage is easily cured, but when advanced is cured with great difficulty or even becomes incurable.

अध्यायोक्तार्थसंग्रहः—

**तत्र श्लोकः—**

**संख्या द्रव्याणि दोषाश्च हेतवः पूर्वलक्षणम् ।**
**रूपाण्युपद्रवाश्चोक्ताः कुष्ठानां कौष्ठिके पृथक् ॥ १६ ॥**

**तत्र** તે વિષયમાં उस विषयमें, **श्लोकः** શ્લોક છે કે श्लोक है कि, **कुष्ठानाम्** કુષ્ઠના कुष्ठके, **संख्या** સંખ્યા संख्या, **द्रव्याणि** દ્રવ્ય द्रव्य, **दोषाः** દોષ दोष, **हेतवः** નિદાન निदान, **पूर्वलक्षणम्** પૂર્વરૂપ पूर्वरूप, **रूपाणि च** લક્ષણ लक्षण, **उपद्रवाः च** અને ઉપદ્રવ और उपद्रव, **पृथक्** જુદા જુદા पृथक् रूपमें, **कौष्ठिके** આ 'કુષ્ઠનિદાન' અધ્યાયમાં इस 'कुष्ठनिदान' अध्यायमें, **उक्ताः** કહેવામાં આવ્યાં છે कहे हैं ॥ १६ ॥

Here is the recapitulatory verse—

16. The number, substances, morbific humors, causative factors, premonitory symptoms, signs and symptoms and complications of dermatosis have been described severally in this chapter on "Dermatosis".

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने कुष्ठनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥**

**इति** આ પ્રમાણે इस प्रकार, **अग्निवेशकृते** અગ્નિવેશે રચેલા अग्निवेशसे बनाये, **चरकप्रतिसंस्कृते तन्त्रे** અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा प्रतिसंस्कृत इस शास्त्रके, **निदानस्थाने** નિદાનસ્થાન વિષે निदानस्थानमें, **कुष्ठनिदानम्** 'કુષ્ઠનિદાન' 'कुष्ठनिदान', **नाम** નામનો नामका, **पञ्चमः** પાંચમો पांचवाँ, **अध्यायः** અધ્યાય સંપૂર્ણ થયો. अध्याय समाप्त हुआ ॥ ५ ॥

5. Thus in the section on Pathology, in the treatise compiled by Agnivesa and revised by Caraka, the fifth chapter entitled, "The Pathology of the Dermatosis" is completed.

## षष्ठोऽध्यायः ।

## છઠ્ઠો અધ્યાય अध्याय छठा

## Chapter VI

शोषनिदानाध्यायोपक्रमः—

**अथातः शोषनिदानं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

१४. छिद्यतेऽतिप्रयत्नतः — न तु छेद्यतमो भवेत् (अ. ध.)

अथ अतः હવે અહીંથી अब आगे, शोषनिदानम् 'શોષનિદાન' નામના અધ્યાયનું 'शोषनिदान' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the chapter on "The Pathology of Consumption."

2. Thus declared the worshipful Atreya.

चत्वारि शोषस्यायतनानि—

**इह खलु चत्वारि शोषस्यायतनानि भवन्ति; तद्यथा—साहसं संधारणं क्षयो विषमाशनमिति ३**

इह खलु આ આયુર્વેદમાં इस आयुर्वेदमें, शोषस्य શોષનાં शोषके, चत्वारि ચાર चार, आयतनानि કારણ कारण, भवन्ति છે हैं, तत् यथा જેમકે जैसे कि, साहसम् સાહસ साहस, संधारणम् સંધારણ संधारण, क्षयः क्षय क्षय, विषमाशनम् इति અને વિષમ ભોજન और विषमाशन ॥ ३ ॥

3. There are four causes of consumption. They are— Overstrain, suppression of natural urges, wasting and promiscuous diet.

साहसाद्यथा शोषः संभवति तद्वर्णनम्—

**तत्र साहसं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः—यदा पुरुषो दुर्बलो हि सन् बलवता सह विगृह्णाति, अतिमहता वा धनुषा व्यायच्छति, जल्पति वाऽप्यतिमात्रम्, अतिमात्रं वा भारमुद्वहति, अप्सु वा प्लवते चातिदूरम्, उत्सादनपदाघातने वाऽतिप्रगाढमासेवते अतिप्रकृष्टं वाऽध्वानं द्रुतमभिपतति, अभिहन्यते वा, अन्यद्वा किंचिदेवंविधं विषममतिमात्रं वा व्यायामजातमारभते, तस्यातिमात्रेण कर्मणोरः क्षण्यते। तस्योरः क्षतमुपप्लवते वायुः। स तत्रावस्थितः श्लेष्माणमुरःस्थमुपसंगृह्य पित्तं च दूषयन् विहरत्यूर्ध्वमधस्तिर्यक् च। तस्य योंऽशः शरीरसन्धीनाविशति तेनास्य जृम्भाऽङ्गमर्दो ज्वरश्चोपजायते यस्त्वामाशयमभ्युपैति तेन रोगा भवन्ति उरस्या अरोचकश्च, यः कण्ठमभिप्रपद्यते कण्ठस्तेनोद्ध्वंसते स्वरश्चावसीदति, यः प्राणवहानि स्रोतांस्यन्वेति तेन श्वासः प्रतिश्यायश्च जायते, यः शिरस्यवतिष्ठते शिरस्तेनोपहन्यते; ततः क्षणनाच्चैवोरसो विषमगतित्वाच्च वायोः कण्ठस्य चोद्ध्वंसनात् कासः सततमस्य संजायते, स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति, शोणितागमनाच्चास्य दौर्बल्यमुपजायते;**

तत्र તેમાં इनमें, साहसम् સાહસ साहस, शोषस्य શોષનું शोषका, आयतनम् इति કારણ છે એમ कारण है यह, यत् उक्तम् જે કહ્યું છે जो कहा है, तत् તેનું उसका, अनुव्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान

४. व्यायच्छति–व्यायच्छते (ग.)
,, अतिप्रकृष्टं–अतिविप्रकृष्टं (छ.)

४. आरभते–आरभेत (घ.)
,, श्लेष्माणमुरःस्थमुपसंगृह्य–श्लेष्माणमुपसंगृह्य (ठ.)
,, उपसंगृह्य पित्तं च दूषयन् विहरति–उपसृज्य शोषयित्वा विहरति (प.)
,, उपसंगृह्य–उपसंसृज्य (ग.)
,, उपसंगृह्य पित्तं च दूषयन्–उपसंसृज्य शोषयन् (घ.ठ.त.द.ध.)
,, तेनास्य जृम्भाऽङ्गमर्दो ज्वरश्चोपजायते, यस्त्वामाशयमभ्युपैति तेन रोगा भवन्ति उरस्या अरोचकश्च. – तेनास्य वर्चो भिद्यते, यस्तु हृदयमाविशति, तेन रोगा भवन्त्युरस्याः यो रसान् तेनास्यारोचकश्च. (घ. च. ज. त. द. प.)
,, जृम्भा–जम्भा (क.)
,, अभिप्रपद्यते–प्रपद्यते (घ.)
,, स्रोतांस्यन्वेति–स्रोतांस्यवबध्नाति (प.)
,, शोणितं ष्ठीवति–स शोणितं निष्ठीवति (च.)
,, शोणितागमनाच्चास्य दौर्बल्यमुपजायते–शोणितगमनाच्चास्य दौर्गन्ध्यमुपजायते (ठ. त.)
,, दौर्बल्यम्–दौर्गन्ध्यम् (ख. ग. झ. प.)

**करेंगे, यदा हि** જ્યારે जब, **पुरुषः** પુરુષ पुरुष, **दुर्बलः सन्** દુર્બળ હોવા છતાં दुर्बल होनेपर भी, **बलवता सह** બળવાનની સાથે बलवान पुरुषके साथ, **विगृह्णाति** લડે છે लड़ता है, **अतिमहता** અથવા અતિ મોટા अथवा बड़े, **धनुषा वा** ધનુષને धनुषको, **व्यायच्छति** ખેંચે છે खींचता है, **अतिमात्रम् अपि वा** અથવા તો અતિ પ્રમાણમાં अथवा बहुत अधिक, **जल्पति** બોલે છે बोलता है, **अतिमात्रम् भारम् वा** અથવા તો હદ ઉપરાંત ભારને अथवा बहुत अधिक भारको, **उद्वहति** ઉપાડે છે वहन करता है, **अप्सु च** અથવા પાણીમાં अथवा पानीमें, **अतिदूरम् वा** ઘણે લાંબે સુધી बहुत दूर तक, **प्लवते** તરે છે तैरता है, **उत्सादन-पदाघातने वा** અથવા ઉત્સાદન તેમજ ચરણના આઘાતનું अथवा उत्सादन एवं पादके आघातको, **अतिप्रगाढम्** અતિશય अत्यधिक, **आसेवते** સેવન કરે છે सेवन करता है, **अतिप्रकृष्टम्** અથવા ઘણા લાંબા अथवा बहुत लम्बे, **अध्वानम् वा** માર્ગને मार्गको, **द्रुतम् अभिपतति** ઉતાવળે દોડી કાપે છે जल्दीसे दौड़ते हुए तय करता है, **अभिहन्यते वा** અથવા પ્રહાર પામે છે अथवा चोट खाजाता है, **अन्यत् वा किंचित्** અથવા બીજા કોઈ अथवा और कोई, **एवंविधम्** એવી જાતના इसी प्रकारके, **विषमम्** વિષમ विषम, **अतिमात्रम् वा** અથવા હદ ઉપરાંતના या मात्रामें अधिक, **व्यायामजातम्** અનેક વ્યાયામ अनेक व्यायाम, **आरभते** કરે છે करता है, **तस्य** તેનું उसका, **उरः** ઉર उरःस्थल, **अतिमात्रेण** હદ ઉપરાંતના अतिमात्र, **कर्मणा** કર્મથી कर्मसे, **क्षण्यते** વિદીર્ણ થાય છે फट जाता है, **तस्य** તેના उसके, **क्षतम् उरः** વિદીર્ણ ઉરને विदीर्ण वक्षःस्थलमें, **वायुः** વાયુ वायु, **उपप्लवते** વ્યાપ્ત કરે છે भर जाता है, **तत्र** ત્યાં वहां, **अवस्थितः** રહેલો भरा हुआ, **सः** તે वह वायु, **उरःस्थम्** છાતીમાં રહેલા उरमें स्थित, **श्लेष्माणम्** કફને कफको, **उपसंगृह्य** લઈને साथमें ले कर, **पित्तम् च** તથા પિત્તને तथा पित्तको, **दूषयन्** દૂષિત કરીને दूषित करता हुआ, **ऊर्ध्वम्** ઊંચે ऊपर, **अधः** નીચે नीचे, **तिर्यक् च** અને ત્રાંસો तथा तीरछा, **विहरति** ફરવા લાગે છે फैलने लगता है, **तस्य** તેનો उसका, **यः अंशः** જે અંશ जो भाग, **शरीर-सन्धीन्** શરીરના સાંધાઓમાં शरीरकी सन्धियोंमें, **आविशति** પેસે છે जाता है, **तेन** તેનાથી उससे, **अस्य** એને इसको, **जृम्भा** બગાસાં जम्भाई, **अङ्गमर्दः** અંગમર્દ अङ्गोंका टूटना, **ज्वरः च** અને જ્વર और ज्वर, **उपजायते** થાય છે होता है, **यः तु** જે ભાગ जो भाग, **आमाशयम्** આમાશયમાં आमाशयमें, **अभ्युपैति** પહોંચે છે पहुंचता है, **तेन** તેનાથી उससे, **उरस्याः** છાતીના छातीके, **रोगाः** રોગો रोग, **अरोचकः च** અને અરુચિ तथा अरोचक, **भवन्ति** થાય છે होते हैं, **यः** જે ભાગ जो भाग, **कण्ठम्** કંઠમાં कण्ठमें, **अभिप्रपद्यते** પહોંચે છે जाता है, **तेन** તેનાથી उससे, **कण्ठः** કંઠની कण्ठ, **उद्ध्वसते** ખરાબી થાય છે विकृत हो जाता है, **स्वरः च** અને સાદ और स्वर, **अवसीदति** બેસી જાય છે बैठ जाता है, **यः** જે ભાગ जो भाग, **प्राणवहानि** પ્રાણ વહન કરનાર प्राणवह, **स्रोतांसि** સ્રોતોમાં स्रोतोंमें, **अन्वेति** જાય છે पहुंचता है, **तेन** તેનાથી उससे, **श्वासः** શ્વાસ श्वास, **प्रतिश्यायः च** અને સળેખમ और प्रतिश्याय, **जायते** થાય છે हो जाता है, **यः** અને જે ભાગ और जो भाग, **शिरसि** માથામાં शिरमें, **अवतिष्ठते** રહે છે जा ठहरता है, **तेन** તેનાથી उससे, **शिरः** માથાને शिर, **उपहन्यते** નુકસાન થાય છે बिगड़ जाता है, **ततः च** ત્યાર પછી उसके बाद, **उरसः** ઉરની उरके, **क्षणनात् च एव** વિદીર્ણતાને લીધે विदीर्ण होनेसे, **वायोः** વાયુની और वायुकी, **विषमगतित्वात् च** વિષમ ગતિને લીધે विषम गति होनेसे, **कण्ठस्य** તથા કંઠની तथा कण्ठके, **उद्ध्वसनात् च** ખરાબીને લીધે विकृत हो जानेसे, **अस्य** તેને इसे, **कासः** ઉધરસ खांसी, **सततम्** નિરંતર હમેશાં, **संजायते** થાય છે आने लगती है, **सः** તે वह, **कासप्रसंगात्** ઉધરસ સતત આવવાથી सतत कासके कारण, **उरसि** છાતીમાં छातीमें, **क्षते** ક્ષત થતાં क्षत हो जानेसे, **शोणितम्** લોહીને रक्त, **ष्ठीवति** થૂંક્યા કરે છે थूकता है, **शोणित-आगमनात् च** અને લોહી પડવાથી और रक्तके आनेसे, **अस्य** આ પુરુષને इसको, **दौर्बल्यम्** દુર્બલતા दुर्बलता, **उपजायते** આવે છે आ जाती है;

4-(1). We shall now further explain our observation that overstrain is the cause of consumption. When a man

who is weak, engages in a trial of strength with a strong man, or exercises with a mighty bow, or talks excessively or carries very heavy weights, or swims very long distances in water or resorts excessively to hard massage or striking with feet, or running over a very long course at full speed, or gets injured or carries out any other form of exercise of a similar description, either in a faulty or extravagant manner, then by the inordinate character of such activity his chest gets injured. The vata spreads all over the injured area of the chest. Getting localized there, it gathers the kapha which is in that region and vitiates the pitta and then over-runs the whole system, upward, downward and sideways. That part of the morbid vata which spreads in the body-joints produces in the patient yawning, body-aches and fever; that part which has penetrated the upper part of the digestive tract, produces cardiac disorders and anorexia; that part which has reached the throat afflicts it and causes weakness of voice; that part which has spread to the channels that conduct the life-breaths (respiratory passages) causes dyspnea and coryza; and that part which has become localized in the head, afflicts the head. Thereafter in consequence of the injuries to the chest, the abnormal movement of vata and lesions in the throat, the patient is afflicted with a continuous cough. As a result of constant coughing the lungs being injured, the patient expectorates blood; and from the loss of blood thus occasioned, there results increasing debility.

एवमेते साहसप्रभवाः साहसिकमुपद्रवाः स्पृशन्ति। ततः स उपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमान् बलमात्मनः समीक्ष्य तदनुरूपाणि कर्माण्यारभेत कर्तुं; बलसमाधानं हि शरीरं, शरीरमूलश्च पुरुष इति ॥ ४ ॥

एवम् આ પ્રમાણે इस प्रकारसे, एते આ ઉપર ગણાવેલા ये, साहसप्रभवाः સાહસથી ઉત્પન્ન થયેલા साहससे उत्पन्न हुए, उपद्रवाः ઉપદ્રવો उपद्रव, साहसिकम् સાહસિક પુરુષને साहसिक पुरुषमें, स्पृशन्ति લાગુ પડે છે हो जाते हैं, ततः ત્યાર બાદ इसके बाद, उपशोषणैः શોષણ કરનાર उपशोषक, एतैः उपद्रवैः આ ઉપદ્રવોથી-इन उपद्रवोंसे, उपद्रुतः सः પીડાયેલો તે મનુષ્ય पीड़ित वह पुरुष, शनैः शनैः ધીમે ધીમે धीरे धीरे, उपशुष्यति સૂકાતો જાય છે सूख जाता है, तस्मात् તેથી इस लिए, मतिमान् બુદ્ધિમાન બુદ્ધિमान, पुरुषः માણસે पुरुष, आत्मनः પોતાનાં अपने, बलम् બળનો बलको, समीक्ष्य વિચાર કરીને देख कर, तदनुरूपाणि તેને યોગ્ય उसके अनुरूप, कर्माणि કર્મ कार्योंको, कर्तुम् કરવાનો करना, आरभेत આરંભ કરવો જોઈએ आरम्भ करे, हि કારણકે क्योंकि, शरीरम् શરીર शरीर, बल-समाधानम् બલવડે ધારણ કરી શકાય એવું છે बलके द्वारा ही सम्यक् रूपसे धारण किया जाता है, पुरुषः च અને પુરુષ और पुरुष, शरीर-मूलः इति શરીરરૂપ મૂળવાળો છે शरीरके आधार पर रहता है ॥ ४ ॥

4. Thus these disorders, arising out of overstrain, afflict the man who has over-strained himself. Thereafter being persecuted by these afflictions which waste him away, he becomes

४. स उपशोषणै:—सोऽप्युपशोषणैः ग. ज.।
,, कर्माणि—सर्वकर्माणि (च. अ.)

gradually more and more emaciated. Therefore the intelligent man, having correctly estimated his own strength, should engage in such undertakings as are commensurate with it, since strength is the support of the body and the body is the basis of man.

साहसकर्मत्यागोपदेशः—

भवति चात्र—

साहसं वर्जयेत् कर्म रक्षञ्जीवितमात्मनः ।
जीवन् हि पुरुषस्त्विष्टं कर्मणः फलमश्नुते ॥५॥

अत्र च આ વિષયમાં इस विषयमें, भवति श्लोक છે કે શ્લોક है कि, आत्मनः પોતાના अपने, जीवितम् જીવનની जीवनकी, रक्षन् રક્ષા કરનાર પુરુષે रक्षा करनेवाला पुरुष, साहसम् कर्म સાહસ કર્મનો साहसिक कार्यको, वर्जयेत् ત્યાગ કરવો જોઈએ छोड़ देवे, हि કારણ કે क्योंकि, जीवन् જીવતો जीता हुआ, पुरुषः तु પુરુષ તો पुरुष तो, कर्मणः કર્મનું कर्मके, इष्टम् फलम् ઈષ્ટ ફળ वाञ्छित फलको, अश्नुते ભોગવે છે भोगता है ॥५॥

Here is a verse again—

5. One should avoid all violent activity, carefully husbanding one's vitality. For, it is while living that a a man may enjoy the desired results of his action.

वेगसंधारणाद्यथा शोषः संभवति तद्वर्णनम्—

संधारणं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः—यदा पुरुषो राजसमीपे भर्तुः समीपे वा गुरोर्वा पादमूले द्यूतसभमन्यं वा सतां समाजं स्त्रीमध्यं वा समनुप्रविश्य यानैर्वाऽप्युच्चावचैरभियान् भयात् प्रसङ्गाद्ध्रीमत्त्वाद्घृणित्वाद्वा निरुणद्ध्यागतान् वातमूत्रपुरीषवेगान् तदा तस्य संधारणाद्वायुः प्रकोपमापद्यते, स प्रकुपितः पित्तश्लेष्माणौ समुदीर्योर्ध्वमधस्तिर्यक् च विहरति; ततश्चांशविशेषेण पूर्ववच्छरीरावयवविशेषं प्रविश्य शूलमुपजनयति, भिनत्ति पुरीषमुच्छोषयति वा, पार्श्वे चातिरुजति, अंसाववमृद्नाति, कण्ठमुरश्चावधमति, शिरश्चोपहन्ति, कासं श्वासं ज्वरं स्वरभेदं प्रतिश्यायं चोपजनयति;

संधारणम् વેગોનું ધારણ કરવું वेगोंका धारण करना, शोषस्य શોષનું शोषका, आयतनम् કારણ છે कारण है, इति यत् એમ જે यह जो, उक्तम् કહ્યું છે कहा है, तत् તેનું उसका, अनुव्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे, यदा જ્યારે जब, पुरुषः પુરુષ पुरुष, राजसमीपे રાજાની નજીક राजाके समीप, भर्तुः समीपे वा અથવા સ્વામીની નજીક अथवा स्वामीके समीप, गुरोः वा અથવા ગુરુના अथवा गुरुके, पादमूले ચરણો પાસે चरणोंके पास, द्यूतसभम् द्यूत- સભામાં जुगारियोंकी सभामें, अन्यम् वा અથવા અન્ય या अन्य, सताम् સત્પુરુષોના सत्पुरुषोंके, समाजम् સમાજમાં समाजमें, स्त्रीमध्यम् वा કે સ્ત્રીઓની વચ્ચે अथवा स्त्रियोंके बीचमें, समनुप्रविश्य પ્રવેશ કરીને प्रवेश करके, उच्चावचैः वा અથવા ઊંચાં નીચાં अथवा ऊंचे नीचे, यानैः વાહનોથી वाहनोंसे, अपि પણ भी, अभियान् જતાં जाता हुआ, भयात् ભયથી भयसे, प्रसङ्गात् પ્રસંગથી प्रसंगसे, ह्रीमत्त्वात् શરમાળપણાથી लज्जासे, घृणित्वात् वा અથવા ઘૃણાથી या घृणासे, आगतान् આવેલા उपस्थित हुए, वात- मूत्र- पुरीष- वेगान् વાત-

---

१. रक्षन्–रक्ष्यम् (ग.)

६. संधारण–अथ संधारणं (ख.)

,, द्यूतसभमन्यं–द्यूतसमाजं (प.)

,, वा समनुप्रविश्य–वाऽनुप्रविश्य (घ. च.)

६. अभियान्–अभिगच्छन् (च. ध.)

,, ,, –गच्छन् (त.)

,, निरुणद्ध्यागतान् वातमूत्रपुरीषवेगान्–निरुणद्ध्यागतानि वातमूत्रपुरीषाणि (क. ख ध.)

,, तदा–ततः (च. ध.)

,, शूलमुपजनयति–शूलं जनयति (क. ध.)

,, अंसाववमृद्नाति–अंसौ चावमृद्नाति (घ. प.)

,, ,, –अंसौ गृह्णात्यसौ (ह.)

મૂત્ર અને મળના વેગને वायु- मूत्र और मलके वेगोंको, निरुणद्धि રોકી રાખે છે रोकता है, तदा ત્યારે तब, तस्य તેના उसके, संधारणात् સંધારણથી रोकनेके कारण, वायुः વાયુ वायु, प्रकोपम् પ્રકોપ प्रकुपित, आपद्यते પામે છે हो जाता है, प्रकुपितः सः પ્રકોપ પામેલો તે प्रकुपित वह वायु, पित्तश्लेष्माणौ પિત્ત અને કફને पित्त और कफको, समुदीर्य પ્રેરીને उदीर्ण करके, ऊर्ध्वम् ઊંચો ऊपर, अधः નીચો नीचे, तिर्यक् च तथा ત્રાંસો तथा तिरछा. विहरति ફરવા લાગે છે विचरने लगता है, ततः च અને ત્યાર પછી और उसके बाद, अंशविशेषेण- અંશભેદથી अंशभेदसे, पूर्ववत् અગાઉની પેઠે पूर्वकी भांति, शरीर- अवयव- विशेषम् શરીરના ભિન્ન ભિન્ન અવયવમાં शरीरके भिन्न भिन्न अवयवमें, प्रविश्य પ્રવેશ કરીને प्रविष्ट हो कर, शूलम् શૂળને शूलको, उपजनयति ઉત્પન્ન કરે છે उत्पन्न करता है, पुरीषम् મળને मलको, भिनत्ति ભેદે છે भेदन करती है, उच्छोषयति वा અથવા શોષી લે છે अथवा सुखा देता है, पार्श्वे च પડખામાં पार्श्वमें, अतिरुजति અતિ પીડા કરે છે बहुत पीड़ा करता है, अंसौ ખભાઓને स्कन्धोंको, अवमृद्नाति મર્દન જેવી વ્યથા કરે છે पीड़ित करता है, कण्ठम् કંઠને कण्ठको, उरः च અને ઉરને और उरको, अवधमति પીડે છે दबाता है, शिरः च तथा માથામાં तथा शिरको, उपहन्ति દુખાવો કરે છે पीड़ित करता है, कासम् तथा કાસ कास, श्वासम् શ્વાસ श्वास, ज्वरम् જ્વર ज्वर, स्वरभेदम् સ્વરભેદ स्वरभेद, प्रतिश्यायम् च અને સળેખમને और प्रतिश्यायको, उपजनयति ઉત્પન્ન કરે છે उत्पन्न करता है;

6-(1). We shall now expatiate on our statement that the suppression of natural urges is the cause of consumption. When a man, having entered the presence of a king or that of the master or while sitting at the feet of the preceptor or in the company of gamblers, or, else, in the society of gentle-folk or in the midst of women or travelling in all sorts of carriages— high and low, on account of fear, pre-occupation, modesty or repugnance, represses the urges for voiding flatus, urine or feces, then by such suppression the vata in him becomes provoked. Then, having become thus irritated, it breaks loose, wandering up, down and sideways, driving forward pitta and kapha in its course. Thereafter having distributed itself in the manner described previously, in the entire system, gives rise to acute pains, either loosens the fecal matter or dries it up, afflicts the sides exceedingly, grinds down the shoulders, causes increased respiratory movement in the throat and chest, afflicts the head and induces cough, dyspnea, fever, hoarseness and coryza.

**ततः स उपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमानात्मनः शारीरेष्वेव योगक्षेमकरेषु प्रयतेत विशेषेण; शरीरं ह्यस्य मूलं, शरीरमूलश्च पुरुषो भवति ॥ ६ ॥**

ततः ત્યારપછી उसके बाद, उपशोषणैः શોષણ કરનાર शोषक, एतैः उपद्रवैः આ ઉપદ્રવોથી इन उपद्रवोंसे, उपद्रुतः सः પીડાયેલો તે મનુષ્ય पीड़ित हुआ वह मनुष्य, शनैः शनैः ધીમે ધીમે धीरे धीरे, उपशुष्यति સૂકાવા લાગે છે सूखने लगता है, तस्मात् તેથી इस लिए, मतिमान् पुरुषः બુદ્ધિમાન માણસે बुद्धिमान मनुष्य, आत्मनः પોતાનાં अपने, योग-क्षेम- करेषु યોગ-ક્ષેમને કરનારા योगक्षेमके उत्पादक, शारीरेषु एव શરીરના ભાવોમાં જ शरीरके भावोंमें ही, विशेषेण વિશેષે કરીને विशेष करके, प्रयतेत પ્રયત્ન કરવો જોઈએ प्रयत्न करे, हि કારણકે क्योंकि, शरीरम् શરીર शरीर, अस्य આ પુરુષનું इस पुरुषका, मूलम् મૂળ છે मूल है, पुरुषः च

६. स उपशोषणैः—सोऽप्युपशोषणैः (ख.)
,, शारीरे—शरीरे (ख.)

અને પુરુષ और पुरुष, शरीरमूलः શરીરના મૂલત્વવાળો। અર્થાત્ શરીરનું મૂળ शरीरका मूलत्ववाला अर्थात् शरीरका मूल, भवति છે है ॥ ६ ॥

6. Thereafter that man assailed by these debilitating afflictions, gets gradually more and more emaciated. Therefore the intelligent man should specially devote himself to those endeavours which assure the well-being of the body. Verily the body is the support of the man's well being, since the man is established in the body.

**भवति चात्र—**

**सर्वमन्यत् परित्यज्य शरीरमनुपालयेत् ।**
**तदभावे हि भावानां सर्वाभावः शरीरिणाम् ॥७॥**

अत्र च આ વિષયમાં इस विषयमें, भवति શ્લોક છે કે श्लोक है कि, अन्यत् सर्वम् બીજાં બધાંનો अन्य सबको, परित्यज्य ત્યાગ કરીને छोड़ कर, शरीरम् શરીરનું शरीरका, अनुपालयेत् પાલન કરવું જોઈએ पालन करे, हि કારણકે क्योंकि, तदभावे તે શરીર ન હોતાં उस शरीरके न रहनेसे, शरीरिणाम् મનુષ્યોના मनुष्योंके, भावानाम् સર્વ ભાવોનો અર્થાત્ પુરુષાર્થોનો सब भावोंका अर्थात् पुरुषार्थोंका, सर्वाभावः સર્વથા અભાવ થઈ જાય છે सर्वथा अभाव हो जाता है ॥ ७ ॥

7. Leaving everything else, one should take care of the body; for in the absence of the body, there is the total extinction of all that characterises embodied beings.

धातुक्षयाद्यथा शोषः संभवति तद्वर्णनम्—

**क्षयः शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः—यदा पुरुषोऽतिमात्रं शोकचिन्तापरिगतहृदयो भवति, ईर्ष्योत्कण्ठाभयक्रोधादिभिर्वा समाविश्यते, कृशो वा सन् रूक्षान्नपानसेवी भवति, दुर्बलप्रकृतिरनाहारोऽल्पाहारो वा भवति, तदा तस्य हृदयस्थायी रसः क्षयमुपैति; स तस्योपक्षयाच्छोषं प्राप्नोति, अप्रतीकाराच्चानुबध्यते यक्ष्मणा यथोपदेक्ष्यमाणरूपेण (१);**

क्षयः ક્ષય क्षय, शोषस्य શોષનું शोषका, आयतनम् કારણ છે कारण है, इति यत् એમ જે ऐसा जो, उक्तम् કહ્યું છે कहा है, तत् તેનું उसका, अनुव्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे, यदा જ્યારે जब, पुरुषः પુરુષ पुरुष, अतिमात्रम् હદ બહાર अतिमात्रामें, शोक-चिन्ता-परिगत-हृदयः શોક અને ચિન્તાથી પરિપૂર્ણ હૃદયવાળો शोक और चिन्तासे व्याप्त हृदयवाला, भवति થાય છે होता है, ईर्ष्या- उत्कण्ठा- भय- क्रोध- आदिभिः वा અથવા ઈર્ષ્યા, ઉત્કંઠા, ભય અને ક્રોધ વગેરેથી અથવા ईर्ष्या, उत्कण्ठा, भय और क्रोध आदिसे, समाविश्यते આવિષ્ટ થાય છે घिरा रहता है, कृशः वा सन् અથવા કૃશ હોવા છતાં अथवा दुर्बल हो कर भी, रूक्ष- अन्नपान- सेवी રૂક્ષ અન્નપાનનું સેવન કરનારો रूक्ष खानपानका सेवन करनेवाला, भवति થાય છે होता है, दुर्बलप्रकृतिः નબળી પ્રકૃતિનો હોવા છતાં अथवा दुर्बलप्रकृति होते भी, अनाहारः આહાર વિનાનો आहार नहीं करनेवाला, अल्पाहारः वा અથવા અલ્પાહારી अथवा अल्प आहार करनेवाला, भवति થાય છે होता है, तदा ત્યારે तब, तस्य તેના इस पुरुषके, हृदयस्थायी હૃદયમાં રહેલો हृदयमें स्थित, रसः રસ रस, क्षयम् ક્ષય क्षयको, उपैति પામે છે प्राप्त होता है, सः તે वह, तस्य તેના उस रसके, उपक्षयात् ક્ષયથી क्षयसे, शोषम् શોષને शोषको, प्राप्नोति પામે છે पाता है, अप्रतीकारात् च અને ચિકિત્સા ન કરવાથી और चिकित्सा न करने पर, यथा उपदेक्ष्यमाण-रूपेण આગળ કહેવામાં આવતા લક્ષણવાળા आगे कहे जानेवाले लक्षणोंवाले, यक्ष्मणा યક્ષ્મા રોગથી यक्ष्मासे, अनुबध्यते युक्त થાય છે युक्त होता है (१);

८-(१). परिगत—परीत (क. ग. ञ. ठ. त.)

८-(१). सेवी—सेवावान् (ग.)
,, अल्पाहारो वा भवति—अल्पाहारो वास्ते (ख. घ.)
,, तस्योपक्षयाच्छोषं -तस्योपक्षयात् संशोषं (ब. ज. ठ.)

8-(1). We shall elaborate the statement already made that wasting brings about consumption. When a man has his heart afflicted excessively with grief and anxiety or is taken possession of by envy, longing, fear or anger, or being lean is given to dry eats and drinks, or being of weak constitution abstains from food altogether or eats sparingly, then under such circumstances, the vital essence abiding in the heart becomes diminished; and from its diminution the patient begins to waste away and, if proper counter measures are not taken, he develops consumption whose characteristics will hereafter be described;

**यदा वा पुरुषोऽतिहर्षादतिप्रसक्तभावः स्त्रीष्वतिप्रसङ्गमारभते, तस्यातिमात्रप्रसङ्गाद्रेतः क्षयमेति। क्षयमपि चोपगच्छति रेतसि यदि मनः स्त्रीभ्यो नैवास्य निवर्तते, तस्य चातिप्रणीतसङ्कल्पस्य मैथुनमापद्यमानस्य न शुक्रं प्रवर्ततेऽतिमात्रोपक्षीणरेतस्त्वात्, तथाऽस्य वायुर्व्यायच्छमानशरीरस्यैव धमनीरनुप्रविश्य शोणितवाहिनीस्ताभ्यः शोणितं प्रच्यावयति, तच्छुक्रक्षयादस्य पुनः शुक्रमार्गेण शोणितं प्रवर्तते वातानुसृतलिङ्गम् ।**

८. यदा वा पुरुषोऽतिहर्षात्–पुरुषोऽतिहर्षणात् (ठ.)
,, अतिहर्षात् अतिप्रसक्तभावः–अतिहर्षणात् प्रसक्तभावः (ख.)
,, अतिहर्षात्–अतिमात्रप्रहर्षणात् (ग.)
,, अतिप्रसङ्गम्–अतिप्रयोगम् (द.)
,, अतिमात्रप्रसङ्गाद्रेतः–अतिप्रसङ्गाद्रेतः (घ. च.)
,, क्षयमेति–क्षयमुपैति (ठ.)
,, एति–उपगच्छति (ग.)
,, निवर्तते–निवर्तते प्रवर्तत एव (ग. छ.)
,, निवर्तते–निवर्तते अतिप्रवर्तत एव (क. घ. ज. ञ.)
,, न शुक्रं प्रवर्ततेऽतिमात्रोपक्षीणरेतस्त्वात्–न च शुक्रं प्रवर्तते अतिमात्रोपक्षीणत्वात् (ख.)
,, क्षीणरेतस्त्वात्–क्षीणत्वात् (घ.)
,, तथास्य–अथास्य (ज.)

यदा वा અથવા જ્યારે अथवा जब, पुरुषः પુરુષ पुरुष, अतिहर्षात् અતિ હર્ષથી अति हर्षके कारण, अतिप्रसक्तभावः અધિક આસક્ત થઈ अधिक आसक्त हुआ, स्त्रीषु अतिप्रसङ्गम् અત્યંત સ્ત્રીસંગ अत्यन्त स्त्रीसंग, आरभते કરે છે करता है, तस्य તેના उसका, अतिमात्रप्रसङ्गात् અતિશય મૈથુનથી अतिशय मैथुनके कारण, रेतः વીર્ય वीर्य, क्षयम् एति ક્ષીણ થઈ જાય છે क्षीण हो जाता है, रेतसि च અને વીર્ય और वीर्य, क्षयम् ક્ષય क्षयको, उपगच्छति अपि પામતાં છતાં પણ प्राप्त होजानेपर भी, यदि જો यदि, अस्य मनः આ પુરુષનું મન इसका मन, स्त्रीभ्यः સ્ત્રીઓથી स्त्रियोंसे, न एव निवर्तते હઠતું જ નથી नहीं हटता, अति-प्रणीत-संकल्पस्य તો અતિ પ્રમાણમાં મૈથુન કરવાના સંકલ્પવાળા तो अति प्रमाणमें मैथुनके संकल्पवाले, मैथुनम् आपद्यमानस्य અને મૈથુન કરતા और मैथुन करते हुए, तस्य च તે પુરુષનું वह पुरुषका, अतिमात्र-उपक्षीणरेतस्त्वात् અતિ પ્રમાણમાં વીર્ય ક્ષીણ થવાથી अति मात्रामें वीर्य क्षीण हो जानेके कारण, शुक्रम् વીર્ય वीर्य, न प्रवर्तते બહાર આવતું નથી नहीं निकलता, तथा તથા तथा, वायुः વાયુ वायु, व्यायच्छमानशरीरस्य મૈથુન કરતા શરીરવાળા मैथुनमें प्रवृत्त शरीरवाले, अस्य આ પુરુષની इस पुरुषकी, शोणितवाहिनीः રક્તવાહિની रक्तवाहिनी, धमनीः एव ધમનીઓમાં જ धमनियोंमें ही, अनुप्रविश्य પ્રવેશ કરીને प्रविष्ट हो कर, ताभ्यः તેમાંથી उनसे, शोणितम् રક્તને रक्तको, प्रच्यावयति બહાર લાવે છે बाहिर लाती है, तत्-शुक्रक्षयात् તે શુક્રક્ષયને લીધે उस शुक्रक्षयके कारण, वात-अनुसृतलिङ्गम् વાયુના લક્ષણવાળું वायुके लक्षणोंवाला, शोणितम् રક્ત रक्त, अस्य पुनः આ પુરુષના इसके, शुक्रमार्गेण વીર્યમાર્ગમાંથી वीर्यमार्गसे, प्रवर्तते બહાર આવે છે निकलता है;

८. धमनीः–शुक्रवहा धमनीः (ग.)
,, क्षयादस्य पुनः शुक्रमार्गेण–क्षयाच्छुक्रमार्गेण (घ.)

8-(2). or, when a man, being excessively libidinous as a result of over-eroticism, indulges in sex-act inordinately, then by reason of such excessive indulgence, his seminal secretion becomes depleted. If even after such seminal depletion, his mind does not turn away from women, then, during the sexual act which he achieves by the sheer extravagance of his desire, there is no flow of semen, his body having been totally drained of this vital fluid. Under such circumstances, the vata, forcing its entrance into the arteries of the man who is going through the movements of the sex-act, ejaculates blood. Since there is no seminal fluid left in him, the blood, driven along willy-nilly by the vata, flows out of the seminal ducts.

**अथास्य शुक्रक्षयाच्छोणितप्रवर्तनाच्च सन्धयः शिथिलीभवन्ति, रौक्ष्यमुपजायते, भूयः शरीरं दौर्बल्यमाविशति, वायुः प्रकोपमापद्यते; स प्रकुपितो वशिकं शरीरमनुसर्पन्नुदीर्य श्लेष्मपित्ते परिशोषयति मांसशोणिते, प्रच्यावयति श्लेष्मपित्ते, संरुजति पार्श्वे, अवमृद्नात्यंसौ, कण्ठमुद्ध्वंसते, शिरः श्लेष्माणमुपक्लेश्य प्रतिपूरयति श्लेष्मणा, सन्धींश्च प्रपीडयन् करोत्यङ्गमर्दमरोचकाविपाकौ च, पित्तश्लेष्मोत्क्लेशात् प्रतिलोमगत्वाच्च वायुर्ज्वरं कासं श्वासं स्वरभेदं प्रतिश्यायं चोपजनयति; स कासप्रसङ्गादुरसि क्षते शोणितं ष्ठीवति, शोणितगमनाच्चास्य दौर्बल्यमुपजायते,**

८. रौक्ष्यमुपजायते–रौक्ष्यमस्योपजायते (च.)
,, दौर्बल्यमाविशति,–दौर्बल्यमाविशतीति (च.ध.)
,, वशिकं–अरसिकं (च.)
,, शरीरमनुसर्पन्नुदीर्य श्लेष्मपित्ते परिशोषयति–शरीरमनुसर्पन् परिशोषयति (ख.)
,, अनुसर्पन्नुदीर्य श्लेष्मपित्ते–अनुसर्पन् (ध.)
,, अवमृद्नात्यंसौ–अवगृह्णात्यंसौ (च.छ.ध.)
,, कण्ठमुद्ध्वंसते–कण्ठमुद्ध्वंसयति (ख.)
,, श्लेष्माणमुपक्लेश्य–श्लेष्माणमुत्क्लेश्य (क.)

अथ ત્યાર બાદ इसके अनन्तर, **शुक्रक्षयात्** વીર્યના ક્ષયથી वीर्यके क्षयके कारण, **शोणितप्रवर्तनात् च** तथा રક્તની પ્રવૃત્તિ થવાથી और रक्तके निकलनेसे, **अस्य** આ પુરુષના इसकी, **सन्धयः** સાંધાઓ सन्धियां, **शिथिलीभवन्ति** શિથિલ થઈ જાય છે शिथिल हो जाती हैं, **रौक्ष्यम्** રૂક્ષતા रूक्षता, **उपजायते** ઉત્પન્ન થાય છે उत्पन्न होती है, **शरीरम्** શરીરમાં शरीरमें, **भूयः** વળી पुनः, **दौर्बल्यम्** દુર્બલતા दुर्बलता, **आविशति** આવે છે आती है, **वायुः** અને વાયુ और वायु, **प्रकोपम्** પ્રકોપ प्रकुपित, **आपद्यते** પામે છે होता है, **प्रकुपितः सः** પ્રકોપ પામેલો તે વાયુ प्रकुपित हुआ वह वायु, **वशिकम् शरीरम्** શુક્ર અને શોણિતથી રહિત શરીરમાં शुक्र और शोणितसे रहित शरीरमें, **अनुसर्पन्** પ્રસરતો प्रसरतो विचरण करता हुआ, **श्लेष्म- पित्ते** કફ અને પિત્તને कफ और पित्तको, **उदीर्य** ઉદીર્ણ કરીને उत्तेजित करके, **मांसशोणिते** માંસ અને રક્તને मांस और रक्तको, **परिशोषयति** સૂકવી નાખે છે सूखा देता है, **श्लेष्म- पित्ते** કફ અને પિત્તને कफ और पित्तको, **प्रच्यावयति** ખસેડે છે च्युत करता है, **पार्श्वे** પડખામાં पार्श्वोंमें, **संरुजति** પીડા કરે છે पीड़ा करता है, **अंसौ** ખભાને स्कन्धोंको, **अवमृद्नाति** પીડે છે पीड़ित करता है, **कण्ठम्** કંઠને कण्ठको, **उद्ध्वंसते** વિકૃત બનાવે છે विकृत करता है, **श्लेष्माणम्** કફને कफको, **उपक्लेश्य** પ્રકુપિત કરીને प्रकुपित करके, **श्लेष्मणा** કફથી कफसे, **शिरः** માથાને शिरको, **प्रतिपूरयति** ભરી દે છે भर देता है, **सन्धीन् च** અને સાંધાઓને और सन्धियोंको, **प्रपीडयन्** પીડા કરતાં पीड़ित करता हुआ, **अङ्गमर्दम्** અંગોનું ભાંગવું अंगोका टूटना, **अरोचक- अविपाकौ च** तथा અરુચિ અને અવિપાકને अरोचक और अविपाकको, **करोति** ઉત્પન્ન કરે છે उत्पन्न करता है, **पित्तश्लेष्म- उत्क्लेशात्** પિત્ત અને કફનો ઉત્ક્લેશ થવાથી पित्त और कफके उत्क्लेशित होनेसे, **प्रतिलोमगत्वात् च** અને પ્રતિલોમ ગતિ હોવાથી तथा प्रतिलोम गति होनेके कारण, **वायुः** વાયુ वायु, **ज्वरम्**

જ્વરને ज्वरको, **कासम्** કાસને कासको, **श्वासम्** શ્વાસને श्वासको, **स्वरभेदम्** સ્વરભેદને स्वरभेदको, **प्रतिश्यायम् च** અને પ્રતિસ્યાયને और प्रतिश्यायको, **उपजनयति** ઉત્પન્ન કરે છે उत्पन्न करता है, **सः** તે પુરુષ वह पुरुष, **कास-प्रसङ्गात्** કાસ ચાલુ રહેવાથી कासके सतत रहनेके कारण, **उरसि** છાતીમાં उरमें, **क्षते** क्षत થવાથી क्षत होनेसे, **शोणितम्** રક્તને रक्तको, **ष्ठीवति** થૂંકે છે थूकता है, **शोणितगमनात् च** અને રક્તના નીકળવાથી और रक्तके निकलनेसे, **अस्य** આ પુરુષને इसको, **दौर्बल्यम्** નબળાઈ दुर्बलता, **उपजायते** ઉત્પન્ન થાય છે आ जाती है;

8-(3). In consequence of the depletion of the semen, and the discharge of the blood, the joints become loosened, dryness is induced and the body is further weakened and the vata becomes provoked. Being thus exacerbated, it (the vata) sweeps through the vacuous body, and arousing the pitta and kapha it dries up the flesh and blood, causes the flow of kapha and pitta, afflicts the sides, grinds down the shoulders, muffles the voice; precipitating the kapha, it fills the head with kapha; afflicting the joints, it causes body-aches, as also anorexia and indigestion; and by reason of the precipitation of pitta and kapha and of the perverse course of vata, it gives rise to fever, cough, dyspnea, loss of voice and coryza. In consequence of the persistent cough, the lungs having become injured, the patient spits blood; and from the loss of blood thus occasioned, he becomes weak.

**ततः स उपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमानात्मनः शरीरमनुरक्षञ्छुक्रमनुरक्षेत्। परा ह्येषा फलनिर्वृत्तिराहारस्येति ॥ ८ ॥**

**ततः सः** त्यार પછી તે પુરુષ उसके बाद वह पुरुष, **उपशोषणैः** શોષણ કરનાર शोषण करनेवाले, **एतैः उपद्रवैः** આ ઉપદ્રવોથી इन उपद्रवोंसे, **उपद्रुतः** પીડાયેલો થઈ पीड़ित हुआ, **शनैः शनैः** ધીમે ધીમે धीरे धीरे, **उपशुष्यति** સૂકાતો જાય છે सूखने लगता है, **तस्मात्** તેથી इस लिए, **मतिमान्** બુદ્ધિમાન बुद्धिमान, **पुरुषः** પુરુષે पुरुषको, **आत्मनः** પોતાના अपने, **शरीरम्** શરીરનું शरीरका, **अनुरक्षन्** રક્ષણ કરતાં रक्षण करते हुए, **शुक्रम्** વીર્યની शुक्रकी, **अनुरक्षेत्** રક્ષા કરવી रक्षा करना चाहिए, **हि** કારણકે क्यों कि, **एषा** આ यह, **आहारस्य** આહારની आहारकी, **परा** સર્વોત્તમ सर्वोत्तम, **फलनिर्वृत्तिः इति** ફલસંપત્તિ છે फलसम्पत्ति है ॥ ८ ॥

8. Thereafter, racked thus with these wasting disorders, the patient becomes gradually emaciated. Therefore, the intelligent man seeking to preserve the health of his body, should husband the semen. For, verily, the semen is the highest product of food.

**भवति चात्र—**

**आहारस्य परं धाम शुक्रं तद्रक्ष्यमात्मनः ।**
**क्षयो ह्यस्य बहून् रोगान्मरणं वा नियच्छति ॥९॥**

**अत्र च** આ વિષયમાં इस विषयमें, **भवति** શ્લોક છે કે श्लोक है कि, **शुक्रम्** વીર્ય वीर्य, **आहारस्य** આહારનો आहारका, **परम्** ઉત્કૃષ્ટ उत्तम, **धाम** સાર છે सार है, **आत्मनः** પોતાના अपने, **तत्** તે વીર્યનું उस वीर्यका, **रक्ष्यम्** રક્ષણ કરવું જોઈએ रक्षण करना चाहिए, **हि** કારણકે क्यों कि, **अस्य** આ વીર્યનો क्षय इस वीर्यका क्षय, **बहून् रोगान्** ઘણા રોગોને बहुतसे रोगोंको, **मरणम् वा** અથવા મૃત્યુને अथवा मृत्युको, **नियच्छति** આપે છે देता है ॥ ९ ॥

९. क्षयो—क्षये (घ.त.)
,, क्षयो ह्यस्य—क्षयादस्य (च.ष.)
,, वा नियच्छति—वाऽधिगच्छति (च.ध.)

Here is a verse again—

9. The highest stage to which food attains is the semen. Hence one should conserve one's semen. Its dissipation results in either manifold disorders or death.

शोषस्य राजयक्ष्मेति संज्ञायां हेतुः —

**विषमाशनं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः—यदा पुरुषः पानाशनभक्ष्यलेह्योपयोगान् प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयविषमानासेवते, तदा तस्य तेभ्यो वातपित्तश्लेष्माणो वैषम्यमापद्यन्ते; ते विषमाः शरीरमनुसृत्य यदा स्रोतसामयनमुखानि प्रतिवार्यावतिष्ठन्ते तदा जन्तुर्यद्यदाहारजातमाहरति तत्तदस्य मूत्रपुरीषमेवोपजायते भूयिष्ठं नान्यस्तथा शरीरधातुः; स पुरीषोपष्टम्भाद्वर्तयति, तस्माच्छुष्यतो विशेषेण पुरीषमनुरक्ष्यं तथाऽन्येषामतिकृशदुर्बलानां; तस्यानाप्यायमानस्य विषमाशनोपचिता दोषाः पृथक् पृथगुपद्रवैर्युञ्जन्तो भूयः शरीरमुपशोषयन्ति ।**

**विषमाशनम्** વિષમાશન विषमाशन, **शोषस्य** શોષનું शोषका, **आयतनम्** કારણ છે कारण है, **इति यत्** એમ જે यह जो, **उक्तम्** કહ્યું છે कहा है, **तत्** તેનું उसका, **अनुव्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे, **यदा** જ્યારે जब, **पुरुषः** પુરુષ पुरुष, **प्रकृति-** પ્રકૃતિ प्रकृति, **करण-** કરણ करण, **संयोग-** સંયોગ संयोग, **राशि-** રાશિ राशि, **देश- काल-** દેશ-કાલ देश-काल, **उपयोग- संस्था-** ઉપયોગનો નિયમ उपयोगका नियम, **उपशय-** અને ઉપશયથી और उपशयसे, **विषमान्** વિપરીત विपरीत, **पान-** પાન पान, **अशन-** અશન अशन, **भक्ष्य-** ભક્ષ્ય भक्ष्य, **लेह्य-उपयोगान्** અને લેહ્ય પદાર્થોનો ઉપયોગ और लेह्य पदार्थोंका उपयोग, **आसेवते** કરે છે करता है, **तदा** ત્યારે तब, **तेभ्यः** તેઓથી उनसे, **तस्य** તેના उसके, **वात-पित्त-श्लेष्माणः** વાત, પિત્ત અને કફ वात, पित्त और कफ, **वैषम्यम्** વિષમપણાને विषम, **आपद्यन्ते** પામે છે बन जाते हैं, **विषमाः** તે વિષમ થયેલા તેઓ विषम हुए वे, **शरीरम्** શરીરમાં शरीरमें, **अनुसृत्य** પ્રસરી જઈને फैल कर, **यदा** જ્યારે जब, **स्रोतसाम्** સ્રોતોના स्रोतोंके, **अयनमुखानि** માર્ગોનાં મુખોને मार्गोंके मुखोंको, **प्रतिवार्य** આવૃત કરીને आवृत करके, **अवतिष्ठन्ते** રહે છે ठहर जाते हैं, **तदा** ત્યારે तब, **जन्तुः** મનુષ્ય मनुष्य **यत् यत्** જે જે जो जो, **आहारजातम्** અનેક આહાર अनेक आहार, **आहरति** લે છે करता है, **तत् तत्** તે તે वे वे, **भूयिष्ठम्** અતિ અધિક પ્રમાણમાં अत्यधिक प्रमाणमें, **अस्य** આ પુરુષનાં इसके, **मूत्रपुरीषम्** મલમૂત્ર જ मलमूत्र ही, **उपजायते** બની જાય છે बन जाते हैं, **अन्यः** બીજો કોઈ अन्य कोई, **शरीरधातुः** શરીરનો ધાતુ शरीरकी धातु, **तथा न** બનતો નથી नहीं बनती, **सः** તે वह, **पुरीष- उपष्टम्भात्** મલના ઉપષ્ટમ્ભથી मलके उपष्टम्भसे, **वर्तयति** જીવતો રહે છે जीवित रहता है, **तस्मात्** તે માટે इस लिए, **शुष्यतः** શોષરોગીના शोषरोगीके, **तथा** તથા एवं, **अन्येषाम्** અન્ય अन्य, **अतिकृश-** ખૂબ પાતળા अतिकृश, **दुर्बलानाम्** અને નબળા માણસોના और दुर्बल मनुष्योंके, **पुरीषम्** મલની मलकी, **विशेषेण** ખાસ કરીને विशेष रूपसे, **अनुरक्ष्यम्** રક્ષા કરવી જોઈએ रक्षा करनी चाहिए, **तस्य अनाप्यायमानस्य** શરીરમાં પોષણ ન પામતા એવા તેના शरीरका पोषण न होनेसे उसके, **विषमाशनोपचिताः** વિષમાશનથી વધેલા विषमाशनसे बढ़े हुए, **दोषाः** દોષો दोष, **पृथक् पृथक्** જુદા જુદા पृथक् पृथक्, **उपद्रवैः** ઉપદ્રવોથી उपद्रवोंसे, **युञ्जन्तः** યુક્ત કરતાં युक्त करते हुए, **भूयः** વળી પાછા और भी, **शरीरम्** શરીરનું शरीरको, **उपशोषयन्ति** શોષણ કરે છે सुखा देते हैं;

१०. विषमानासेवते-विषमानुपसेवते (च.)
,, तस्य तेभ्यो वातपित्तश्लेष्माणो-तस्य वातपित्तश्लेष्माणो (घ.)
,, शरीरमनुसृत्य-शरीरमनुपसृत्य (ख.)
,, अनुसृत्य-उपसर्पन्तः (ग.)
,, स्रोतसामयनमुखानि-स्रोतसां मुखानि (च.ध.)
,, ,, -स्रोतांस्यायतिमुखानि (फ.)
,, ,, -स्रोतसामभिमुखानि (प.)
,, मूत्रपुरीषमेवोपजायते-मूत्रपुरीषमेवोपचीयते (ख.ठ)
,, अन्येषामतिकृशदुर्बलानां-सर्वेषामत्यर्थकृशदुर्बलानां (घ.छ.ज.त.)

:०-(1). We shall now take up for detailed comment what we said concerning promiscuous diet being one of the causes of consumption. When a man indulges in drinks and foods which are ingested in various ways—swallowing, chewing, eating or licking and which are promiscuous as regards their nature, mode of preparation, combination, quantum, clime, season, rules of eating and homologation, then as a consequence of this, his vata, pitta and kapha suffer derangement. Being deranged, they spread through the body and take up their positions obstructing the orifices of the body-channels. Under such conditions, whatever morsel of food a man takes, is for the most part turned into urine and feces, and no other body-element is formed in any measure. The victim of such a disorder lives on, however, sustained by the fecal matter. Accordingly the fecal matter in the body of a man who is wasting away as also of men who are extremely thin and weak is to be carefully maintained. In such a man deprived of proper nourishment, the morbid humors, drawing strength from malnutrition and each giving rise to its own peculiar maladies, further emaciate the body.

**तत्र वातः शूलमङ्गमर्दं कण्ठोद्ध्वंसनं पार्श्वसंरुजनमंसावमर्दं स्वरभेदं प्रतिश्यायं चोपजनयति; पित्तं ज्वरमतीसारमन्तर्दाहं च; श्लेष्मा तु प्रतिश्यायं शिरसो गुरुत्वमरोचकं कासं च, स कासप्रसङ्गादुरसि क्षते शोणितं निष्ठीवति, शोणितगमनाच्चास्य दौर्बल्यमुपजायते। एवमेते विषमाशनोपचितास्त्रयो दोषा राजयक्ष्माणमभिनिर्वर्तयन्ति।**

तत्र તેઓમાં उनमें, **वातः** વાયુ वायु, **शूलम्** શૂળ शूल, **अङ्गमर्दम्** અંગોનું ભાંગવું अङ्गोंका टूटना, **कण्ठोद्ध्वंसनम्** કંઠનું ખરાબ થવું कण्ठका खराब होना, **पार्श्वसंरुजनम्** પડખાંમાં પીડા पार्श्वोंमें पीड़ा, **अंसावमर्दम्** ખભામાં પીડા स्कन्धोंमें पीड़ा, **स्वरभेदम्** સ્વરભેદ स्वरभेद, **प्रतिश्यायम् च** અને પ્રતિશ્યાયને और प्रतिश्यायको, **उपजनयति** ઉત્પન્ન કરે છે उत्पन्न करता है, **पित्तम्** પિત્ત पित्त, **ज्वरम्** જ્વરને ज्वरको, **अतीसारम्** અતિસારને अतीसारको, **अन्तर्दाहम् च** અને અન્તર્દાહને ઉત્પન્ન કરે છે और अन्तर्दाहको उत्पन्न करता है, **श्लेष्मा तु** અને કફ તો और कफ तो, **प्रतिश्यायम्** પ્રતિશ્યાય प्रतिश्याय, **शिरसः गुरुत्वम्** માથાના ભારેપણાને शिरका भारीपन, **अरोचकम्** અરુચિને अरोच, **ककासम् च** અને કાસને ઉત્પન્ન કરે છે और कासको उत्पन्न करता है, **सः** તે वह, **कासप्रसङ्गात्** કાસના પ્રસંગથી कासका अति सम्बन्ध होनेके कारण, **उरसि** છાતીમાં छातीमें, **क्षते** क्षत થઈ જવાથી क्षत हो जानेसे, **शोणितम्** રક્તને रक्तको, **निष्ठीवति** થૂંકે છે थूकता है, **शोणितगमनात् च** અને રક્તના નીકળવાથી रक्तके जानेसे, **अस्य** આ પુરુષને इस पुरुषको, **दोर्बल्यम्** દુર્બલતા दुर्बलता, **उपजायते** થાય છે आ जाती है, **एवम्** આ પ્રમાણે इस प्रकार, **विषमाशनउपचिताः** વિષમાશનથી વધેલા विषमाशनसे बढ़े हुए, **एते** આ ये, **त्रयः दोषाः** ત્રણે દોષો तीनों दोष, **राजयक्ष्माणम्** રાજયક્ષ્માને राजयक्ष्माको, **अभिनिर्वर्तयन्ति** ઉત્પન્ન કરે છે उत्पन્ન करते हैं;

१०. तत्र वातः—तत्र वातोऽस्य (च.)

१०. पित्तं—पित्तं पुनः (ख घ.)

,, ज्वरं—पुनर्ज्वरं° (ज.)

,, अरोचकं कासं—कासमरोचकं (ख.)

,, शोणितं—सशोणितं (च)

,, निष्ठीवति—ष्ठीवति (ख)

,, उपचितास्त्रयो दोषा—उपचिता दोषा (घ.)

,, अभिनिर्वर्तयन्ति—उपजनयन्ति (ठ.)

10-(2). Thus the vata brings in its wake colicky pain, body-aches, impairment of the throat, pain in the sides, crunching pains in the shoulders, loss of voice and coryza; the pitta brings fever, diarrhea and internal burning; and the kapha brings coryza, heaviness of the head, anorexia and cough. Owing to the persistent cough the lungs having become damaged, the victim spits blood and in consequence of this loss of blood, be becomes debilitated. In this manner the three morbid humors getting augmented as the result of unbalanced diet, induce consumption, the king of diseases.

**स तैरुपशोषणैरुपद्रवैरुपद्रुतः शनैः शनैः शुष्यति। तस्मात् पुरुषो मतिमान् प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपशयादविषमाहारमाहरेत् ॥ १० ॥**

सः ते પુરુષ वह पुरुष, तैः उपशोषणैः તે શોષણ કરનારા उन शोषण करनेवाले, उपद्रवैः ઉપદ્રવોથી उपद्रवोंसे, उपद्रुतः પીડાઈ पीड़ित हुआ, शनैः शनैः ધીમે ધીમે धीरे धीरे, शुष्यति સૂકાતો જાય છે सूख जाता है, तस्मात् તેથી इस लिए, मतिमान् બુદ્ધિમાન बुद्धिमान, पुरुषः પુરુષે पुरुष, प्रकृति- પ્રકૃતિ प्रकृति, करण- કરણ करण, संयोग- સંયોગ संयोग, राशि- રાશિ राशि, देश-काल- દેશ-કાલ देश-काल, उपयोगसंस्था- ઉપયોગ-સંસ્થા उपयोगसंस्था, उपशयात् અને ઉપશયને और उपशयके, अविषमम् અનુકૂળ अनुकूल, आहारम् આહારનો आहारका, आहरेत् ઉપયોગ કરવો उपयोग करे ॥१०॥

10. The sufferer afflicted with these emaciating conditions gradually wastes away. Therefore the intelligent man should take regular diet paying heed to constitution, mode of preparation, combination, clime, season, rules of eating and homologation.

भवति चात्र—

**हिताशी स्यान्मिताशी स्यात्कालभोजी जितेन्द्रियः। पश्यन् रोगान् बहून् कष्टान् बुद्धिमान् विषमाशनात् ॥ ११ ॥**

अत्र च આ વિષયમાં શ્લોક છે કે इस विषयमें श्लोक है कि, विषमाशनात् વિષમાશનને કારણે ઉત્પન્ન થતા विषमाशनके कारण उत्पन्न होते, बहून् ઘણા बहुत, कष्टान् કષ્ટદાયક कष्टदायक, रोगान् રોગોને रोगोंको, पश्यन् જોતા देखते हुए, बुद्धिमान् બુધ્ધિમાન પુરુષે बुद्धिमान मनुष्य, हिताशी હિતભોજી हितभोजी, स्यात् થવું બને, मिताशी તેમજ મિતભોજી एवं मितभोजी, कालभोजी કાલભોજી कालभोजी, जितेन्द्रियः અને જિતેન્દ્રિય और जितेन्द्रिय, स्यात् થવું બને ॥ ११ ॥

Here is a verse again—

11. The intelligent man, observing the manifold formidable maladies arising from unbalanced diet, should be a wholesome eater, a moderate eater, a timely eater and a master of the appetites.

**एतैश्चतुर्भिः शोषस्यायतनैरुपसेवितैर्वातपित्तश्लेष्माणः प्रकोपमापद्यन्ते। ते प्रकुपिता नानाविधैरुपद्रवैः शरीरमुपशोषयन्ति। तं सर्वरोगाणां कष्टतमत्वाद्राजयक्ष्माणमाचक्षते भिषजः; यस्माद्वा पूर्वमासीद्भगवतः सोमस्योडुराजस्य तस्माद्राजयक्ष्मेति ॥ १२ ॥**

उपसेवितैः સેવવામાં આવેલાં सेवन किये गये, एतैः આ इन, चतुर्भिः ચાર चार, शोषस्य શોષનાં शोषके, आयतनैः કારણોથી कारणोंसे, वात-पित्त-श्लेष्माणः વાત-

१०. शुष्यति–उपशुष्यति (घ.)

१२. उपद्रवैः शरीरमुपशोषयन्ति–विकारैः शीघ्रमुपतपन्ति (ग.)

,, कष्टतमत्वात्–कष्टतमं मत्वा (ग.)

,, उडुराजस्य–इन्दुराजस्य (ग.)

પિત્ત અને કફ वात-पित्त और कफ, प्रकोपम् પ્રકોપને प्रकुपित, आपद्यन्ते પામે છે हो जाते हैं, प्रकुपिताः પ્રકોપ પામેલા प्रकुपित हुए, ते તે ત્રણે वे तीन, नानाविधैः વિવિધ પ્રકારના नाना प्रकारके, उपद्रवैः ઉપદ્રવોથી उपद्रवोंसे, शरीरम् શરીરને शरीरको, उपशोषयन्ति સૂકવે છે सुखाते हैं, भिषजः વૈદ્યો वैद्य, तम् તેને उसे, सर्वरोगाणाम् સર્વ રોગોમાં सब रोगोंमें, कष्टतमत्वात् અતિશય કષ્ટદાયક હોવાને કારણે अतिशय कष्टदायक होनेके कारण, राजयक्ष्माणम् રાજયક્ષ્મા राजयक्ष्मा, आचक्षते કહે છે कहते हैं, यस्मात् वा અને જેથી और जिससे, उडुराजस्य નક્ષત્રોના રાજા नक्षत्रोंके राजा, भगवतः सोमस्य ભગવાન ચંદ્રમાને भगवान चन्द्रमाको, पूर्वम् સૌથી પહેલાં सबसे प्रथम, आसीत् તે થયો હતો वह हुआ था, तस्मात् તેથી इस लिए, राजयक्ष्मा इति તે 'રાજયક્ષ્મા' એ નામથી કહેવાય છે वह 'राजयक्ष्मा' इस नामसे कहा जाता है ॥ १२ ॥

12. Wrought upon by these four causes of consumption, the three morbid humors, vata, pitta and kapha, flare up. Thus roused, they waste the body by diverse kinds of afflictions. On account of its being the most formidable of all diseases, consumption is spoken of by physicians as the King of diseases; or it may have been called the 'king disease' because it was first seen in the celestial Moon—the king of the stars.

शोषस्य पूर्वरूपाणि—

**तस्येमानि पूर्वरूपाणि भवन्ति; तद्यथा—प्रतिश्यायः, क्षवथुरभीक्ष्णं, श्लेष्मप्रसेकः, मुखमाधुर्यम्, अनन्नाभिलाषः, अन्नकाले चायासः, दोषदर्शनमदोषेष्वल्पदोषेषु वा भावेषु पात्रोदकान्नसूपापूपोपदंशपरिवेशकेषु, भुक्तवतश्चास्य हृल्लासः, तथोल्लेखनमप्याहारस्यान्तरान्तरा, मुखस्य पादयोश्च शोफः, पाण्योश्चावेक्षणमत्यर्थम्, अक्ष्णोः श्वेतावभासता चातिमात्रं, बाह्वोश्च प्रमाणजिज्ञासा, स्त्रीकामता, निर्घृणत्वं, बीभत्सदर्शनता चास्य काये, स्वप्ने चाभीक्ष्णं दर्शनमनुदकानामुदकस्थानानां शून्यानां च ग्रामनगरनिगमजनपदानां शुष्कदग्धभग्नानां च वनानां कृकलासमयूरवानरशुकसर्पकाकोलूकादिभिः संस्पर्शनमधिरोहणं यानं वा श्वोष्ट्रखरवराहैः केशास्थिभस्मतुषाङ्गारराशीनां चाधिरोहणमिति (शोषपूर्वरूपाणि भवन्ति) ॥ १३ ॥**

१२. वा भावेषु—वा (ध.)

,, भुक्तवतश्चास्य हृल्लासः—भुक्तवतो हृल्लासः (ध.)

तस्य તે શોષનાં उस शोषके, इमानि આ ये, पूर्वरूपाणि પૂર્વરૂપો पूर्वरूप, भवन्ति થાય છે होते हैं, तत् यथा જેમકે जैसेकि, प्रतिश्यायः પ્રતિશ્યાય प्रतिश्याय, अभीक्ष्णम् વારંવાર बारबार, क्षवथुः છીંકો આવવી छींकें आना, श्लेष्मप्रसेकः લાળ ટપકવી लालास्राव, मुख- माधुर्यम् મુખનું મધુર રહેવું मुखमें मधुरता, अनन्नाभिलाषः અન્નની ઇચ્છા ન થવી भोजनकी अनिच्छा, अन्नकाले च અને ભોજન વખતે और भोजनके समय, आयासः થાક લાગવો थकान, अदोषेषु દોષ વિનાનાં दोषरहित, अल्पदोषेषु वा અથવા થોડા દોષવાળાં या अल्पदोषवाले, पात्र- વાસણ पात्र, उदक- પાણી जल, अन्न- અન્ન अन्न, सूप- દાળ दाल, अपूप- અપૂપ अपूप, उपदंश- ચટણી चटनी, परिवेशकेषु પીરસનાર વગેરે परोसनेवाले आदि, भावेषु ભાવોમાં भावोंमें, दोषदर्शनम् દોષ દેખાવો दोषदर्शन, भुक्तवतः च ખાઇ લીધા પછી और खानेके बाद, अस्य એને इसका, हृल्लासः ઉબકા આવવા जी मचलाना, तथा तथा तथा, आहारस्य अन्तरा अन्तरा ભોજનની વચ્ચે વચ્ચે भोजनके बीच बीचमें, उल्लेखनम् अपि ઉલટીનું પણ થવું वमनका भी आना, मुखस्य મોઢા मुख, पादयोः च અને પગ પર

१३. शोफः—शोषः (घ. छ. ड. त. द. भ. प.)

,, स्त्रीकामता—स्त्रीकामित्ता (ढ.)

,, ,, —स्त्रीकामता तथोन्मादो (प.)

,, निर्घृणत्वम्—अतिघृणित्वम् (ख. ध. त.)

,, दग्धभग्नानां—दग्धावभग्नानां (ध.)

,, संस्पर्शनम्—स्पर्शनम् (च.)

,, श्वोष्ट्रखरवराहैः—वराहोष्ट्रखरैः (ध.)

और पांवोंमें, **शोफः** સોજો શોफ, **पाण्योः च** હાથ हाथोंको, **अत्यर्थम्** વારેવારે बारबार, **अवेक्षणम्** જોવા देखना, **अक्ष्णोः च** આંખો आंखोमें, **अतिमात्रम्** ઘણીજ बहुत अधिक, **श्वेतावभासता** સફેદ થવી सफेदी आना, **बाह्वोः च** અને ભુજાઓના और भुजाओंके, **प्रमाणजिज्ञासा** પ્રમાણને જાણવાની ઇચ્છા प्रमाणको जाननेकी इच्छा, **स्त्रीकामता** સ્ત્રીસેવનની ઇચ્છા स्त्रीकी चाह, **निर्घृणत्वम्** નિર્લજ્જતા निर्लज्जता, **अस्य** એના इसके, **काये च** શરીરમાં शरीरमें, **वीभत्स-** સૂગ ઉપજાવનાર जुगुप्साजनक, **दर्शनता** રૂપોનું જોવામાં આવવું रूपोंका दिखाई देना, **स्वप्ने च** સ્વપ્નમાં स्वप्नोंमें, **अनुदकानाम्** જલ વિનાનાં जलरहित, **उदकस्थानानाम्** જલાશયોનું जलाशयोंका, **शून्यानाम्** ખાલી खाली, **ग्राम-** ગામ ग्राम, **नगर-** નગર नगर, **निगम-** નિગમ निगम, **जनपदानाम् च** તથા જનપદો एवं जनपदोंको, **शुष्क-** અને સૂકાં और शुष्क, **दग्ध-** બળેલાં जले, **भग्नानाम्** ભાંગેલાં टूटे, **वनानाम् च** વનોનું बनोंको, **अभीक्ष्णम्** વારંવાર बारबार, **दर्शनम्** નજરે આવવું देखना, **कृकलास-** કાંચિડો गिरगिट, **मयूर-** મોર मोर, **वानर-** વાંદરા बन्दर, **शुक-** પોપટ तोता, **सर्प-** સાપ सर्प, **काक-** કાગડા कौआ, **उलूक-** ઘુવડ उल्लु, **आदिभिः** વગેરેથી आदिसे, **संस्पर्शनम्** સ્પર્શ થવો छुआ जाना, **श्व-** કુતરાં कुत्ते, **उष्ट्र-** ઊંટ ऊंट, **खर-** ગધેડાં गधे, **वराहैः तथा** સૂવર तथा सूअर, **अधिरोहणम्** ઉપર ચઢવું पर चढना, **यानम् वा** અથવા ચઢીને જવું या चढ़ कर जाना, **केश-** અને વાળ और केश, **अस्थि-** હાડકાં अस्थि, **भस्म-** રાખ भस्म, **तुष-** ફોતરાં तुष, **अंगार-** તથા અંગારાના तथा अंगारके, **राशीनाम्** ઢગલાઓ ढेरों, **अधिरोहणम् च इति** ઉપર ચઢવું पर चढ़ना, ( **शोष-** આ શોષનાં ये शोषके, **पूर्वरूपाणि** પૂર્વરૂપો पूर्वरूप, **भवन्ति** થાય છે होते हैं) ॥ १३ ॥

13. These are its premonitory symptoms:—coryza, frequent sneezing, increased mucus-discharge, sweet taste in the mouth, inappetence, weariness at meal-times, constant fault-finding even where there are no faults or negligible faults especially in the matter of dinner service, water, food, soup, cakes, savouries and the caterers; nausea immediately after meals; vomiting fits during the progress of the meal, puffiness of the face and feet, anxious scrutiny of one's hand; extreme pallor of the eyes; over-anxiety to know the proportion of one's arms; concupiscence; general disgust for things; frightful appearance of the body; the repeated seeing in dreams of empty reservoirs and deserted villages, townships, cities and country-side or withered, burnt, denuded forests, or of oneself coming in contact with chamelions, peacocks, monkeys, parrots, serpents, crows, owls etc, or riding or being drawn by dogs, camels, donkeys, and pigs, and climbing mounds of hair, bones, ashes, chaff and embers. Such are the premonitory symptoms of consumption

शोषस्यैकादश रूपाणि—

**अत ऊर्ध्वमेकादश रूपाणि तस्य भवन्ति; तद्यथा —शिरसः परिपूर्णत्वं, कासः, श्वासः, स्वरभेदः, श्लेष्मणश्छर्दनं, शोणितष्ठीवनं, पार्श्वसंरोजनम्, अंसावमर्दः, ज्वरः, अतीसारः, अरोचकश्चेति ॥१४॥**

**अतः ऊर्ध्वम्** આ પછી इसके पीछे, **तस्य** તે શોષનાં उस शोषके, **एकादश** અગિયાર ग्यारह, **रूपाणि** લક્ષણો लक्षण, **भवन्ति** થાય છે होते हैं, **तत् यथा** જેમકે जैसे कि, **शिरसः** માથાનું शिरका, **परिपूर्णत्वम्** ભારે લાગવું भरा होना, **कासः** કાસ कास, **श्वासः** શ્વાસ श्वास,

१४. परिपूर्णत्वं—प्रतिपूरणं (क. घ. छ. ठ.)
,, ,, —परिपूरणं (ग.)
,, अरोचकश्चेति—तथारोचक इति (ख.)

स्वरभेदः સ્વરભેદ स्वरभेद, श्लेष्मणः કફની कफका, छर्दनम् ઉલટી वमन, शोणित- લોહીનું रक्तका, ष्ठीवनम् થૂંકવું थूकना, पार्श्व- પડખાંઓમાં पार्श्वोंमें, संरोजनम् પીડા पीड़ा, अंसावमर्दः ખભા ટૂટવા कन्धोंका टूटना, ज्वरः જ્વર ज्वर, अतीसारः અતીસાર अतीसार, अरोचकः च इति અને અરુચિ और अरोचक ॥ १४ ॥

14. Thereafter appear the eleven pathognomic symptoms of the disease. They are— fulness of the head, cough, dyspnea, loss of voice, vomiting of mucus, expectoration of blood, pain in the sides, kneading pains in the shoulders, fever, diarrhea and anorexia.

शोषस्य साध्यासाध्यलक्षणानि—

**तत्रापरिक्षीणबलमांसशोणितो बलवानजातारिष्टः सर्वैरपि शोषलिङ्गैरुपद्रुतः साध्यो ज्ञेयः। बलवानुपचितो हि सहत्वाद्व्याध्यौषधबलस्य कामं सुबहुलिङ्गोऽप्यल्पलिङ्ग एव मन्तव्यः ॥ १५ ॥**

तत्र તેઓમાં इनमें, अपरिक्षीण- નથી ક્ષીણ થયાં क्षीण नहीं हुए, बल- બળ बल, मांस- માંસ मांस, शोणित- અને રક્ત જેનાં એવો तथा रक्त जिसके ऐसे, बलवान् બળવાન बलवान, अजातारिष्टः અને નથી ઉત્પન્ન થયાં અરિષ્ટ જેને એવો રોગી अरिष्ट जिसको उत्पन्न न हुए हों ऐसे रोगीको, सर्वैः अपि સઘળાંય सम्पूर्ण, शोषलिङ्गैः શોષનાં લક્ષણોથી शोषके लक्षणोंसे, उपद्रुतः યુક્ત હોવા છતાં संयुक्त होने पर भी, साध्यः સાધ્ય साध्य, ज्ञेयः જાણવો समझना चाहिए, हि કેમકે क्योंकि, बलवान् બળવાન बलवान, उपचितः તથા ઉપચિત રોગી तथा मांसादिसे संवृद्ध रोगी, व्याधि- વ્યાધિ व्याधि, औषध- તથા ઔષધનાં औषधके, बलस्य બળને बलको, सहत्वात् સહન કરી શકે છે તેથી सहन कर सकता है इससे, कामम् ભલે चाहे, सुबहुलिङ्गः ઘણાં લક્ષણવાળો હોય बहुत लक्षणोंवाला हो, अपि તો પણ तो भी, अल्पलिङ्गः થોડાં લક્ષણવાળો अल्प लक्षणोंवाला, मन्तव्यः માનવો જોઈએ मानना चाहिए ॥ १५ ॥

15. Now a patient who has not suffered a general loss of strength, flesh and blood, who is strong and in whom the fatal symptoms have not appeared, even if he presents all the rest of the symptoms of consumption, is to be considered curable. A strong man, well nourished, and able to tolerate the strength both of disease and medicine, is to be regarded as a mild case although affected with all kinds of symptoms.

**दुर्बलं त्वतिक्षीणबलमांसशोणितमल्पलिङ्गमजातारिष्टमपि बहुलिङ्गं जातारिष्टं च विद्यात्, असहत्वाद्व्याध्यौषधबलस्य; तं परिवर्जयेत्, क्षणेनैव हि प्रादुर्भवन्त्यरिष्टानि; अनिमित्तश्चारिष्टप्रादुर्भाव इति ॥ १६ ॥**

अतिक्षीण- અતિક્ષીણ अतिक्षीण, बल- બળ बल, मांस- માંસ मांस, शोणितम् અને રક્તવાળા रक्तवाले, अल्पलिङ्गम् થોડાં લક્ષણવાળા थोड़े लक्षणवाले, अजातारिष्टम् અરિષ્ટ લક્ષણો પેદા ન થયાં હોય अरिष्ट लक्षणोंके न उत्पन्न होने पर, अपि તો પણ भी, दुर्बलम् દુર્બલ માણસને दुर्बल मनुष्यको, तु તો तो, व्याधि- રોગ रोग, औषध- તથા ઔષધનાં और औषधके, बलस्य બળને बलको, असहत्वात् નહિ સહન કરનારપણાને લીધે सहन नहीं करसकनेवाला होनेसे, बहुलिङ्गम् બહુ લક્ષણવાળો बहुत लक्षणोंवाला, जातारिष्टम् च અરિષ્ટ લક્ષણો ઉત્પન્ન થયાં હોય એવો उत्पन्न अरिष्टोंवाला, विद्यात् જાણવો जानना चाहिए, तम् તેની इसको, परिवर्जयेत् ચિકિત્સા ન કરવી चिकित्सा न करे, हि

१५. अपरिक्षीणबलमांस—अपरिक्षीणमांस (क. घ. न.)
,, बलवानुपचितो—बलवर्णोपचयोपचितो (ख.)
,, ,, —बलवर्णोपचितो (घ. त.)
,, सहत्वाद्—सहिष्णुत्वाद् (त.)

१६. क्षणेनैव हि—क्षणेन हि (ख. घ.)
,, अनिमित्तः—अन्यनिमित्तः (त.)

કારણકે क्योंकि, क्षणेन एव ક્ષણમાં क्षणभरमें, अरिष्टानि અરિષ્ટ લક્ષણો अरिष्ट, प्रादुर्भवन्ति ઉત્પન્ન થાય છે उत्पन्न हो जाते हैं, अरिष्ट- અને અરિષ્ટની और अरिष्टकी, प्रादुर्भावः च ઉત્પત્તિ उत्पत्ति, अनिमित्तः इति કારણ વિના જ છે बिना कारणके ही है ॥ १६ ॥

16. But the patient who is weak and is greatly reduced in strength, flesh and blood, even if he presents but mild symptoms and no fatal prognosis, is to be considered as a case of severe type and a fatal prognosis, because he is unable to tolerate the force of disease and medication. Such a patient should be considered incurable, for in no time he will develop the fatal symptoms; and the fatal symptoms develop abruptly.

अध्यायोक्तार्थसंग्रहः —

तत्र श्लोकः—

**समुत्थानं च लिङ्गं च यः शोषस्यावबुध्यते ।**
**पूर्वरूपं च तत्त्वेन स राज्ञः कर्तुमर्हति ॥ १७॥**

तत्र श्लोकः તે વિષયમાં ઉપસંહારનો શ્લોક છે કે उस विषयमें उपसंहारका श्लोक है कि, यः જે વૈદ્ય जो वैद्य, शोषस्य શોષનાં शोषके, समुत्थानम् च કારણ कारण, लिङ्गम् च લક્ષણ लक्षण, पूर्वरूपम् च અને પૂર્વરૂપને और पूर्वरूपको, तत्त्वेन યથાર્થ રીતે पूर्णरूपसे, अवबुध्यते જાણે છે जानता है, सः તે જ वही, राज्ञः રાજાની राजाकी, कर्तुम् ચિકિત્સા કરવાને चिकित्सा करनेके लिए, अर्हति યોગ્ય છે योग्य है ॥ १७ ॥

Here is the recapitulatory verse—

17. He who knows correctly the etiology, the symptoms and the premonitory symptoms of consumption, is worthy of treating the king.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने शोषनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा प्रतिसंस्कृत इस शास्त्रके, निदानस्थाने નિદાનસ્થાન વિષે निदानस्थानमें, शोषनिदानम् 'શોષ-નિદાન' 'शोषनिदान', नाम નામનો नामका, षष्ठः છઠ્ઠો छठा, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ ६ ॥

6. Thus in the section on Pathology in the treatise complied by Agnivesa and revised by Caraka, the sixth chapter entitled "The Pathology of Consumption" is completed.

## सप्तमोऽध्यायः ।

## સાતમો અધ્યાય अध्याय सातवाँ

## Chapter VII

उन्मादनिदानाध्यायोपक्रमः —

**अथात उन्मादनिदानं व्याख्यास्यामः ॥ १ ॥**
**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

अथ अतः હવે અહીંથી अब आगे, उन्मादनिदानम् 'ઉન્માદનિદાન' નામના અધ્યાયનું 'उन्मादनिदान' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણેજ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the Pathology of Insanity.

2. Thus declared the worshipful Atreya.

उन्मादसंख्या--

**इह खलु पञ्चोन्मादा भवन्ति; तद्यथा—वात-पित्तकफसन्निपातागन्तुनिमित्ताः ॥ ३ ॥**

इह खलु આ શાસ્ત્રમાં इस शास्त्रमें, पञ्च પાંચ પ્રકારના पांच प्रकारके, उन्मादाः ઉન્માદ उन्माद, भवन्ति છે हैं, तत् यथा જેમકે जैसेकि, वात- વાતજન્ય वातजन्य, पित्त- પિત્તજન્ય पित्तजन्य कफ- કફજન્ય कफजन्य, सन्निपात- સન્નિપાતજન્ય सन्निपातजन्य, आगन्तु- निमित्ताः તથા આગન્તુ-કારણજન્ય तथा आगन्तुकारणजन्य ॥ ३ ॥

3. There are five kinds of insanity. They are due respectively to vata, pitta, kapha, to all the three humors combined and to extraneous causes.

उन्मादस्य निदानपूर्विका संप्राप्तिः —

**तत्र दोषनिमित्ताश्चत्वारः पुरुषाणामेवंविधानां क्षिप्रमभिनिर्वर्तन्ते; तद्यथा—भीरूणामुपक्लिष्टसत्त्वानामुत्सन्नदोषाणां समलविकृतोपहितान्यनुचितान्याहारजातानि वैषम्ययुक्तेनोपयोगविधिनोपयुञ्जानानां तन्त्रप्रयोगमपि विषममाचरतामन्याश्च शरीरचेष्टा विषमाः समाचरतामत्युपक्षीणदेहानां व्याधिवेगसमुद्भ्रमितानामुपहतमनसां वा कामक्रोधलोभहर्षभयमोहायासशोकचिन्तोद्वेगादिभिर्भूयोऽभिघाताभ्याहतानां वा मनस्युपहते बुद्धौ च प्रचलितायामभ्युदीर्णा दोषाः प्रकुपिता हृदयमुपसृत्य मनोवहानि स्रोतांस्यावृत्य जनयन्त्युन्मादम् ॥ ४ ॥**

तत्र તેમાં इनमें, दोषनिमित्ताः દોષથી ઉત્પન્ન થતા दोषजन्य, चत्वारः ચાર પ્રકારના ઉન્માદ चार प्रकारके उन्माद, एवंविधानाम् આવા પ્રકારના निम्न प्रकारके, पुरुषाणाम् પુરુષોમાં पुरुषोंमें, क्षिप्रम् એકદમ शीघ्र, अभिनिर्वर्तन्ते ઉત્પન્ન થાય છે उत्पन्न हो जाते हैं, तत् यथा જેમકે जैसे कि, भीरूणाम् ડરપોક डरपोक, उपक्लिष्ट- રજોગુણ તથા તમોગુણથી ઉપઘાત પામેલા रजोगुण और तमोगुणसे आक्रान्त, सत्त्वानाम् મનવાળા मनवाले, उत्सन्नदोषाणाम् વધેલા દોષવાળા बढ़ेहुए दोषवाले, समल- મલિન मलिन, विकृत- વિકૃત विकृत, उपहितानि દૂષિત दूषित, अनुचितानि તથા અનુચિત तथा अनुचित, आहारजातानि અનેક આહારોનું अनेक आहारोंको, वैषम्ययुक्तेन પ્રતિકૂલ प्रतिकूल, उपयोग- ઉપયોગના उपयोगके, विधिना- વિધિથી विधिसे, उपयुञ्जानानाम् ભોજન કરનારાનું खानेवाले, तन्त्रप्रयोगम् તન્ત્રપ્રયોગો तन्त्रप्रयोगोंको, अपि પણ भी, विषमम् વિષમ रीते प्रतिकूल विधिसे, आचरताम् કરનારાનું सेवन करनेवाले, अन्याः च અને બીજી और अन्य, विषमाः વિષમ પ્રકારની विषम प्रकारकी, शरीरचेष्टाः શરીરની ચેષ્ટાઓ शरीरचेष्टाओंको, समाचरताम् કરનારાનું करनेवाले, अत्युपक्षीण- અતિક્ષીણ अतिक्षीण, देहानाम् શરીરવાળાનું शरीरवाले, व्याधि-वेग- રોગના વેગથી रोगके बलसे, समुद्भ्रमितानाम् અસ્વસ્થ રહેનારા अस्वस्थ प्रकृतिवाले, काम- અથવા કામ अथवा काम, क्रोध- ક્રોધ क्रोध, लोभ- લોભ लोभ, हर्ष- હર્ષ हर्ष, भय- ભય भय, मोह- મોહ मोह, आयास- શ્રમ आयास, शोक- શોક शोक, चिन्ता- ચિંતા चिन्ता, उद्वेग- ઉદ્વેગ उद्वेग, आदिभिः વગેરેથી आदिसे, भूयः વારંવાર वारंवार, उपहत-मनसाम् वा વિઘાત પામેલ મનવાળા विकृत मनवाले, अभिघात-अभ्याहतानाम् वा અથવા ઘા લાગેલા મનુષ્યોનું और चोटोंसे घायल हुए मनुष्योंका, मनसि મન मनके, उपहते ઉપહત થવાથી पीड़ित हो जानेसे, बुद्धौ च અને બુદ્ધિ और बुद्धिके, प्रचलितायाम् ચલાયમાન થતાં विचलित होनेसे, अभ्युदीर्णाः ઉદીર્ણ થયેલ उदीर्ण, दोषाः દોષો दोष, प्रकुपिताः પ્રકુપિત થઈને प्रकुपित हो कर, हृदयम् હૃદયમાં हृदयमें, उपसृत्य પહોંચી જઈ पहुंच कर, मनोवहानि મનોવહ मनोवह, स्रोतांसि સ્રોતોને स्रोतोंको, आवृत्य આવૃત કરીને आवृत करके, उन्मादम् ઉન્માદને उन्मादको, जनयन्ति ઉત્પન્ન કરે છે उत्पन्न करते हैं ॥ ४ ॥

---

४. व्याधिवेगसमुद्भ्रमितानामुपहतमनसाम्—व्याधिवेगसमुद्भ्रामितोपहतमनसाम् (ध.)

,, °कामक्रोधलोभ –°कामरागक्रोधलोभ (च. ज.)

,, अभ्युदीर्णा दोषाः – अभ्युदीरणत्वाद्दोषाः (न.)

,, ,, – अभ्युदीर्णत्वाद्दोषाः (ग. ध.)

4. Of these five, the four which arise from the morbidity of humors, develop most readily in men of the following description viz., the faint-hearted, those suffering from mental shock, the humor-ridden, those who make use, in a manner forbidden by the dietetic rules, of improper dietary articles, which are unclean and ill-prepared; those who abuse the general rules of healthful living, as also those resorting to other kinds of wrongful bodily activity; those who are exceedingly wasted in body; those who are crazed with the severity of disease, or those whose minds have been impaired by the attacks of lust, anger, greed, excitement, fear, infatuation, fatigue, grief, anxiety, regret and the like, and also those that are injured by trauma. In such persons the mind, having been impaired and the understanding unsettled, the exacerbated humor getting further provoked reaching the heart (the brain) and blocking the channels of sensory communication, brings about insanity.

उन्मादस्य प्रत्यात्मलक्षणम्—

**उन्मादं पुनर्मनोबुद्धिसंज्ञाज्ञानस्मृतिभक्तिशील-चेष्टाचारविभ्रमं विद्यात् ॥ ५ ॥**

**मनः-** મન मन, **बुद्धि-** બુદ્ધિ बुद्धि, **संज्ञा-** સંજ્ઞા संज्ञा, **ज्ञान-** જ્ઞાન ज्ञान, **स्मृति-** સ્મૃતિ स्मृति, **भक्ति-** ઇચ્છા इच्छा, **शील-** શીલ शील, **चेष्टा-** ચેષ્ટા चेष्टा, **आचार-** અને આચારના और आचारके, **विभ्रमम्** વિકૃત થવાને बिगड़नेको, **पुनः उन्मादम्** ઉન્માદ उन्माद, **विद्यात्** જાણવો जानना चाहिए ॥ ५ ॥

५. चेष्टाचारविभ्रमं—चेष्टाचारविभ्रंशं (ख. च. ध.)

5. Insanity is to be known as the unsettled condition of the mind, understanding, consciousness, perception, memory, inclination, character, behaviour and conduct.

उन्मादस्य पूर्वरूपाणि—

**तस्येमानि पूर्वरूपाणि: तद्यथा—शिरसः शून्यता, चक्षुषोराकुलता, स्वनः कर्णयोः, उच्छ्वासस्याधिक्यम्, आस्यसंस्रवणम्, अनन्नाभिलाषारोचकाविपाकाः, हृद्ग्रहः, ध्यानायाससंमोहोद्वेगाश्चास्थाने, सततं लोमहर्षः, ज्वरश्चाभीक्ष्णम्, उन्मत्तचित्तत्वम्, उदर्दित्वम्, अर्दिताकृतिकरणं च व्याधेः, स्वप्ने चाभीक्ष्णं दर्शनं भ्रान्तचलितानवस्थितानां रूपाणामप्रशस्तानां च तिलपीडकचक्राधिरोहणं वातकुण्डलिकाभिश्चोन्मथनं निमज्जनं च कलुषाणामम्भसामावर्ते चक्षुषोश्चापसर्पणमिति (दोषनिमित्तानामुन्मादानां पूर्वरूपाणि भवन्ति) ॥ ६ ॥**

**तस्य** તેનાં इसके, **इमानि** આ ये, **पूर्वरूपाणि** પૂર્વરૂપો છે पूर्वरूप हैं, **तद् यथा** જેમકે जैसेकि, **शिरसः** માથાની शिरकी, **शून्यता** શૂન્યતા शून्यता, **चक्षुषोः** આંખોની आंखोंकी, **आकुलता** વ્યાકુલતા आकुलता, **कर्णयोः** કાનમાં कानोंमें, **स्वनः** અવાજ शब्द, **उच्छ्वासस्य** ઉચ્છ્વાસની उच्छ्वासकी, **आधिक्यम्** અધિકતા अधिकता, **आस्य-** મોઢામાંથી मुखसे, **संस्रवणम्** લાળનું ઝરવું लालास्राव, **अनन्नाभिलाष-** ભોજનની ઇચ્છા ન થવી भोजनकी अनिच्छा, **अरोचक-** અરુચિ अरोचक, **अविपाकाः** અવિપાક अविपाक, **हृद्ग्रहः** હૃદયનું જકડાઈ જવું हृदयका जकड़ाना, **अस्थाने** અસ્થાને बिना स्थानके, **ध्यान-**

६. चक्षुषोराकुलता—चक्षुषोरस्वस्थता (ध.)

,, उच्छ्वासस्याधिक्यम, आस्यसंस्रवणम—उच्छ्वासाधिक्यमसंस्रवणम् (प.)

,, ज्वरश्चाभीक्ष्णम्—ज्वरश्चाभीक्ष्णमभीक्ष्णम् (क.)

,, उदर्दित्वम, अर्दिताकृतिकरणम्—अर्दिताकृतिकरणमुन्मर्दितत्वम् (ध.)

ध्यान ध्यान, आयास- थाक थकान, संमोह- मूर्च्छा मूर्च्छा, उद्वेगाः च अने उद्वेग और उद्वेग, सततम् निरंतर निरंतर, लोमहर्षः रुंवाडां ऊभां थवां रोमका खड़ा होना, अभीक्ष्णम् वारंवार बारबार, ज्वरः ताव ज्वर, उन्मत्त-चित्तत्वम् चित्तनुं भ्रमण चित्तका भ्रमण, उदर्दित्वम् उदर्दवाळापणुं उदर्दसे युक्त होना, व्याधेः रोगनां रोगके, अर्दित- अर्दित जेवां अर्दितरोग जैसे, आकृति- लक्षणो चिह्नोंका, करणम् धारण करवां धारण करना, स्वप्ने स्वप्नमां स्वप्नमें, भ्रान्त- भमता भ्रान्त, चलित- चंचळ चंचल, अनवस्थितानाम् अस्थिर अस्थिर, अप्रशस्तानाम् च तथा अयोग्य तथा निन्दित, रूपाणाम् दृश्यो दृश्योंको, अभीक्ष्णम् वारंवार बारबार, दर्शनम् च देखवां देखना, तिल- पीडक- चक्र- घाणी कोल्हू, अधिरोहणम् पर चडवुं पर सवारी करना, वात- कुण्डलिकाभिः वातचक्रथी वातकुण्डलिकासे, उन्मथनम् च उन्मथित थवुं मथित होना, कलुषाणाम् डोळा मलिन, अम्भसाम् पाणीनी जलके, आवर्ते भमरीओमां भंवरोंमें, निमज्जनम् च डूबी जवुं डूबना, चक्षुषोः अने आंखो और आंखोका, अपसर्पणम् इति त्रांसी थई जवी टेढ़ा होना, दोष- निमित्तानाम् दोषजनित दोषजन्य, उन्मादानाम् उन्मादोनां उन्मादोंके, पूर्वरूपाणि आ पूर्वरूपो ये पूर्वरूप, भवन्ति थाय छे होते हैं) ॥ ६ ॥

6. These are its premonitory symptoms— viz., feeling of voidness in the head, restlessness of the eyes, noises in the ears, hurried respiration, dribbling of the mouth, inappetence, anorexia, misdigestion, cardiac spasm, misplaced mental absorption, fatigue, infatuation and anxiety, constant horripilation, frequent pyrexia, intoxicated condition of the mind; pain in the upper half of the body; the appearance of the features presented in facial paralysis, and the frequent seeing in dreams of roving, moving, unstable and inauspicious forms, or of oneself sitting mounted on the wheel of the oil-press, or being churned as it were by whirl-winds, or the sinking of oneself in whirl-pools of tinged waters and the retraction of the eye-balls. These are the premonitory symptoms of the insanity induced by the provocation of the morbid humors.

वातोन्मादस्य लक्षणम्—

**ततोऽनन्तरमेवमुन्मादाभिनिर्वृत्तिरेव। तत्रेदमुन्मादविशेषविज्ञानं भवति; तद्यथा—परिसरणमजस्रम्, अक्षिभ्रुवौष्ठांसहन्वग्रहस्तपादाङ्गविक्षेपणमकस्मात्, सततमनियतानां च गिरामुत्सर्गः, फेनागमनमास्यात्, अभीक्ष्णं स्मितहसितनृत्यगीतवादित्रसंप्रयोगाश्चास्थाने, वीणावंशशङ्खशम्यातालशब्दानुकरणमसाम्ना, यानमयानैः, अलङ्करणमनलङ्कारिकैर्द्रव्यैः, लोभश्चाभ्यवहार्येष्वलब्धेषु, लब्धेषु चावमानस्तीव्रमात्सर्यं च, कार्श्यं, पारुष्यम्, उत्पिण्डितारुणाक्षता, वातोपशयविपर्यासादनुपशयता च; इति वातोन्मादलिङ्गानि भवन्ति(१);**

ततः अनन्तरम् एवम् ते पछी आ प्रमाणे उसके पीछे इस तरह, उन्माद- उन्मादनी उन्मादकी, अभिनिर्वृत्तिः एव उत्पत्ति ज थाय छे उत्पत्ति ही होती है, तत्र त्यां यहां, उन्मादविशेष- उन्मादना वात आदि भेदनुं उन्मादके वात आदि भेदका, इदम् आ यह, विज्ञानम् लक्षण लक्षण, भवति छे है, तत् यथा जेमके जैसे कि, अजस्रम् सर्वदा निरन्तर, परिसरणम् फर्यां करवुं घूमना, अकस्मात् अकस्मात् बिना कारणके, अक्षिभ्रुव- आंख,

७-(१. अक्षिभ्रुवौष्ठांसहन्वग्रहस्तपादाङ्गविक्षेपणमकस्मात् – अंसहन्वग्रहस्तपादाङ्गाक्षिभ्रुविक्षेपश्चाकस्मात (च. ध.)

,, फेनागमनम्—फेनागमः (ग.)

,, लब्धेषु चावमानस्तीव्रमात्सर्यं–लब्धेषु चावमानः, तीव्रत्वम्, मात्सर्यं (च. ध.)

,, उत्पिण्डितारुणाक्षता–उत्पिण्डितारुणाक्षित्वम् (ग.)

भमर आंख-भ्रू, ओष्ठ- હોઠ ओष्ठ, अंस- ખભા स्कन्ध, हनु- દાઢી हनु, अग्रहस्त- હાથના અગ્રભાગ हाथके अग्रभाग, पाद- પગ पैर, अङ्ग- તથા બીજા અંગોને तथा दूसरे अंगोंको, विक्षेपणम् ફેંકવાં चलाना, सततम् સતત निरन्तर, अनियतानाम् સંબંધ વગરની असंबद्ध, गिराम् च उत्सर्गः વાણી બોલવી बोलना, आस्यात् મોઢામાંથી मुखसे, फेन- ફીણનું झागका, आगमनम् આવવું आना, अस्थाने च અસ્થાને विना स्थानके, अभीक्ष्णम् વારંવાર बारबार, स्मित- સ્મિત કરવું मुसकराना, हसित- હસવું हंसना, नृत्य- નાચવું नाचना, गीत- ગાવું गाना, वादित्र- વાજિંત્રો वाजा, संप्रयोगाः વગાડવાં बजाना, अस्तारना- ઊંચેથી ऊंचेसे, वीणा- વીણા वीणा, वंश- વાંસળી बंसी, शंख- શંખ शंख, शम्या- જમણા હાથથી વગાડવાના दाहिने हाथसे बजानेके; ताल- તથા ડાબા હાથથી વગાડવાના और बायें हाथसे बजानेके, शब्द- શબ્દોનું शब्दोंका, अनुकरणम् અનુકરણ કરવું अनुकरण करना, अयानैः જેના પર સ્વારી ન થતી હોય તેના પર बिना सवारीकी वस्तुओंपर, यानम् સવારી કરવી सवारी करना, अनलङ्कारिकैः અલંકાર માટે અનુપયોગી अलंकारके अयोग्य, द्रव्यैः ચીજોથી द्रव्योंसे, अलङ्करणम् શણગાર કરવો अलङ्कार करना, अलब्धेषु નહિ મળેલા अप्राप्त, अभ्यवहार्येषु આહારમાં आहारमें, लोभः च અત્યંત ઇચ્છા अधिक लालसा, लब्धेषु અને મળેલી આહારની વસ્તુઓમાં और प्राप्त आहारकी वस्तुओंमें, अवमानः च તિરસ્કાર तिरस्कार, तीव्रमात्सर्यम् च તથા તીવ્ર માત્સર્ય और तीव्रमत्सर, कार्श्यम् કૃશતા कृशता, पारुष्यम् કઠોરતા कठोरता, उत्पिण्डित-अरुणाक्षता આંખો ફૂલી જવી અને લાલ થવી आंखोंका फूला होना और इंटसा लाल होना, वात-उपशय- તથા વાતને શાંત કરનારાં દ્રવ્યોથી तथा वातको शान्त करनेवाले द्रव्योंसे, विपर्यासात् વિપરીત દ્રવ્યોનું प्रतिकूल द्रव्योंका, अनुपशयता च માફક ન આવવું अनुकूल न आना, इति એ ये, वात-उन्माद- વાતજનિત ઉન્માદનાં वातजनित उन्मादके, लिङ्गानि લક્ષણો लक्षण, भवन्ति છે हैं (१);

7-(1). Immediately after these indications insanity manifests itself. The signs and symptoms of the different types of insanity are as follows:—They are— constant rambling, meaningless jerking of the eyes, eye-brows, lips, shoulders, jaws, foreparts of the arms and feet and other body-parts; talking interminably and incoherently; the flowing of froth from the mouth, continuous and inopportune smiling, laughing, dancing, singing and playing on instruments; giving loud imitations of the sounds of the lute, flute, conch and cymbals of the left and the right hand, trying to ride on mounts not in vogue, adorning oneself with queer and un-ornamental objects; hankering after unobtainable viands, and actual contempt or extreme niggardliness for those in actual possession, emaciation and roughness of the body and swelling and redness of the eyes; non-homologation to the things that are antagonistic to the things that are alleviative of vata—these are the symptoms of insanity of the vata type.

પિત્તોન્માદસ્ય લક્ષણમ્---

**अमर्षः, क्रोधः, संरम्भश्चास्थाने, शस्त्रलोष्टूकशाकाष्ठमुष्टिभिरभिहननं स्वेषां परेषां वा, अभिद्रवणं, प्रच्छायशीतोदकान्नाभिलाषः, संतापश्चातिवेलं, ताम्रहरितहारिद्रसंरब्धाक्षता, पित्तोपशयविपर्यासादनुपशयता च; इति पित्तोन्मादलिङ्गानि भवन्ति (२);**

अमर्षः અસહિષ્ણુતા सहन न करना, क्रोधः કોપ क्रोध, अस्थाने च અસ્થાને बिना स्थानके, संरम्भः ગુસ્સો जोश, शस्त्र- શસ્ત્ર शस्त्र, लोष्टू માટીનું ઢેફું

७-(२). °कशाकाष्ठमुष्टिभिरभिहननं—°काष्ठमुष्टिभिरभिद्रवणम् (ख.ठ.ग.)
,, °संरब्धाक्षता—°संरब्धाक्षित्वम् (ग.)

मिट्टीका ढेला, **कशा-** ચાબુક चाबुक, **काष्ठ-** લાકડી लकड़ी, **मुष्टिभिः** મૂઠી વગેરેથી मुक्के आदिसे, **स्वेषाम्** પોતાનાં अपने, **परेषाम् वा** અથવા પારકાંઓને या परायोंको, **अभिहननम्** મારવું मारना, **अभिद्रवणम्** દોડવું दौड़ना, **प्रच्छाय-** છાંયડા छाया, **शीत-** તથા शीतल तथा शीतल, **उदक-** જલ जल, **अन्न-** તેમજ અન્નની और अन्नकी, **अभिलाषः** અભિલાષા चाह, **अतिवेलम् च** લાંબા વખત સુધી बहुत देर तक, **संतापः** સંતાપ सन्ताप, **ताम्र-** લાલ लाल, **हरित-** લીલી हरा, **हारिद्र-** પીળી पीला, **संरब्ध-** તથા ક્રોધયુકત एवं क्रुद्ध, **अक्षता-** આંખોવાળાપણું आंखोका होना, **पित्त-** પિત્તને पित्तको, **उपशय-** શાંત કરનારાં દ્રવ્યોથી शान्त करनेवाले द्रव्योंसे, **विपर्यासात्** વિપરીત દ્રવ્યોનું विपरीत द्रव्योंका, **अनुपशयता च** માફક ન આવવું अनुकूल न आना, **इति** એ ये, **पित्त-उन्माद-** પિત્તજનિત ઉન્માદનાં पित्तोन्मादके, **लक्षणानि** લક્ષણો लक्षण, **भवन्ति** છે हैं (२);

7-(2). Irritability, anger and excitement in the wrong place; striking oneself or others with weapons, brick-bats, whips, sticks and with fists; running about; craving for shade, cold water and food; prolonged attacks of anguish; coppery, green, yellow and furious look of the eyes; and non-homologation to the things that are antagonistic to articles that are alleviative of pitta—these are the symptoms of the pitta type of insanity.

श्लेष्मोन्मादस्य लक्षणम्—

**स्थानमेकदेशे, तूष्णींभावः, अल्पशश्चङ्क्रमणं, लालाशिङ्घाणकस्रवणम्, अनन्नाभिलाषः, रहस्कामता, बीभत्सत्वं, शौचद्वेषः, स्वप्ननित्यता, श्वयथुराननेे, शुक्लस्तिमितमलोपदिग्धाक्षत्वं, श्लेष्मोपशयविपर्यासादनुपशयता च; इति श्लेष्मोन्मादलिङ्गानि भवन्ति (३);**

**एकदेशे** એકજ ઠેકાણે एक स्थान पर, **स्थानम्** પડી રહેવું बैठ रहना, **तूष्णींभावः** ચૂપ રહેવું चूप रहना, **अल्पशः** થોડુંજ थोड़ा, **चङ्क्रमणम्** ફરવું चलना फिरना, **लाला-** લાળ लाला, **शिङ्घाणक-** તથા લીંટનું एवं नाककी मैलका, **स्रवणम्** ઝરવું बहना, **अनन्नाभिलाषः** અન્નની ઇચ્છા ન થવી भोजनकी अनिच्छा, **रहस्कामता** એકાંતપ્રિયતા एकान्तप्रियता, **बीभत्सत्वम्** સૂગ ઉપજાવનારપણું जुगुप्साजनकता, **शौचद्वेषः** ચોખ્ખાઇનો દ્વેષ पवित्रतासे द्वेष, **स्वप्ननित्यता** ઊંઘ્યા કરવું नित्य सोना, **आनने** મોઢા પર मुखपर, **श्वयथुः** સોજો शोथ, **शुक्ल-** સફેદ सफेद, **स्तिमित-** નિશ્ચળ घट्ट, **मल-** મળથી मलसे, **उपदिग्ध-** **अक्षत्वम्** લેપાયેલ આંખોવાળાપણું आखोंका भरा होना, **श्लेष्म-** કફને कफको, **उपशय-** શાંત કરનારાં દ્રવ્યોથી शान्त करनेवाले द्रव्योंसे, **विपर्यासात्** વિપરીત દ્રવ્યોનું विपरीत द्रव्योंका, **अनुपशयता च** માફક ન આવવું अनुकूल न आना, **इति** એ ये, **श्लेष्म-उन्माद-** કફજનિત ઉન્માદનાં कफोन्मादके, **लिङ्गानि** લક્ષણો लक्षण, **भवन्ति** છે हैं (३);

7-(3). Being rooted to one spot, silence, little disposition for movement, dribbling of saliva or nasal discharge, disinclination for food, love of solitude, offensiveness, aversion to cleanliness, constant somnolence, edema of the face; whiteness, fixity and covering of mucus-discharge of the eyes and non-homologation to the things that are antagonistic to articles that are alleviative of kapha—these are the symptoms of the kapha type of insanity.

सान्निपातिकोन्मादस्य लक्षणम्—

**त्रिदोषलिङ्गसन्निपाते तु सान्निपातिकं विद्यात्; तमसाध्यमाचक्षते कुशलाः ॥ ७ ॥**

**त्रिदोष-** ત્રણે દોષનાં तीनों दोषोंका, **लिङ्ग-** લક્ષણો लक्षण, **सन्निपाते तु** મિશ્રિત થતાં एक साथ होने पर,

७. एकदेशे—एकावकाशे (ग.)

७. आचक्षते कुशलाः—आचक्षते (च.)

सान्निपातिकम् સાન્નિપાતિક ઉન્માદ सन्निपातजन्य उन्माद, विद्यात् જાણવો समझना चाहिए, कुशलाः કુશળ વૈદ્યો विद्वान वैद्य, तम् તેને इसे, असाध्यम् અસાધ્ય असाध्य, आचक्षते કહે છે कहते हैं ॥ ७ ॥

7. That form of the insanity which manifests the symptoms of all the three morbid humors is to be known as the insanity of the tri-discordance type. The specialists declare that such insanity is uncurable.

साध्यानां चिकित्सितम्—

**साध्यानां तु त्रयाणां साधनानि—स्नेहस्वेदवमनविरेचनास्थापनानुवासनोपशमननस्तःकर्मधूमधूपनाञ्जनावपीडप्रधमनाभ्यङ्गप्रदेहपरिषेकानुलेपनवधबन्धनावरोधनवित्रासनविस्मापनविस्मारणापतर्पणसिराव्यधनानि, भोजनविधानं च यथास्वं युक्त्या, यच्चान्यदपि किंचिन्निदानविपरीतमौषधं कार्यं तदपि स्यादिति ॥ ८ ॥**

साध्यानाम् સાધ્ય साध्य, त्रयाणाम् तु ત્રણ ઉન્માદોની तीन उन्मादोंके, साधनानि ચિકિત્સા उपाय, स्नेह- સ્નેહન स्नेहन, स्वेद- સ્વેદન स्वेदन, वमन- વમન वमन, विरेचन- વિરેચન विरेचन, आस्थापन- આસ્થાપન आस्थापन, अनुवासन- અનુવાસન अनुवासन, उपशमन- ઉપશમન उपशमन, नस्तःकर्म- નસ્યકર્મ नस्यकर्म, धूम- ધૂમપાન धूम, धूपन- ધૂપન धूपन, अञ्जन- અંજન अंजन, अवपीड- અવપીડન अवपीड़न, प्रधमन- પ્રધમન प्रधमन, अभ्यङ्ग- અભ્યંગ अभ्यङ्ग, प्रदेह- જાડો લેપ प्रदेह, परिषेक- પરિષેક परिषेक, अनुलेपन- લેપ अनुलेपन, वध- મૃતતુલ્ય કરવું मृततुल्य करना, बन्धन- બન્ધન बन्धन, अवरोधन- અંધારા ઓરડા વગેરેમાં બાંધ કરી દેવું अन्धेरे कमरे आदिमें बन्द कर देना, वित्रासन- ત્રાસ આપવો डराना, विस्मापन- વિસ્મય પમાડવું चकित करना, विस्मारण- ભૂલાવી દેવું भुलाना, अपतर्पण- અપતર્પણ अपतर्पण, सिराव्यधनानि સિરાવેધ सिरावेध, यथास्वम् તે તે દોષને અનુસરી प्रत्येक दोषके अनुसार, युक्त्या માત્રા આદિના વિચારથી मात्रा आदिके विचारसे, भोजनविधानम् च ભોજન કરાવવું भोजन खिलाना, यत् च અને જે और जो, अन्यत् બીજું अन्य, अपि किंचित् કાંઈ પણ जो कुछ भी, निदान- विपरीतम् નિદાનથી વિપરીત निदानसे विपरीत, औषधम् ઔષધ હોય औषध हो, तत् अपि તેનો પણ उसे भी, कार्यम् स्यात् इति પ્રયોગ કરવો જોઈએ करना चाहिए ॥ ८ ॥

8. Of the other three which are curable, the following constitute the therapeutic measures:—Oleation, sudation, emesis, purgation, corrective and unctuous enemata, sudation, errhines, smoking, fumigation, eye-salves, nasal medications, insufflations, inunctions, applications, affusions, besmearing, shock-therapy by intimidating the patient with threat of death, chaining and confinement, frightening, inducing astonishment and forgetfulness, depletion and venesection, skilful regimen of diet according to indication and other suitable medications antagonistic to the nature of etiological factors.

भवति चात्र—

**उन्मादान् दोषजान् साध्यान् साधयेद्भिषगुत्तमः।**
**अनेन विधियुक्तेन कर्मणा यत् प्रकीर्तितम् ॥ ९ ॥**

अत्र च આ વિષયમાં इस विषयमें, भवति શ્લોક છે કે श्लोक है कि, उत्तमः શ્રેષ્ઠ श्रेष्ठ, भिषक् વૈદ્ય वैद्य, यत् प्रकीर्तितम् જે ઉપર કહેવામાં આવ્યું जो ऊपर कहा गया, अनेन એ इस, विधियुक्तेन વિધિપૂર્વક विधिसहित, कर्मणा કર્મથી कर्मसे, दोषजान् દોષજન્ય

८. अनुवासनोपशमन—अनुवासन (ग.)
,, धूमधूपन—धूपधूमपानं (क.)
,, वध—व्यध (ख.)
,, अवरोधन—अवबोधन (ग.)

९. साध्यान्—सम्यक् (ख. ग.)

त्रण दोषजन्य तीन, साध्यान् साध्य साध्य, उन्मादान् ઉન્માદોની उन्मादोंकी, साधयेत् ચિકિત્સા કરવી चिकित्सा करे ॥ ९ ॥

Here is a verse—

9. The expert physician should treat the curable types of insanity, which are born of morbid humors, by the therapeutic methods herein described.

आगन्तून्मादनिदानम्—

**यस्तु दोषनिमित्तेभ्य उन्मादेभ्यः समुत्थानपूर्वरूपलिङ्गवेदनोपशयविशेषसमन्वितो भवत्युन्मादस्तमागन्तुकमाचक्षते। केचित् पुनः पूर्वकृतं कर्माप्रशस्तमिच्छन्ति तस्य निमित्तम्। तस्य च हेतुः प्रज्ञापराध एवेति भगवान् पुनर्वसुरात्रेयः। प्रज्ञापराधाद्ध्ययं देवर्षिपितृगन्धर्वयक्षराक्षसपिशाचगुरुवृद्धसिद्धाचार्यपूज्यानवमत्याहितान्याचरति, अन्यद्वा किंचिदेवंविधं कर्माप्रशस्तमारभते; तमात्मना हतमुपघ्नन्तो देवादयः कुर्वन्त्युन्मत्तम् ॥१०॥**

यः उन्मादः જે ઉન્માદ जो उन्माद, तु તો तो, दोषनिमित्तेभ्यः દોષજ दोषजन्य, उन्मादेभ्यः ઉન્માદોથી उन्मादसे, समुत्थान- કારણ कारण, पूर्वरूप- પૂર્વરૂપ पूर्वरूप, लिङ्ग- રૂપ रूप, वेदना- વેદના वेदना, उपशय- અને ઉપશયની और उपशयकी, विशेष- ભિન્નતા भिन्नता, समन्वितः વાળો वाला, भवति હોય છે होता है, तम् તેને उस उन्मादको, आगन्तुकम् આગન્તુ आगन्तु, आचक्षते કહે છે कहते हैं, केचित् કેટલાક कोई, पुनः વળી तो, पूर्वकृतम् પૂર્વજન્મના पूर्वजन्मकृत, अप्रशस्तम् અપ્રશસ્ત निन्दित, कर्म- કર્મને कर्मको, तस्य તેનું उसका, निमित्तम् કારણ कारण, इच्छन्ति માને છે मानते हैं, प्रज्ञापराधः પ્રજ્ઞાપરાધ प्रज्ञापराध, एव જ ही, तस्य च તેનું उसका, हेतुः इति કારણ છે એમ कारण है ऐसा, भगवान् ભગવાન भगवान, आत्रेयः આત્રેય आत्रेय, पुनर्वसुः પુનર્વસુ કહે છે पुनर्वसु कहते हैं, अयम् આ મનુષ્ય यह मनुष्य, प्रज्ञापराधात् हि પ્રજ્ઞાપરાધથીજ प्रज्ञापराधके कारण ही, देव-ऋषि- દેવ-ઋષિ देव-ऋषि, पितृ- પિતૃઓ पितर, गन्धर्व- ગંધર્વ गन्धर्व, यक्ष- યક્ષ यक्ष, राक्षस- રાક્ષસ राक्षस, पिशाच- પિશાચ पिशाच, गुरु- ગુરુ गुरु, वृद्ध- વૃદ્ધ वृद्ध, सिद्ध- સિદ્ધ सिद्ध, आचार्य- આચાર્ય आचार्य, पूज्यान् તથા પૂજ્યોની और पूज्योंका, अवमत्य અવગણના કરીને तिरस्कार करके, अहितानि અહિત अहित, आचरति આચરણ કરે છે आचरण करता है, अन्यत् वा અથવા બીજું अथवा अन्य, किंचित् કોઈ कोई, एवंविधम् એવુંજ इसी प्रकारके, अप्रशस्तम् નિન્દિત निन्दित, कर्म- કર્મ कर्मका, आरभते આરંભે છે प्रारम्भ करता है, देवादयः દેવ આદિ देवादि, आत्मना પોતાથી જ अपने कार्यसे, हतम् હણાયેલ मृत बने, तम् તે પુરુષમાં उस पुरुषमें, उपघ्नन्तः પ્રવેશ કરતાં તેને आविष्ट होकर उसे, उन्मत्तम्- ઉન્મત્ત (ગાંડો) उन्मत्त, कुर्वन्ति બનાવે છે कर देते हैं ॥ १० ॥

१०. °लिङ्गवेदनोपशयविशेषसमन्वितो–°लिङ्गविशेषसमन्वितो (ख.)
,, तस्य–तत्र (छ. ध.)
,, हतमुपघ्नन्तो–उपहतमुपघ्नन्तो (च. ग.)

10. That form of insanity, however, which presents causes, premonitory symptoms, symptoms, suffering and homologation, other than those which arise from endogenous humoral discordance is said to be exogenous. Some would have it that such insanity owes its origin to reprehensible actions done in the former existance. The teacher Atreya Punarvasu, however, is of the opinion that in this case, too, the etiological factor is volitional transgression that a man, by disregarding the gods, seers, manes, gandharvas, yakshas, demons, goblins, seniors, elders, adepts, preceptors and worthies, perpetrates undesirable acts or begins similar reprehensibie undertakings. Assailing such a man who is mainly

his own assailant, the gods and others render him insane.

आगन्तून्मादस्य पूर्वरूपाणि—

**तत्र देवादिप्रकोपनिमित्तेनागन्तुकोन्मादेन पुरस्कृतस्येमानि पूर्वरूपाणि भवन्ति; तद्यथा—देवगोब्राह्मणतपस्विनां हिंसारुचित्वं, कोपनत्वं, नृशंसाभिप्रायता, अरतिः, ओजोवर्णच्छायाबलवपुषामुपतप्तिः, स्वप्ने च देवादिभिरभिभर्त्सनं प्रवर्तनं चेति; ततोऽनन्तरमुन्मादाभिनिर्वृत्तिः ॥ ११ ॥**

**तत्र** એમાં इनमें, **देवादि-** દેવો વગેરેના देवादिके, **प्रकोपनिमित्तेन** પ્રકોપથી ઉત્પન્ન થયેલ प्रकोपके कारण, **आगन्तुक-** આગન્તુ आगन्तु, **उन्मादेन** ઉન્માદ વડે उन्मादसे, **पुरस्कृतस्य** અભિશપ્ત પુરુષનાં अभिशप्त पुरुषके, **इमानि** આ યે, **पूर्वरूपाणि** પૂર્વરૂપ पूर्वरूप, **भवन्ति** થાય છે होते हैं, **तत् यथा** જેમકે जैसेकि, **देव-गो- ब्राह्मण** દેવતા-ગાય-બ્રાહ્મણ देवता-गाय-ब्राह्मण, **तपस्विनाम्** તથા તપસ્વીઓની तथा तपस्वीकी, **हिंसा-रुचित्वं** હિંસા કરવાની ઇચ્છા हिंसा करनेकी रुचि, **कोपनत्वम्** ગુસ્સે થવું क्रोध करना, **नृशंस-** પરાપકાર કરવાની परापकारकी, **अभिप्रायता** ઇચ્છા कामना, **अरतिः** કોઈ કાર્યમાં મન ન લાગવું बेचैनी, **ओजः-** ઓજ ओज, **वर्ण-** વર્ણ वर्ण, **छाया-** કાન્તિ छाया, **बल-** બળ बल, **वपुषाम्** તથા શરીરનો शरीरका, **उपतप्तिः** ઉપતાપ उपताप, **स्वप्ने च** સ્વપ્નમાં स्वप्नमें, **देवादिभिः** દેવ આદિથી देवता आदिसे, **अभिभर्त्सनम्** તિરસ્કાર પામવો तिरस्कारकी प्राप्ति, **प्रवर्तनम् च इति** અને પ્રેરણા થવી और प्रेरणाका मिलना, **ततः अनन्तरम्** ત્યાર બાદ इसके पीछे, **उन्माद-** ઉન્માદ उन्माद, **अभिनिर्वृत्तिः** પ્રકટ થાય છે उत्पन्न होता है ॥ ११ ॥

11. The following are the premonitory symptoms seen in a man who is heading towards the exogenous type of insanity, which comes of the displeasure of the gods, etc; viz, a liking for causing hurt to the gods, cows, Brahmanas, and the ascetics, irascibility, mischief-mongering, apathy, the impairment of the vital-essence, complexion, lustre, strength and body, and in dreams being despised by the gods and others and being incited. Thereafter there is the appearance of insanity.

११. आगन्तुकोन्मादेन–आगन्तून्मादेन (ग.)

,, ओजः–अनोजः (ज.)

उन्मादकराणां भूतानामुन्मादयिष्यतामारम्भविशेषः—

**तत्रायमुन्मादकराणां भूतानामुन्मादयिष्यतामारम्भविशेषो भवति; तद्यथा—अवलोकयन्तो देवा जनयन्त्युन्मादं, गुरुवृद्धसिद्धमहर्षयोऽभिशपन्तः, पितरो दर्शयन्तः, स्पृशन्तो गन्धर्वाः, समाविशन्तो यक्षाः, राक्षसास्त्वात्मगन्धमाघ्रापयन्तः, पिशाचाः पुनरारुह्य वाहयन्तः ॥ १२ ॥**

**तत्र** તેમાં उसमें, **उन्मादकराणाम्** ઉન્માદને ઉત્પન્ન કરનાર उन्माद उत्पन्न करनेवाले, **भूतानाम्** ભૂતોને भूतोंको, **उन्मादयिष्यताम्** ઉન્માદ કરવાની ઇચ્છા થતાં उन्माद करनेकी इच्छा होने पर, **अयम्** તેઓનો આ उनका यह, **प्रारम्भ- विशेषः** વિશેષ પ્રકારનો આરંભ विशिष्ट प्रारम्भ, **भवति** થાય છે होता है, **तत् यथा** જેમકે जैसे कि, **देवाः** દેવો देवता, **अवलोकयन्तः** ફક્ત દૃષ્ટિપાત કરતાં केवल दृष्टि करते हुए, **गुरु- वृद्ध-** ગુરુ વૃદ્ધ गुरु वृद्ध, **सिद्ध-** સિદ્ધ सिद्ध, **महर्षयः** તથા મહર્ષિઓ तथा महर्षि, **अभिशपन्तः** શાપ દેતાં शाप देते हुए, **पितरः** પિતૃઓ पितर, **दर्शयन्तः** પોતાનું સ્વરૂપ બતાવતાં अपनेको दिखाते हुए, **गन्धर्वाः** ગન્ધર્વો गन्धर्व, **स्पृशन्तः** સ્પર્શ કરતાં स्पर्श करते हुए, **यक्षाः** यक्ष

१२. पितरो दर्शयन्तः–पितरो धर्षयन्तः (च. ध. प.)

,, समाविशन्तो–प्रविशन्तो (च.)

,, आत्मगंध–आमगंध (त. प.)

,, आघ्रापयन्तः–आघ्राणयन्तः (प.)

,, आरुह्य–अधिरुह्य (क. छ.)

यक्ष, समाविशन्तः પ્રવેશ કરતાં शरीरमें प्रविष्ट होते हुए, राक्षसाः तु રાક્ષસો राक्षस, आत्मगन्धम् પોતાની ગંધને अपनी गन्धको, आघ्रापयन्तः સુંઘાડતાં सुंघाते हुए, पिशाचाः पुनः અને પિશાચો और पिशाच, आरुह्य ઉપર બેસી सवारी करके, वाहयन्तः ચલાવતાં चलाते हुए, उन्मादम् ઉન્માદને उन्माद, जनयन्ति ઉત્પન્ન કરે છે उत्पन्न करते हैं ॥ १२ ॥

12. The following is the manner in which the madness-inducing agencies, when wishing to afflict any one with madness, operate. Thus the gods send down madness by a look, the teachers, elders, adepts and the great sages by a curse, the manes by revealing themselves, the gandharvas by a touch, the yakshas by taking possession, the rakshas as by letting their body-odours be sniffed, and lastly, the goblins by mounting their victims and riding them.

भूतोन्मादस्य रूपाणि—

तस्येमानि रूपाणि भवन्ति; तद्यथा—अत्यात्मबलवीर्यपौरुषपराक्रमग्रहणधारणस्मरणज्ञानवचनविज्ञानानि, अनियतश्चोन्मादकालः ॥ १३ ॥

तस्य તેનાં उसके, इमानि આ ये, रूपाणि રૂપો रूप, भवन्ति થાય છે होते हैं, तत् यथा જેમકે जैसे कि, अत्यात्म- પોતાના પ્રમાણથી અધિક अपने प्रमाणसे अधिक, बल- બલ बल, वीर्य- વીર્ય वीर्य, पौरुष- પૌરુષ पौरुष, पराक्रम- પરાક્રમ पराक्रम, ग्रहण- ગ્રહણ ग्रहण, धारण- ધારણ धारण, स्मरण- સ્મરણ स्मरण, ज्ञान- જ્ઞાન ज्ञान, वचन- વચન वचन, विज्ञानानि અને વિજ્ઞાન થાય છે और विज्ञान होते हैं, उन्मादकालः च અને ઉન્માદનો કાલ एवं उन्मादका समय, अनियतः અનિશ્ચિત હોય છે अनिश्चित होता है ॥ १३ ॥

१३. अत्यात्मबल°—अमर्त्यबल° (क. च. छ. ष.)

13. These are the symptoms of the exogenous type of insanity, viz, superhuman strength, energy, capacity, prowess, grasp, retention, memory, understanding, speech and knowledge. The time of manifestation of this type of insanity is indeterminate.

आगन्तून्मादस्याघातकालाः—

उन्मादयिष्यतामपि खलु देवर्षिपितृगन्धर्वयक्षराक्षसपिशाचानां गुरुवृद्धसिद्धानां वा एष्वन्तरेष्वभिगमनीयाः पुरुषा भवन्ति; तद्यथा—पापस्य कर्मणः समारम्भे, पूर्वकृतस्य वा कर्मणः परिणामकाले, एकस्य वा शून्यगृहवासे चतुष्पथाधिष्ठाने वा, सन्ध्यावेलायामप्रयतभावे वा पर्वसन्धिषु वा मिथुनीभावे, रजस्वलाभिगमने वा, विगुणे वाऽध्ययनबलिमङ्गलहोमप्रयोगे,नियमव्रतब्रह्मचर्यभङ्गे वा, महाहवे वा, देशकुलपुरविनाशे वा, महाग्रहोपगमने वा, स्त्रिया वा प्रजननकाले, विविधभूताशुभाशुचिस्पर्शने वा, वमनविरेचनरुधिरस्रावे, अशुचेरप्रयतस्य वा चैत्यदेवायतनाभिगमने वा, मांसमधुतिलगुडमद्योच्छिष्टे वा, दिग्वाससि वा, निशि नगरनिगमचतुष्पथोपवनश्मशानाघातनाभिगमने वा, द्विजगुरुसुरयतिपूज्याभिधर्षणे वा, धर्माख्यानव्यतिक्रमे वा, अन्यस्य वा कर्मणोऽप्रशस्तस्यारम्भे, इत्यभिघातकाला व्याख्याता भवन्ति ॥ १४ ॥

उन्मादयिष्यताम् ઉન્માદ કરવાની ઇચ્છાવાળા उन्माद करनेकी इच्छावाले, देव-ऋषि- દેવ-ઋષિ देव-ऋषि,

१४. एष्वन्तरेष्वभिगमनीयाः पुरुषा भवन्ति—एष्वन्तरेषु गमनीयः पुरुषः (ख.)

,, परिणामकाले—परिपाककाले (च.)

,, पर्वसन्धिषु—पक्षसन्धिषु (च.)

,, विविधभूताशुभाशुचि°- विविधभूताशुचि° (ख.)

,, °रुधिरस्रावे, अशुचेः—°रुधिरस्रावाशुचेः (फ.)

,, °श्मशानाघातनाभिगमने—°श्मशानाभिगमने (ख.)

,, द्विजगुरुसुरयतिपूज्या°—द्विजगुरुसुरपूज्या° (क.)

**पितृ-** પિતૃ पितर, **गन्धर्व-** ગંધર્વ गन्धर्व, **यक्ष** યક્ષ यक्ष, **राक्षस-** રાક્ષસ राक्षस, **पिशाचानाम्** અને પિશાચોને और पिशाचोंको, **गुरु-** કે ગુરુ गुरु, **वृद्ध-** વૃદ્ધ वृद्ध, **सिद्धानाम् वा** અપિ અને સિદ્ધોને પણ और सिद्धोंके भी, **एषु** આ इन, **अन्तरेषु खलु** સમયમાં समयोंमें, **पुरुषाः** પુરુષો पुरुष, **अभिगमनीयाः** પ્રવેશ કરવા યોગ્ય आक्रमणके योग्य, **भवन्ति** થાય છે होते हैं, **तद् यथा** જેમકે जैसे कि, **पापस्य** પાપ पाप, **कर्मणः** કર્મના कर्मके, **समारम्भे** આરંભમાં प्रारम्भमें, **पूर्वकृतस्य** અથવા પૂર્વજન્મમાં કરેલા अथवा पूर्वजन्मकृत, **कर्मणः** કર્મના कर्मके, **परिणामकाले वा** વિપાકને સમયે फलके समय, **एकस्य वा** અથવા એકલો अथवा अकेले ही, **शून्यगृहवासे** સૂના ઘરમાં રહેતો હોય ત્યારે शून्यगृहमें रहने पर, **चतुष्पथ-** અથવા ચાર રસ્તાઓ अथवा चौराहों, **अधिष्ठाने वा** સાથે ભેળા થવાને સ્થાને एकत्र मिलने पर, **सन्ध्यावेलायाम्** અથવા સંધ્યાને સમયે अथवा सन्ध्यासमयमें, **अप्रयतभावे वा** અથવા અશુદ્ધ અવસ્થામાં अथवा अशुद्ध अवस्थामें, **पर्वसन्धिषु वा** અથવા પૂર્ણિમા અને અમાવાસ્યાને દિવસે अथवा पूर्णिमा और अमावास्यामें, **मिथुनीभावे** મૈથુન કરતો હોય ત્યારે सम्भोग करते हुए, **रजस्वला-** રજસ્વલા સ્ત્રી સાથે अथवा रजस्वलाके साथ, **अभिगमने वा** સંભોગ કરતો હોય ત્યારે संभोगके समय, **अध्ययन-** અથવા અધ્યયન अथवा पढ़ना, **बलि-** બલિદાન बलि, **मङ्गल-** મંગલકર્મ मंगल, **होम-** અને હોમનો होमका, **प्रयोगे** પ્રયોગ प्रयोग, **विगुणे वा** વિધિપૂર્વક નહિ કરતાં विधिपूर्वक नहीं करने पर, **नियम-** નિયમ नियम, **व्रत** વ્રત व्रत, **ब्रह्मचर्य- भङ्गे वा** અને બ્રહ્મચર્યનો ભંગ કરવાથી और ब्रह्मचर्यका भंग होने पर, **महाहवे वा** અથવા મહાયુદ્ધના સમયમાં अथवा महायुद्धके कालमें, **देश-** અથવા દેશ अथवा देश, **कुल-** કુલ कुल, **पुर-** અને નગરના और नगरके, **विनाशे वा** વિનાશને સમયે विनाशके समय, **महाग्रह** અથવા ચંદ્ર કે સૂર્યના अथवा महाग्रहके, **उपगमने वा** ગ્રહણ વખતે ग्रहणकालमें, **स्त्रियाः** અથવા સ્ત્રીઓનાં अथवा स्त्रियोंके, **प्रजनन-काले वा** પ્રસવને સમયે प्रजननकालमें, **विविध-भूत-** અથવા જુદાં જુદાં પ્રાણીઓ अथवा नाना प्रकारके प्राणियों, **अशुभ-** તેમજ અશુભ एवं अशुभ, **अशुचि-** તથા અપવિત્ર વસ્તુઓના अपवित्र वस्तुओंको, **स्पर्शने** વા સ્પર્શ કરવા વખતે छूनेके समय, **वमन-** અથવા વમન अथवा वमन, **विरेचन-** વિરેચન विरेचन, **रुधिर-स्रावे** કે રુધિર સ્રાવને સમયે या रक्तमोक्षणके समय, **अशुचेः** અથવા અપવિત્ર अथवा अपवित्र, **अप्रयतस्य वा** કે સંયમ રહિત રહેતાં या संयमरहित रहते हुए, **चैत्य-** યજ્ઞભૂમિ यज्ञभूमि, **देवायतन-** અને દેવાલયમાં और देवमंदिरमें, **अभिगमने वा** જતાં जाने पर, **मांस-मधु-तिल-गुड-** અથવા માંસ-મધ-તલ-ગોળ अथवा मांस-मधु-तिल-गुड़, **मद्य** મદ્ય या मद्यके, **उच्छिष्टे वा** છાંડી મૂકતાં उच्छिष्ट छोड़ने पर, **दिग्वाससि वा** અથવા નગ્ન થતાં अथवा नग्न होने पर, **निशि-** અથવા રાત્રિને સમયે अथवा रात्रिके समय, **नगर-** નગર नगर, **निगम-** પુરી पुरी, **चतुष्पथ** ચૌટા चौराह, **उपवन-** ઉપવન बगीचा, **श्मशान-** સ્મશાન श्मशान, **आघातन-** તથા વધસ્થાનમાં वधस्थानमें, **अभिगमने** જતાં जाने पर, **द्विज-** અથવા દ્વિજ अथवा द्विज, **गुरु-** ગુરુ गुरु, **सुर-** દેવ देवता, **यति-** યતિ संन्यासी, **पूज्य-** તથા પૂજ્યોના और पूज्योंके, **अभिधर्षणे वा** તિરસ્કાર કરતાં तिरस्कार करने पर, **धर्माख्यान-** અથવા ધર્મોપદેશનું अथवा धर्मोपदेशका, **अतिक्रमे वा** ઉલ્લંઘન કરતાં उल्लङ्घन करने पर, **अन्यस्य** અથવા બીજા अथवा अन्य, **अप्रशस्तस्य** અયોગ્ય अप्रशस्त, **कर्मणः** કર્મ कार्य, **आरम्भे वा** કરતાં करने पर, **इति** એમ इस प्रकारसे, **अभिघात-** અભિઘાતના आक्रमणके, **कालाः** - કાળ समय, **व्याख्याताः भवन्ति** કહ્યા છે कहे गये हैं ॥ १४ ॥

14. The following are the junctures when men become liable to the malign influence of the gods, sages, manes, gandharvas, yakshas, demons and goblins or of the preceptors, elders, and adepts, desirous of inducing madness; They are—the commencement of any evil act, or at the time of fructification of former misdeeds, while residing alone in a deserted house, or at the

crossing of four roads, when failing to practise self-control during the twilights, during sexual congress on the full and new-moon days, while cohabiting with a menstruating woman; during any impropriety in the observance of scriptural recitation, offerings, auspicious rites, and sacrifice; on lapsing from discipline, vows and Brahmacharya; on the field of battle; at the destruction of country, community or city; during eclipse; at the time of delivery for a woman; at the contact of various kinds of inauspicious and unclean objects; while vomiting, purging or bleeding; while visiting holy places and temples in an unclean or improper state; while in an uncleansed condition after eating flesh, honey, til, gur or wine; while in a state of rudeness; while traversing at night through a town, city, cross roads, park, cremation ground, or a place of slaughter; while engaged in insulting the twice-born, the preceptors the gods, the ascetics, and the venerable; while mispropounding scriptures; or during the performance of any other blame-worthy action; thus we have enumerated the specific times at which the seizure begins.

उन्मादकराणां भूतानामुन्मादने त्रिविधं प्रयोजनम्, आगन्तुकोन्मादानां साध्यासाध्यविभागश्च—

**त्रिविधं तु खलून्मादकराणां भूतानामुन्मादने प्रयोजनं भवति; तद्यथा—हिंसा, रतिः, अभ्यर्चनं चेति। तेषां तं प्रयोजनविशेषमुन्मत्ताचारविशेषलक्षणैर्विद्यात्। तत्र हिंसार्थिनोन्माद्यमानोऽग्निं प्रविशति, अप्सु निमज्जति, स्थलाच्छ्वभ्रे वा पतति, शस्त्रकशाकाष्ठलोष्टमुष्टिभिर्हन्त्यात्मानम्, अन्यच्च प्राणवधार्थमारभते किञ्चित्, तमसाध्यं विद्यात्; साध्यौ पुनर्द्वावितरौ॥१५॥**

उन्मादकराणाम् ઉન્માદ કરનારાં उन्मादकारक, भूतानाम् खलु ભૂતોનાં भूतोंके, उन्मादने ઉન્માદ ઉત્પન્ન કરવામાં उन्माद उत्पन्न करनेमें, तु તો तो, त्रिविधम् ત્રણ પ્રકારનું तीन प्रकारका, प्रयोजनम् પ્રયોજન प्रयोजन, भवति હોય છે है, तत् यथा જેમકે जैसे कि, हिंसा- હિંસા हिंसा, रतिः પ્રેમ रति, अभ्यर्चनम् च इति અને પૂજા और पूजा, उन्मत्त- ઉન્મત્ત પુરુષની उन्मत्त पुरुषके, आचारविशेषलक्षणैः જુદી જુદી ચેષ્ટાઓનાં લક્ષણો ઉપરથી आचारके भिन्न भिन्न लक्षणोंसे, तेषाम् તેઓનાં इनके, तम् તે उस, प्रयोजन- પ્રયોજનનો प्रयोजनकी, विशेषम् ભેદ भिन्नताको, विद्यात् જાણી લેવો जाने, तत्र તેમાં इनमें, हिंसार्थिना- હિંસાર્થીએ हिंसाकी इच्छावालेसे, उन्माद्यमानः ઉન્મત્ત કરવામાં આવતો મનુષ્ય उन्मत्त किया हुआ पुरुष, अग्निम् અગ્નિમાં अग्निमें, प्रविशति પ્રવેશ કરે છે प्रवेश करता है, अप्सु જળમાં पानीमें, निमज्जति ડૂબે છે डूबता है, स्थलात् श्वभ्रे वा અથવા તો જમીન પરથી ખાડામાં या जमीनसे गड्ढेमें, पतति- પડે છે गिरता है, शस्त्र- શસ્ત્ર शस्त्र, कशा- ચાબુક चाबुक, काष्ठ- લાકડાં लकड़ी, लोष्ट- ઢેફાં ढेले, मुष्टिभिः અને મુઠ્ઠીથી तथा मुकेसे, आत्मानम् પોતાની જાતને अपनेको, हन्ति મારે છે मारता है, प्राणवधार्थम् च અને પ્રાણ હણવાને માટે और प्राणनाशके लिए, अन्यत् બીજું પણ अन्य भी, किञ्चित् કાંઈ કર્મ चेष्टा, आरभते કરે છે करता है, तम् તેને इसको, असाध्यम् અસાધ્ય असाध्य, विद्यात् જાણવો समझना चाहिए, पुनः इतरौ અને બાકીના और शेष, द्वौ બે दो, साध्यौ સાધ્ય છે साध्य हैं ॥ १५ ॥

१५. तत्र हिंसार्थिनोन्माद्यमानः—हिं-सार्थमुन्माद्यमानः (ठ. त.)
,, अप्सु निमज्जति—अप्सु वा मज्जति (त.)
,, स्थलाच्छ्वभ्रे वा पतति—स्थानात् श्वभ्रे निपतति (ठ.)
,, प्राणवधार्थमारभते किञ्चित्—प्राणवधार्थमारभते (ठ.)

15. As regards the motive in the insanity-crusing agents for inducing insanity, it is threefold, viz, cruelty, lust, and the extortion of worship. The incentive in each case is to be inferred from the difference in the behaviour of the victim. Thus, for instance, the man who is afflicted with madness by the gods, etc, out of cruelty, will enter the fire, or dive into the waters, or fall from his position into a pit, or strike himself with weapons, whips, or resort to some other means for taking his life. Such insanity should be regarded as incurable. The other two, where the incentive of the maddening agents is lust or the desire for worship, are curable.

आगन्तुकोन्मादस्य चिकित्सासूत्रम्—

**तयोः साधनानि—मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमव्रतप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादीनि ॥ १६ ॥**

**तयोः** તે બેની उन दोके, **साधनानि** નીચેની ચિકિત્સા છે निम्न उपाय हैं, **मन्त्र-** મંત્ર मंत्र, **औषधि-** ઔષધિ ओषधि, **मणि-** મણિ मणि, **मङ्गल-** મંગળ मंगल, **बल्युपहार-** બલિદાન કરવું बलिका उपहार, **होम-** હોમ होम, **नियम-** નિયમ नियम, **व्रत-** વ્રત व्रत, **प्रायश्चित्त-** પ્રાયશ્ચિત્ત प्रायश्चित्त, **उपवास-** ઉપવાસ उपवास, **स्वस्त्ययन-** સ્વસ્તિવાચન स्वस्तिवाचन, **प्रणिपात-** પ્રણામ प्रणाम, **गमनादीनि** તીર્થાદિગમન વગેરે तीर्थादिमें जाना आदि ॥ १६ ॥

16. In the case of these two, the therapeutic measures consist of the following charms, herbs, magical stones, auspicious rites, oblations, offerings, sacrifices, ritual discipline (niyama), vows, expiatory rites, fasts, blessings, obeisance to the gods and pilgrimages.

**एवमेते पञ्चोन्मादा व्याख्याता भवन्ति ॥१७॥**

**एवम्** આ રીતે इस प्रकारसे, **एते** આ इन, **पञ्च-** પાંચે पांचों, **उन्मादाः** ઉન્માદોનું उन्मादोंका, **व्याख्याताः** વ્યાખ્યાન કર્યું છે व्याख्यान किया है ॥ १७ ॥

17. Thus we have dealt with the five kinds of insanity.

आगन्तुनिजौ परस्परमनुबध्नीतः, तयोर्हेतुसंसर्गात्संसृष्टपूर्वरूपलिङ्गानि—

**ते तु खलु निजागन्तुविशेषेण साध्यासाध्यविशेषेण च प्रविभज्यमानाः पञ्च सन्तो द्वावेव भवतः। तौ च परस्परमनुबध्नीतः कदाचिद्यथोक्तहेतुसंसर्गात्। तयोः संसृष्टमेव पूर्वरूपं भवति, संसृष्टमेव च लिङ्गम्। तत्रासाध्यसंयोगं साध्यासाध्यसंयोगं चासाध्यं विद्यात्, साध्यं तु साध्यसंयोगम्। तस्य साधनं साधनसंयोगमेव विद्यादिति ॥ १८॥**

**ते तु खलु** એ ઉન્માદો ये उन्माद, **पञ्च सन्तः** પાંચ હોતાં पांच प्रकारके होते हुए, **निज- आगन्तु- विशेषेण** નિજ અને આગંતુ એ ભેદથી निज और आगन्तुके भेदसे, **साध्य- असाध्य- विशेषेण च** અને સાધ્ય તથા અસાધ્ય એ ભેદથી तथा साध्य और असाध्यके भेदसे, **प्रविभज्यमानाः** વિભક્ત થતાં विभक्त होने पर, **द्वौ एव** બે પ્રકારનાજ दो प्रकारके ही, **भवतः** થાય છે होते हैं, **तौ च** તે એ ये दोनों, **यथोक्त-** આગળ કહેલાં पूर्वोक्त, **हेतुसंसर्गात्** કારણોના સંસર્ગથી हेतुओंके मिलनेसे, **कदाचित्** કોઈ કોઈ વખતે कमी कमी, **परस्परम्** પરસ્પર परस्पर, **अनुबध्नीतः** અનુબંધવાળા થાય છે अनुबन्धवाले होते हैं, **तयोः** તેઓમાં इनमें, **पूर्वरूपम्** પૂર્વરૂપ पूर्वरूप, **संसृष्टम् एव** મિશ્રિતજ मिश्रित ही, **भवति** થાય છે होता है, **लिङ्गम् च** તથા લક્ષણ પણ तथा लक्षण भी, **संसृष्टम् एव** મિશ્રિતજ થાય છે मिश्रित ही होता है, **तत्र** તેઓમાં

१८. तयोः—उभयोः (म. ठ)

इनमें, असाध्य- संयोगम् બેય અસાધ્યના સંયોગને दोनों ही असाध्योंके संयोगको, साध्य- असाध्य- संयोगम् च અને એક સાધ્ય તથા બીજા અસાધ્યના સંયોગને और एक साध्य तथा दूसरे असाध्यके संयोगको, असाध्यम् અસાધ્ય असाध्य, विद्यात् જાણવા जाने, साध्य- संयोगम् तु વળી બેય સાધ્યના સંયોગને તો दोनों ही साध्योंके संयोगको तो, साध्यम् સાધ્ય જાણવો साध्य जाने, साधन- संयोगम् एव પૂર્વોક્ત ચિકિત્સાના મિશ્રણને જ पूर्वोक्त चिकित्साके मिश्रणको ही, तस्य તેની इसकी, साधनम् ચિકિત્સા चिकित्सा, विद्यात् જાણવી जाने ॥ १८ ॥

18. These five varieties, however, viewd either as endogenous and exogenous or as curable and incurable, reduce themselves into two groups. Occasionally these two overlap, in consequence of the etiological factors of both types. In such cases, the premonitory symptoms are of a hybrid character and hybrid, too, are the actual symptoms. If the caloescence is between two incurable ones, then the malady is to be regarded as incurable. That only is curable where both types are curable. The treatment for this last mentioned group consists in a combination of remedial measures suitable for both.

भूतोन्मादेऽपि कर्मैव कारणम्—

भवन्ति चात्र—

**नैव देवा न गन्धर्वा न पिशाचा न राक्षसाः।**
**न चान्ये स्वयमक्लिष्टमुपक्लिश्नन्ति मानवम् ॥ १९ ॥**

अत्र च આ વિષયમાં इस विषयमें, भवन्ति શ્લોકો છે કે श्लोक हैं कि, स्वयम् જેણે પોતે स्वयं, अक्लिष्टम् અશુભ કાર્ય કર્યું નથી તેવા क्लेशित न हुए, मानवम् મનુષ્યને पुरुषको, न एव ન તો न तो, देवाः દેવતા देव, न गन्धर्वाः ન તો ગન્ધર્વ नतो गन्धर्व, न पिशाचाः ન તો પિશાચ नतो पिशाच, न राक्षसाः ન તો રાક્ષસ नतो राक्षस, न च अन्ये અને ન તો બીજા કોઈ नतो अन्य कोई, उपक्लिश्नन्ति પીડે છે क्लेशित करते हैं ॥ १९ ॥

Here are verses again.

19. Neither gods, nor the gandharvas; neither the goblins nor the demons, nor aught else, torment the man who is not tormented of himself.

**ये त्वेनमनुवर्तन्ते क्लिश्यमानं स्वकर्मणा ।**
**न स तद्धेतुकः क्लेशो न ह्यस्ति कृतकृत्यता ॥२०॥**

स्वकर्मणा પોતાનાં જ કર્મથી अपने ही प्राक्तन कर्मोंसे, क्लिश्यमानम् પીડાતા क्लेशित, एनम् तु આ પુરુષમાં इस पुरुषमें, ये જે जो, अनुवर्तन्ते દેવ વગેરે આવેશ કરે છે देवादि आवेश करते हैं, सः તે वह, क्लेशः ક્લેશ क्लेश, तद्धेतुकः न દેવ વગેરેથી ઉત્પન્ન થયેલ નથી उन देवादिसे उत्पन्न हुआ नहीं है, हि કારણકે क्योंकि, कृतकृत्यता જે થયેલું છે તેમાં કાંઈ કરવાનું किये हुए कर्ममें कुछ करनेका शेष, न अस्ति- રહેતું નથી नहीं रहता ॥ २० ॥

20. Those who pursue their suffering victim by the compulsion of his misdeeds are not the authors of his sufferings; for they are not the authors of his actions.

भूतोन्मादे देवपितृराक्षसादीनाभिशंसेत्—

**प्रज्ञापराधात् संभूते व्याधौ कर्मज आत्मनः ।**
**नाभिशंसेद्बुधो देवान् पितॄनापि राक्षसान् ॥२१॥**

प्रज्ञापराधात् પ્રજ્ઞાપરાધ થવાને કારણે प्रज्ञापराधके कारण, आत्मनः પોતાનાં अपने, कर्मजे કરેલાં કર્મથી

२०. न स तद्धेतुकः क्लेशो—न तन्निमित्तः क्लेशोऽसौ (च.)
,, न ह्यस्ति कृतकृत्यता—न ह्यस्त्यकृतकृत्यता (प.)
,, ,, ,, —न ह्यन्यकृतकृत्यता (प. फ.)
२१. संभूते—संप्राप्ते (म. ठ. ग.)

જનિત कर्मसे जन्य, व्याधौ રોગ रोगके, संभूते ઉત્પન્ન થતાં उत्पन्न होनेसे, बुधः બુદ્ધિમાન પુરુષે विद्वान पुरुषको, देवान् न દેવતાઓને નહિ देवताओंको नहीं, पितॄन् न પિતૃઓને નહિ पितरोंको नहीं, राक्षसान् अपि તથા રાક્ષસોને પણ और राक्षसोंको भी, न अभिशंसेत् ઉપાલંભ નહિ દેવો જોઇએ उपालंभ नहीं देना चाहिए ॥ २१ ॥

21. The wise man when afflicted with disease, which arises from volitional transgression and is the result of one's own action, should not rail against the gods, the manes, or the demons.

आत्मानमेव सुखदुःखयोः कर्तारं मत्वा श्रेयस्करं मार्गं प्रपद्येत—

**आत्मानमेव मन्येत कर्तारं सुखदुःखयोः ।**
**तस्माच्छ्रेयस्करं मार्गं प्रतिपद्येत नो त्रसेत् ॥२२॥**

सुखदुःखयोः સુખ અને દુઃખનો सुख तथा दुःखका, कर्तारम् કર્તા कर्ता, आत्मानम् પોતાને अपनेको, एव જ ही, मन्येत- જાણવો मानना चाहिए, तस्मात् તેથી इस लिए, श्रेयस्करम् કલ્યાણકારક कल्याणकारी, मार्गम् માર્ગ मार्गको, प्रतिपद्येत ચાલવું स्वीकारे, नो त्रसेत् ડર રાખવો નહિ डरे नहीं ॥ २२ ॥

22. But he should regard his very self as the author of his pain and pleasure. Accordingly he should search out what is good for himself and not allow himself to be fear-stricken.

**देवादीनामपचितिर्हितानां चोपसेवनम् ।**
**ते च तेभ्यो विरोधश्च सर्वमायत्तमात्मनि ॥२३॥**

देवादीनाम् દેવ વગેરેની देवता इत्यादियोंकी, अपचितिः પૂજા पूजा, हितानाम् च અને હિતકર આહાર-વિહારનું और हितकर वस्तुओंका, उपसेवनम् સેવન सेवन, ते च તે બે ये दोनों, तेभ्यः તેમજ તેઓની સાથે एवं देवता इत्यादियोंसे, विरोधः च વિરોધ જે અશુભ કર્મથી થાય છે તે विरोध जो अशुभ कर्मसे होता है वह, सर्वम् બધું सब, आत्मनि પોતાને अपने, आयत्तम् આધીન છે अधीन है ॥ २३ ॥

23. Reverence for the gods, the use of wholesome things, as well as what is opposed to both these, are in the control of oneself.

अध्यायोक्तार्थसंग्रहः—

**तत्र श्लोकः—**

**संख्या निमित्तं प्राग्रूपं लक्षणं साध्यता न च ।**
**उन्मादानां निदानेऽस्मिन् क्रियासूत्रं च भाषितम् २४**

तत्र श्लोकः આ વિષયમાં ઉપસંહારનો શ્લોક છે કે इस विषयमें उपसंहारका श्लोक है कि, अस्मिन् આ इस. 'उन्मादानाम् निदाने' 'ઉન્માદનિદાન' અધ્યાયમાં 'उन्मादनिदान' अध्यायमें, संख्या ઉન્માદોની સંખ્યા संख्या, निमित्तम् કારણ निदान, प्राग्रूपम् પૂર્વરૂપ पूर्वरूप, लक्षणम् લક્ષણ लक्षण, साध्यता સાધ્યતા साध्यता, न च અસાધ્યતા असाध्यता, क्रियासूत्रम् च અને ચિકિત્સાસૂત્ર और चिकित्सासूत्र, भाषितम् કહ્યું છે कह दिया है ॥ २४ ॥

Here is the recapitulatory verse.

54. The enumeration, the etiology, the premonitory symptoms, the actual symptoms, the curability and incurability and the methods of treatment are set out in this pathology of the various forms of insanity.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने उन्मादनिदानं नाम सप्तमोऽध्यायः ॥ ७ ॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे

२२. नो त्रसेत्–नोत्त्रसेत् (द.)
२३. ते च–यश्च (च.)
,, ,, –न च (ख. थ. फ.)

२४. प्राग्रूपं–द्विविधम् (ख. ग. ङ. थ. फ.)

nces, humors and disorders. The tastes are six—sweet, acid, salt, pungent, bitter and astringent. These properly used sustain the body in health; ill-used, they bring about the provocation of the humors.

प्रकृतिभूतानां दोषाणां शरीरोपकारकत्वम्, विकृतिमापन्नानां तेषां शरीरोपघातकत्वम्—

**दोषाः पुनस्त्रयो वातपित्तश्लेष्माणः। ते प्रकृतिभूताः शरीरोपकारका भवन्ति, विकृतिमापन्नास्तु खलु नानाविधैर्विकारैः शरीरमुपतापयन्ति ॥५॥**

दोषाः દોષો दोष, पुनः વળી तो, त्रयः ત્રણ છે तीन हैं, वात- વાત वात, पित्त- પિત્ત पित्त, श्लेष्माणः તથા કફ और कफ, ते તેઓ वे, प्रकृतिभूताः, પ્રકૃતિમાં રહી प्रकृतिमें रह कर, शरीर- શરીરને शरीरके, उपकारकाः ઉપકારક उपकारक, भवन्ति થાય છે होते हैं, विकृतिम् અને વિકૃતિને और विकृतिको, आपन्नाः खलु પામી प्राप्त हो कर, तु તો तो, नानाविधैः જુદી જુદી જાતના नाना प्रकारके, विकारैः વિકારોથી विकारोंसे, शरीरम् શરીરને शरीरको, उपतापयन्ति સંતાપે છે पीडित करते हैं ॥ ५॥

5. And the humors are three:—Vata, Pitta and Kapha. When normal they cause the proper functioning of the body; when they have become abnormal they certainly afflict the body by causing disorders of various types.

त्रयस्त्रयो रसा दोषमेकैकं जनयन्ति, त्रयस्त्रयश्चोपशमयन्ति, तेषां विवरणम्—

**तत्र दोषमेकैकं त्रयस्त्रयो रसा जनयन्ति, त्रयस्त्रयश्चोपशमयन्ति ।**

तत्र તેમાં इनमें, त्रयः त्रयः ત્રણ ત્રણ तीन तीन, रसाः રસો रस, एकैकम् એક એક एक एक, दोषम् દોષને दोषको, जनयन्ति ઉત્પન્ન કરે છે उत्पन्न करते हैं, त्रयः त्रयः च અને ત્રણ ત્રણ રસો और तीन तीन रसों, उपशमयन्ति શાંત કરે છે शान्त करते हैं।

6-(1). Each of these three humors is provoked by three tastes and is allayed by the other three tastes.

**तद्यथा—कटुतिक्तकषाया वातं जनयन्ति, मधुराम्ललवणास्त्वेनं शमयन्ति; कट्वम्ललवणाः पित्तं जनयन्ति, मधुरतिक्तकषायास्त्वेनच्छमयन्ति; मधुराम्ललवणाः श्लेष्माणं जनयन्ति, कटुतिक्तकषायास्त्वेनं शमयन्ति ॥ ६ ॥**

तत् यथा જેમકે जैसेकि, कटु- કટુ कटु, तिक्त- તિકત तिक्त, कषाया તથા કષાય तथा कषाय, वातम् વાતને वातको, जनयन्ति ઉત્પન્ન કરે છે उत्पन्न करते हैं; मधुर- અને મધુર और मधुर, अम्ल- અમ્લ अम्ल, लवणाः તથા લવણ तथा लवण, तु તો तो, एनम् એને इसको, शमयन्ति શાન્ત કરે છે शान्त करते हैं, कटु- કટુ कटु, अम्ल- અમ્લ अम्ल, लवणाः તથા લવણ तथा लवण, पित्तम् પિત્તને पित्तको, जनयन्ति ઉત્પન્ન કરે છે उत्पन्न करते हैं, मधुर- અને મધુર और मधुर, तिक्त- તિકત तिक्त, कषायाः તથા કષાય तथा कषाय, तु તો तो, एनत् એને इसको, शमयन्ति શાન્ત કરે છે शान्त करते हैं, मधुर- મધુર मधुर, अम्ल- અમ્લ लवणाः તથા લવણ तथा लवण, श्लेष्माणम् કફને कफको, जनयन्ति ઉત્પન્ન કરે છે उत्पन्न करते हैं, कटु- અને કટુ और कटु, तिक्त- તિકત तिक्त, कषायाः તથા કષાય तथा कषाय, तु તો तो, एनत् એને इसको, शमयन्ति શાન્ત કરે છે शान्त करते हैं ॥ ६ ॥

6. Thus the pungent, bitter and astringent tastes provoke vata; the sweet, acid and salt tastes allay it; the pungent, acid and salt tastes provoke pitta; the sweet, bitter and astringent tastes ally it; the sweet, acid and salt tastes provoke the Kapha; the pungent, bitter and astringent tastes allay it.

१. शरीरोपकारकाः—शरीरयोगक्षेमकराः (ग. घ.)

६. तु एनच्छमयन्ति—पुनरेनच्छमयन्ति (च.)

रसदोषसन्निपाते व्यवस्था—

**रसदोषसन्निपाते तु ये रसा यैर्दोषैः समानगुणाः समानगुणभूयिष्ठा वा भवन्ति ते ताननभिवर्धयन्ति, विपरीतगुणा विपरीतगुणभूयिष्ठा वा शमयन्त्यभ्यस्यमाना इति। एतद्व्यवस्थाहेतोः षट्त्वमुपदिश्यते रसानां परस्परेणासंसृष्टानां, त्रित्वं च दोषाणाम् ॥ ७ ॥**

रस- રસ रस, दोष- તથા દોષના तथा दोषके, सन्निपाते મિશ્રણમાં सम्मिश्रणमें, तु તો तो, ये જે जो, रसाः રસો रस, यैः જે जिन, दोषैः દોષો સાથે दोषोंके साथ, समानगुणाः સમાન ગુણવાળા समान गुणवाले, समानगुणभूयिष्ठाः वा અથવા મોટે ભાગે સમાન ગુણવાળા अथवा अधिक मात्रामें समान गुणवाले, भवन्ति હોય છે होते हैं, ते તેઓ वे, तान् તેઓને उनको, अभिवर्धयन्ति વધારે છે बढ़ाते हैं, विपरीतगुणाः અને વિપરીત ગુણવાળા और विपरीत गुणवाले, विपरीतगुणभूयिष्ठाः वा અથવા મોટે ભાગે વિપરીત ગુણવાળા अथवा अधिकतः विपरीत गुणवाले, अभ्यस्यमानाः સેવવામાં આવતાં उपयोगमें लेने पर, शमयन्ति इति શાન્ત કરે છે शान्त करते हैं, एतत् આ इस, व्यवस्थाहेतोः વ્યવસ્થા માટે व्यवस्थाके लिए, परस्परेण પરસ્પર परस्पर, असंसृष्टानाम् ન મળેલા न मिले हुए, रसानाम् રસોના रसोंके, षट्त्वम् છપણાનો षट्त्वका, दोषाणाम् च અને દોષોના और दोषोंके, त्रित्वम् ત્રણપણાનો त्रित्वका, उपदिश्यते ઉપદેશ કરવામાં આવે છે उपदेश किया जाता है ॥ ७ ॥

7. As regards the interaction of tastes and humors, the use of tastes which are homologous are mostly homogeneous in quality to a particular humor, augment that humor, where as the use of the tastes which are antagonistic in quality to a particular humor, will allay that humor. It is in order to enable the understanding of this mode of operation that the hexaplicity of tastes and the triplicity of humors, considered individually, that is, uncombined with each other, has been taught.

रसदोषसंसर्गप्रपञ्चानभिधाने हेतुः—

**संसर्गविकल्पविस्तरो ह्येषामपरिसंख्येयो भवति, विकल्पभेदापरिसंख्येयत्वात् ॥ ८ ॥**

विकल्प- વિકલ્પના विकल्पके, भेद- ભેદનું भेदके, अपरिसंख्येयत्वात् અસંખ્યપણું હોવાથી असंख्येयत्व होनेसे, एषाम् એઓના इनके, संसर्ग- સંસર્ગના संसर्गके, विकल्प- ભેદનો भेदका, विस्तरः हि વિસ્તાર विस्तार, अपरिसंख्येयः અગણિત असंख्य, भवति થાય છે होता है ॥ ८ ॥

8. The extent of their combinations and permutations is innumerable on account of the innumerability of the varying degrees of their possible combinations and permutations.

अनेकरसेषु द्रव्येष्वनेकदोषात्मकविकारेषु च द्रव्यविकारप्रभावतत्त्वं कथं व्यवस्येदिति कथनम्—

**तत्र खल्वनेकरसेषु द्रव्येष्वनेकदोषात्मकेषु च विकारेषु रसदोषप्रभावमेकैकश्येनाभिसमीक्ष्य ततो द्रव्यविकारयोः प्रभावतत्त्वं व्यवस्येत् ॥ ९ ॥**

तत्र खलु અહીં यहां, अनेकरसेषु અનેક રસવાળાં अनेक रसवाले, द्रव्येषु દ્રવ્યોમાં द्रव्योंमें, अनेकदोषआत्मकेषु અને અનેક દોષવાળા और अनेक दोषवाले, विकारेषु च વિકારોમાં रोगोंमें, रस- રસના रसके, दोष- તથા દોષના तथा दोषके, प्रभावम् પ્રભાવને प्रभावको, एकैकश्येन એક એકપણાથી एक एकतासे, अभीसमीक्ष्य તપાસીને देख कर, ततः પછી पीछेसे, द्रव्यविकारयोः દ્રવ્ય અને વિકારના द्रव्य और रोगके, प्रभावतत्त्वम् પ્રભાવના તત્ત્વનો प्रभावके तत्त्वका, व्यवस्येत् નિશ્ચય કરવો निश्चय करे ॥ ९ ॥

---

९. तत्र खल्वनेकरसेषु-तत्रत्वनेकरसेषु (ध.)

,, एकैकश्येन-एकैकत्वेन (ध.)

9. Now from among the substances evincing various tastes and from among the disorders evincing morbidity of various humors examining the actions of each of the tastes and humors individually, one should thereafter determine the action of the given substance and of the given disorder. But this does not hold good everywhere.

**न त्वेवं खलु सर्वत्र। न हि विकृतिविषमसमवेतानां नानात्मकानां परस्परेण चोपहतानामन्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमानेनैव समुदायप्रभावतत्त्वमध्यवसातुं शक्यम् ॥ १० ॥**

**सर्वत्र** तु પરંતુ સર્વ સ્થાને परन्तु सब स्थानों पर, **एवम् खलु** એ પ્રમાણે इस प्रकार, **न** હોતું નથી नहीं होता, **हि** કારણકે क्यों कि. **विकृति-विषम-समवेतानाम्** વિકૃતિમાં મળેલા તથા વિષમ રીતે મળેલા विकृतिमें मिले हुए तथा विषम रीतिसे मिले हुए, **नानात्मकानाम्** જુદા જુદા પ્રકારના नानाप्रकारके, **परस्परेण च** પરસ્પરથી परस्पर, **उपहतानाम्** ઉપહત થયેલા उपघातको प्राप्त हुए, **अन्यैः च** અને અન્ય और अन्य, **विकल्पनैः** વિકલ્પથી विकल्पनासे, **विकल्पितानाम्** ભિન્ન થયેલા રસોના भिन्न हुए रसोंके, **अवयव-** અવયવના अवयवके, **प्रभाव-** પ્રભાવના प्रभावके, **अनुमानेन-** અનુમાનથી अनुमानसे, **एव** જ ही, **समुदाय-** સમુદાયના समुदायके, **प्रभावतत्त्वम्** પ્રભાવના તત્ત્વને। प्रभावके तत्त्वको, **अध्यवसातुम्** નિશ્ચય કરવાનું निश्चय करना, **न शक्यम्** શક્ય નથી शक्य नहीं है ॥ १० ॥

10. It not possible to infer the action of a compound substance from the action of the constituents, as in a compound the properties of various forms and properties and methods one with the other get changed, when thus variously combined.

**तथायुक्ते हि समुदये समुदायप्रभावतत्त्वमेवमेवोपलभ्य ततो द्रव्यविकारप्रभावतत्त्वं व्यवस्येत् ॥ ११ ॥**

**तथायुक्ते हि** તે રીતે જોડાયેલા इस प्रकार मिश्रित, **समुदये** સમુદાયમાં समुदायमें, **समुदाय-** સમુદાયના समुदायके, **प्रभावतत्त्वम्** પ્રભાવના તત્ત્વને प्रभावके तत्त्वको, **एवम् एव** એવીજ રીતે इसी प्रकार, **उपलभ्य** જાણી લઈને जान कर, **ततः** પછી पीछेसे, **द्रव्य-** દ્રવ્યના द्रव्यके, **विकार-** વિકારના विकारके, **प्रभावतत्त्वम्** પ્રભાવના તત્ત્વને प्रभावके तत्त्वका, **व्यवस्येत्** નક્કી કરવું જોઈએ निश्चय करे ॥ ११ ॥

11. In such complex cases, therefore. One should, having ascertained the action of the compound substance as a whole, determine the action of that compound substance on the particular combination of humors.

**तस्माद्रसप्रभावतश्च द्रव्यप्रभावतश्च दोषप्रभावतश्च विकारप्रभावतश्च तत्त्वमुपदेक्ष्यामः ॥१२॥**

**तस्मात्** તેથી इस लिए, **रसप्रभावतः च** રસના પ્રભાવથી रसप्रभावसे, **द्रव्यप्रभावतः च** દ્રવ્યપ્રભાવથી द्रव्यप्रभावसे, **दोषप्रभावतः च** દોષપ્રભાવથી दोषप्रभावसे, **विकारप्रभावतः च** અને વિકારપ્રભાવથી और विकारप्रभावसे, **तत्त्वम्** રસાદિના પ્રભાવના તત્ત્વનો रसादिके प्रभावके तत्त्वको, **उपदेक्ष्यामः** ઉપદેશ કરશું उपदेश करेंगे ॥ १२ ॥

12. Hence we shall expound the principles of action with reference to tastes, substances, humors and disorders.

१०. चोपहतानाम्–चोपहतप्रकृतिकानाम् (द. ध.)

११. समुदये–समुदाये (ख. घ. झ. त.)

,, समुदायप्रभावतत्त्वम्–समुदयप्रभावम् (ढ.)

,, द्रव्यविकार°–रसद्रव्यविकार° (घ. ढ. त.)

तैलस्य वातशमकत्वं सोपपत्तिकम्—

**तत्रैष रसप्रभाव उपदिष्टो भवति। द्रव्यप्रभावं पुनरुपदेक्ष्यामः। तैलसर्पिर्मधूनि वातपित्तश्लेष्मप्रशमनार्थानि द्रव्याणि भवन्ति ॥१३॥**

तत्र અહીં यहां, एषः આ यह, रसप्रभावः રસપ્રભાવ रसप्रभाव, उपदिष्टः भवति કહેવામાં આવ્યો છે कह दिया है, द्रव्यप्रभावम् દ્રવ્યપ્રભાવને द्रव्यप्रभावको, पुनः ફરી फिर, उपदेक्ष्यामः કહેશું कहेंगे, तैल- તેલ तैल, सर्पिः- ઘી घी, मधूनि અને મધ એ और मध ये, वात- વાત वात, पित्त- પિત્ત पित्त, श्लेष्म- તથા કફને कफको, प्रशमनार्थानि શાન્ત કરવા માટેનાં शमन करनेके लिए, द्रव्याणि દ્રવ્યો द्रव्य, भवन्ति છે हैं ॥१३॥

13. The actions of tastes have been enunciated. Now we shall expound the actions of substances; oil, ghee and honey are the allaying agents in vata, pitta and kapha respectively.

**तत्र तैलं स्नेहौष्ण्यगौरवोपपन्नत्वाद्वातं जयति सततमभ्यस्यमानं; वातो हि रौक्ष्यशैत्यलाघवोपपन्नो विरुद्धगुणो भवति, विरुद्धगुणसन्निपाते हि भूयसाऽल्पमवजीयते, तस्मात्तैलं वातं जयति सततमभ्यस्यमानम्।**

तत्र તેઓમાં इनमें, तैलम् તેલ तैल, स्नेह- સ્નેહ स्नेह, औष्ण्य- ઉષ્ણતા उष्णता, गौरव- તથા ગુરુતાથી तथा गुरुतासे, उपपन्नत्वात् યુક્ત હોવાથી युक्त होनेसे, सततम् સતત निरन्तर, अभ्यस्यमानम् ઉપયોગમાં લેવાતાં उपयोगमें लेने पर, वातम् વાયુને वायुको, जयति જીતે છે जीतता है, हि કારણકે क्योंकि, वातः વાયુ वायु, रौक्ष्य- રૂક્ષતા रूक्षता, शैत्य- શીતતા शीतता, लाघव- લઘુતાથી लघुतासे, उपपन्नः યુક્ત હોવાથી युक्त होनेसे, विरुद्धगुणः તેલથી વિરુદ્ધ ગુણવાળો तैलसे विरुद्ध गुणवाला, भवति છે है, विरुद्धगुण-सन्निपाते વિરુદ્ધ ગુણવાળાં દ્રવ્યોનો સંયોગ થતાં विरुद्ध गुणवाले द्रव्यों-का संयोग होने पर, भूयसा અધિકથી अधिकसे, अल्पम् અલ્પ अल्प, अवजीयते हि જીતાય છે जीता जाता है, तस्मात् તેથી इस लिए, तैलम् તેલ तैल, सततम् સતત निरन्तर, अभ्यस्यमानम् ઉપયોગમાં લેવાતાં उपयोगमें लेनेसे, वातम् વાયુને वायुको, जयति જીતે છે जीतता है;

14-(1). Among these the regular use of oil subdues vata on account of its possessing unctuous, hot, and heavy qualities; for vata possessing as it does, the qualities of dryness, coldness and lightness is of the opposite nature. When there is interaction between qualities of the opposite type, it is the stronger that subdues the weaker. Hence the systematic use of oil subdues vata.

सर्पिषः पित्तशमकत्वम्—

**सर्पिः खल्वेवमेव पित्तं जयति, माधुर्याच्छैत्यान्मन्दत्वाच्च; पित्तं ह्यमधुरमुष्णं तीक्ष्णं च।**

एवम् एव એજ પ્રમાણે इसी प्रकार, सर्पिः खलु ઘી घी, माधुर्यात् મધુરતાથી माधुर्यसे, शैत्यात् શીતતાથી शीततासे, मन्दत्वात् તથા મન્દતાથી एवं मन्द होनेसे, पित्तम् પિત્તને पित्तको, जयति જીતે છે जीतता है, हि કારણ કે क्यों कि, पित्तम् પિત્ત पित्त, अमधुरम् અમધુર अमधुर, उष्णम् ઉષ્ણ उष्ण, तीक्ष्णम् च તથા તીક્ષ્ણ છે तथा तीक्ष्ण है;

14-(2). Similarly ghee subdues pitta owing to its sweet, cooling and slow qualities; for pitta is anti-sweet, hot and acute in quality.

मधुनः श्लेष्मशमकत्वम्—

**मधु च श्लेष्माणं जयति, रौक्ष्यात्तैक्ष्ण्यात् कषायत्वाच्च; श्लेष्मा हि स्निग्धो मन्दो मधुरश्च।**

१३. रसप्रभाव—रसद्रव्यदोषविकारप्रभाव (ग. ज. झ.)
,, प्रशमनार्थानि—प्रशमनानि (च. ध.)
१४. जयति—शमयति (ध.)

१४. मन्दत्वात्—मन्दवीर्यत्वात् (क. च. त. द. ध. प.)
,, मधुरश्च—मधुरश्चेति विपरीतगुणः

मधु च મધ मध, रौक्ष्यात् રૂક્ષતાથી रूक्षतासे, तैक्ष्ण्यात् તીક્ષ્ણતાથી तीक्ष्णतासे, कषायत्वात् च તથા કષાયતાથી तथा कषायतासे, श्लेष्माणम् કફને कफको, जयति જીતે છે जीतता है, हि કારણકે क्योंकि, श्लेष्मा કફ कफ, स्निग्धः સ્નિગ્ધ स्निग्ध, मन्दः મન્દ मन्द, मधुरः च અને મધુર છે और मधुर है।

14-(3). And honey subdues kapha on account of its dry, acute and astringent qualities as kapha is unctuous, deuse and sweet.

वातादिभ्यो गुणतो विपरीतं तान्‌जयति—

**यच्चान्यदपि किञ्चिद् द्रव्यमेवं वातपित्तकफेभ्यो गुणतो विपरीतं स्यात्तच्चैतान्‌जयत्यभ्यस्यमानम्॥१४॥**

यत् च જે જો, अन्यत् બીજું दूसरा, अपि પણ भी, किञ्चित् કોઈ कोई, द्रव्यम् દ્રવ્ય द्रव्य, एवम् આ પ્રમાણે इसी प्रकार, वात- વાતથી वातसे, पित्त- પિત્તથી पित्तसे, कफेभ्यः તથા કફથી तथा कफसे, गुणतः ગુણમાં गुणोंमें, विपरीतम् વિપરીત विपरीत, स्यात् હોય हो, तत् च તે वह, अभ्यस्यमानम् ઉપયોગમાં લેવાતાં उपयोगमें लेने पर, एतान् એઓને इनको, जयति જીતે છે जीतता है ॥ १४॥

14. In this manner, the use of other substances too which are antagonistic in quality to vata, pitta and kapha will subdue these humors when used regularly.

पिप्पली-क्षार-लवणानामतिमात्रसेवननिषेधः —

**अथ खलु त्रीणि द्रव्याणि नात्युपयुञ्जीताधिकमन्येभ्यो द्रव्येभ्यः; तद्यथा—पिप्पली, क्षारः, लवणमिति ॥१५॥**

अथ खलु अन्येभ्यः બીજાં अन्य, द्रव्येभ्यः દ્રવ્યો કરતાં द्रव्योंकी अपेक्षा, त्रीणि ત્રણ तीन, द्रव्याणि દ્રવ્યોને द्रव्योंको, अधिकम् વધારે अधिक, न उपयुञ्जीत ઉપયોગ કરવો ન જોઈએ उपयोग नहीं करना चाहिए, तत् यथा જેમકે जैसे कि, पिप्पली પીપર पिप्पली, क्षारः ક્ષાર क्षार, लवणम् इति તથા લવણ तथा लवण ॥१५॥

15. Now there are three substances whose excessive use is more strictly forbidden than that of other substances. They are long pepper, alkali and common salt.

पिप्पल्या गुणाः, तस्या अतिमात्रसेवने दोषाश्च—

**पिप्पल्यो हि कटुकाः सत्यो मधुरविपाका गुर्व्यो नात्यर्थं स्निग्धोष्णाः प्रक्लेदिन्यो भेषजाभिमताश्च ताः सद्यः; शुभाशुभकारिण्यो भवन्ति; आपातभद्राः, प्रयोगसमसाद्गुण्यात्; दोषसञ्चयानुबन्धाः;**

पिप्पल्यः हि લીંડીપીપર पिप्पली, कटुकाः કટુ कटु, सत्यः હોઈ होती हुई, मधुरविपाकाः મધુર વિપાકવાળી मधुर विपाकवाली, गुर्व्यः તથા ગુરુ છે गुरु हैं, न-अत्यर्थम् स्निग्ध-उष्णाः અત્યંત સ્નિગ્ધ તથા ઉષ્ણ નથી अत्यंत स्निग्ध तथा उष्ण नहीं होती, प्रक्लेदिन्यः અને ક્લેદજનક और क्लेदजनक हैं, ताः તેઓને उनका, सद्यः થોડી વારના પ્રયોગથી अल्प समयके प्रयोगसे, भेषज- अभिमताः च ઔષધ તરીકે સ્વીકારવામાં આવે છે औषधार्थ स्वीकार किया जाता है, शुभ-अशुभ-कारिण्यः भवन्ति તેઓ થોડી વારના પ્રયોગથી શુભ કરનાર થાય છે અને બહુ વારના પ્રયોગથી અશુભ કરનાર થાય છે वे अल्प कालके प्रयोगसे शुभ करनेवाली होती हैं एवं बहुत कालके प्रयोगसे अशुभ करनेवाली होती हैं, प्रयोगसम-साद्गुण्यात् થોડીવારના તથા અલ્પમાત્રાના પ્રયોગથી સારો લાભ આપવાને લીધે તેઓ अल्प कालके एवं अल्प मात्राके प्रयोगसे अच्छा लाभ देनेके कारण वे, आपात-भद्राः તત્કાલ જ કલ્યાણકારક છે तत्काल ही कल्याणकारक हैं, दोष-

१४. गुणतो विपरीतं स्यात्तच्चैतान्‌जयत्यभ्यस्यमानम्— गुणतो विपरीतं विरुद्धं, तच्चैतान् जयत्यत्यभ्यस्यमानम् (ख.)

१६. सत्यः—सद्यः (ह. प.)

,, गुर्व्यः—गुर्व्योऽपि (प.)

सञ्चय-अनुबन्धाः તેઓનો અતિ ઉપયોગ પરિણામમાં દોષોનો સંચય કરનાર છે उनका अति उपयोग परिणाममें दोषोंका संचय करनेवाला है;

16-(1). Long pepper, pungent though in taste is, sweet in post-digestion, heavy, neither overmuch unctuous nor over-much hot, is deliquescent and esteemed as medicine. It is at once productive of beneficial and baneful effects. If administered in the proper time and measure, its action is at once beneficial.

**सततमुपयुज्यमाना हि गुरुप्रक्लेदित्वाच्छ्लेष्माणमुत्क्लेशयन्ति, औष्ण्यात् पित्तं, न च वातप्रशमनायोपकल्पन्तेऽल्पस्नेहोष्णभावात्; योगवाहिन्यस्तु खलु भवन्ति; तस्मात् पिप्पलीर्नात्युपयुञ्जीत ॥ १६ ॥**

हि કારણકે તેઓ क्योंकि वे, सततम् નિરન્તર निरन्तर, उपयुज्यमानाः ઉપયોગમાં લેવાતાં उपयोगमें लिये जाने पर, गुरु- ગુરુ હોવાથી गुरु होनेसे, प्रक्लेदित्वात् તથા ક્લેદજનક હોવાથી तथा क्लेदजनक होनेसे, श्लेष्माणम् કફનો कफका, औष्ण्यात् અને ઉષ્ણતાથી और उष्ण होनेसे, पित्तम् પિત્તનો पित्तका, उत्क्लेशयन्ति ઉત્ક્લેશ કરે છે उत्क्लेश करती हैं, अल्प- અલ્પ कम, स्नेह- સ્નેહ स्नेह, उष्णभावात् તથા ઉષ્ણતા હોવાથી तथा उष्णिमा होनेसे, वात- વાતની वातकी, उपशमनाय શાંતિ માટે शान्तिके लिए, न च उपकल्पन्ते થતી નથી नहीं होती, योगवाहिन्यः तु खलु બની તેઓ યોગ વાહી और ये योगवाही, भवन्ति છે हैं, तस्मात् તેથી इस लिए, पिप्पलीः પીપર पिप्पली, न अत्युपयुञ्जीत અતિ ઉપયોગમાં ન લેવી જોઈએ अति उपयोगमें नहीं लेनी चाहिए ॥ १६ ॥

16. But if continued for over a long period, it results in morbid cumulative effect; as, due to its heavy and deliquescent qualities, it arouses kapha. It aggravates pitta on account of its hot property and is not able to allay vata because of its meagreness of unctuous and hot qualities. Nevertheless it makes a good vehicle. In view of these considerations long pepper should not be used in excess.

क्षारस्य गुणाः, तस्यातिमात्रसेवने दोषाश्च—

**क्षारः पुनरौष्ण्यतैक्ष्ण्यलाघवोपपन्नः क्लेदयत्यादौ पश्चाद्विशोषयति, स पचनदहनभेदनार्थमुपयुज्यते; सोऽतिप्रयुज्यमानः केशाक्षिहृदयपुंस्त्वोपघातकरः संपद्यते ।**

औष्ण्य- ઉષ્ણતાથી उष्णतासे, तैक्ष्ण्य- તીક્ષ્ણતાથી तीक्ष्णतासे, लाघव- તથા લઘુતાથી तथा लघुतासे, उपपन्नः યુક્ત युक्त, क्षारः पुनः ક્ષાર क्षार, आदौ પહેલાં प्रथम, क्लेदयति ક્લેદ ઉત્પન્ન કરે છે क्लेद उत्पन्न करता है, पश्चात् તેમજ પછી एवं पीछेसे, विशोषयति શોષી લે છે सुखाता है, सः તે वह, पचन- પચન માટે पचनके लिए, दहन- બાળવા માટે जलानेके लिए, भेदनार्थम् અને ભેદન માટે और भेदनके लिए, उपयुज्यते ઉપયોગમાં લેવાય છે उपयोगमें लिया जाता है, सः તે वह, अतिप्रयुज्यमानः અતિ ઉપયોગમાં લેવાતાં अति उपयोगमें होने पर, केश- વાળ बाल, अक्षि આંખ आंख, हृदय- હૃદય हृदय, पुंस्त्व તથા પુરુષાતનને तथा पुरुषत्वके लिए, उपघातकरः હાનિકારક हानिकारक, संपद्यते બને છે होता है;

17-(1). Alkali is possessed of hot, acute and light qualities; it first acts as a deliquescent and later as a desccant. It is used as a digestive, caustic and disruptive agent. If used in excess, it results in harmful effects to hair, eyes, heart and manhood.

---

१७. औष्ण्य–रौक्ष्य (च.)

,, पश्चाद्विशोषयति—पश्चाद्विशोषयति दहति पचति भिनत्ति संघातम् (च. ध.)

,, विशोषयति—विशोधयति (ङ. प.)

**ये ह्येनं ग्रामनगरनिगमजनपदाः सततमुपयुञ्जते त आन्ध्यषाण्ढ्यखालित्यपालित्यभाजो हृदयापकर्तिनश्च भवन्ति, तद्यथा—प्राच्याश्चीनाश्च; तस्मात् क्षारं नात्युपयुञ्जीत ॥१७॥**

**ये हि** જેઓ जो, **एनम्** એને इनका, **ग्राम-** ગામ ग्राम, **नगर-** નગર नगर, **निगम** पुरी पुरी, **जनपदाः** તથા જનપદમાં રહેનાર લોકો जनपदके लोग, **सततम्** નિરન્તર निरन्तर, **उपयुञ्जते** ઉપયોગ કરે છે उपयोग करते हैं, **ते** તેઓ वे, **आन्ध्य** અંધાપા दृष्टिकी क्षीणता, **षाण्ढ्य-** નપુંસકતા नपुंसकत्व, **खालित्य-** ટાલ गंज, **पालित्यभाजः** તેમજ વળિયાંવાળા एवं पलितवाले, **हृदय-** તથા હૃદયમાં तथा हृदयमें, **अपकर्तिनः च** વેરવા જેવી વેદનાવાળા कर्तनके समान वेदनावाले, **भवन्ति** થાય છે होते हैं, **तत् यथा** જેમકે जैसेकि, **प्राच्याः** પૂર્વના લોકો पूर्वके लोग, **चीनाः च** અને ચીનાઓ और चीनके लोग, **तस्मात्** તેથી इस लिए, **क्षारम्** ક્ષારને क्षारको, **न अत्युपयुञ्जीत** અતિ ઉપયોગમાં ન લેવો જોઈએ अति उपयोगमें नहीं लेना चाहिए ॥ १७ ॥

17. Those communities, whether rural, urban or itenerant, which make constant use of alkali, develop blindness, impotency, baldness and greyness of hair, and constricting pain in the cardiac region. Instances of such communities are—the people of Eastern countries and the Chinese. In view of these considerations, one should not use alkali in excess.

लवणस्य गुणाः, तस्यातिमात्रसेवने दोषाश्च—

**लवणं पुनरौष्ण्यतैक्ष्ण्योपपन्नम्, अनतिगुरु, अनतिस्निग्धम्, उपक्लेदि, विस्रंसनसमर्थम्, अन्नद्रव्यरुचिकरम्, आपातभद्रं प्रयोगसमसाद्गुण्यात्, दोषसंचयानुबन्धं, तद्रोचनपाचनोपक्लेदनविस्रंसनार्थमुपयुज्यते। तदत्यर्थमुपयुज्यमानं ग्लानिशैथिल्यदौर्बल्याभिनिर्वृत्तिकरं शरीरस्य भवति। ये ह्येनद्ग्रामनगरनिगमजनपदाः सततमुपयुञ्जते, ते भूयिष्ठं ग्लास्नवः शिथिलमांसशोणिता अपरिक्लेशसहाश्च भवन्ति।**

१८. प्रयोगसमसाद्गुण्यात्–प्रयोगातिरेकात् (ग.)

**लवणम्** पुनः લવણ लवण, **औष्ण्य-** ઉષ્ણતાથી उष्णतासे, **तैक्ष्ण्य-** અને તીક્ષ્ણતાથી और तीक्ष्णतासे, **उपपन्नम्** યુક્ત युक्त, **अनतिगुरु** બહુ નહિ ભારે न बहुत भारी, **अनतिस्निग्धम्** નહિ બહુ સ્નિગ્ધ न बहुत स्निग्ध **उपक्लेदि** ક્લેદકારક क्लेदकारक, **विस्रंसन-** સ્રંસન કરવામાં स्रंसन करनेमें, **समर्थम्** શક્તિમાન शक्तिशाली, **अन्न-** અન્નના अन्नके, **द्रव्य-** દ્રવ્યમાં द्रव्यमें, **रुचिकरम्** રુચિ કરાવનાર रुचिकारक, **प्रयोगसमसाद्गुण्यात्** થોડી વારના તથા અલ્પ માત્રાના પ્રયોગથી સારો લાભ આપવાને લીધે अल्प कालके एवं अल्प मात्रा के प्रयोगसे अच्छा लाभ देनेके कारण, **आपातभद्रम्** તત્કાલ જ કલ્યાણકારક तत्कालही कल्याणकारक, **दोष-संचय-अनुबन्धम्** તથા અતિ ઉપયોગથી પરિણામમાં દોષોનો સંચય કરનાર છે તથા अति उपयोगसे परिणाममें दोषोंका संचय करनेवाला है, **तत्** તેનો वह, **रोचन-** રોચન रोचन, **पाचन-** પાચન पाचन, **उपक्लेदन-** ક્લેદન क्लेदन, **विस्रंसन-अर्थम्** તથા વિસ્રંસન માટે तथा विस्रंसनके लिए, **उपयुज्यते** ઉપયોગ કરવામાં આવે છે बरता जाता है, **तत्** તે वह, **अत्यर्थम्** અતિ પ્રમાણમાં अधिक, **उपयुज्यमानम्** ઉપયોગમાં લેવાતાં उपयोगमें लेने पर, **शरीरस्य** શરીરમાં शरीरमें, **ग्लानि-** ગ્લાનિ ग्लानि, **शैथिल्य-** શિથિલતા शिथिलता, **दौर्बल्य-** તેમજ દુર્બલતા एवं दुर्बलता, **अभिनिर्वृत्तिकरम्** ઉત્પન્ન કરનાર उत्पन्न करनेवाला, **भवति** થાય છે होता है, **ये हि** જેઓ जो, **ग्राम-** ગામ ग्राम, **नगर-** નગર नगर, **निगम-** पुरी पुरी, **जनपदाः** અને જનપદમાં રહેનાર और जनपदके निवासी, **एनत्** એને इसको, **सततम्** નિરન્તર निरन्तर, **उपयुञ्जते** ઉપયોગમાં લે છે उपयोगमें लेते हैं, **ते** તેઓ वे, **भूयिष्ठम्** ઘણે ભાગે अधिकतासे, **ग्लास्नवः** ગ્લાનિવાળા ग्लानियुक्त, **शिथिल-** શિથિલ शिथिल, **मांस-** માંસવાળા मांसवाले, **शोणिताः** તથા લોહીવાળા तथा रक्तवाले, **अपरिक्लेशसहाः च** અને ક્લેશ સહન ન કરી શકનાર और क्लेश न सहनेवाले **भवन्ति** થાય છે होते हैं।

18-(1). Common salt is possessed of hot and acute qualities, is not very heavy, unctuous, is deliquescent, acts as a laxative, gives a relish to food-stuffs; given in proper course and combination, it has immediate beneficial action, but continued over a long period results in morbid cumulative effect. It is prescribed as an appetizer, digestive, deliquescent and laxative. Used in excess, it causes depression, flabbiness and debility in the body. Those communities which are given to use of salt, whether they are country-people, city-dwellers or itinerants, become languid, flabby and anemic and are unable to bear hard-ships.

**तद्यथा—बाह्लीकसौराष्ट्रिकसैन्धवसौवीरकाः; ते हि पयसाऽपि सह लवणमश्नन्ति। येऽपीह भूमेरत्यूषरा देशास्तेष्वोषधिवीरुद्वनस्पतिवानस्पत्या न जायन्तेऽल्पतेजसो वा भवन्ति, लवणोपहतत्वात्। तस्माल्लवणं नात्युपयुञ्जीत। ये ह्यतिलवणसात्म्याः पुरुषास्तेषामपि खालित्यपालित्यानि वलयश्चाकाले भवन्ति ॥१८॥**

**तत् यथा** જેમકે जैसकि, **बाह्लीक-** બાહ્લીક દેશના લોકો बाह्लीक देशके लोग, **सौराष्ट्रिक-** સૌરાષ્ટ્ર દેશના લોકો सौराष्ट्रके लोग, **सैन्धव-** સિન્ધુપ્રદેશના લોકો सिन्धुप्रदेशके लोग, **सौवीरकाः** અને સૌવીર દેશના લોકો और सौवीर देशके लोग, **ते हि** તેઓ वे, **पयसा अपि सह** દૂધની સાથે પણ दूधके साथ भी, **लवणम्** લવણ लवणको, **अश्नन्ति** ખાય છે खाते हैं, **ये अपि** વળી જે और जो, **इह** આ લોકમાં इस लोकमें, **भूमेः** પૃથ્વીના पृथ्वीके, **अत्यूषराः** અતિ ઊષર अति ऊषर, **देशाः** દેશો છે देश हैं, **तेषु** તેઓમાં उनमें, **लवण**लवणथी लवणसे, **उपहतत्वात्** ઉપહત થયેલા હોવાથી उपघातको प्राप्त होनेके कारण, **ओषधि-** ઓષધિ औषधि, **वीरुत्-** વીરુત્ वीरुत्, **वनस्पति-** વનસ્પતિ (ફલવાળાં વૃક્ષાદિ) वनस्पति (फलवाले वृक्षादि), **वानस्पत्याः** વાનસ્પત્ય (ફલપુષ્પવાળાં વૃક્ષાદિ) वानस्पत्य (फलपुष्पवाले वृक्षादि), **न जायन्ते** ઉત્પન્ન થતાં નથી उत्पन्न नहीं होते, **अल्पतेजसः वा** અથવા અલ્પ વીર્યવાળાં अथवा अल्प वीर्यवाले, **भवन्ति** થાય છે होते हैं, **तस्मात्** તેથી इस लिए, **लवणम्** લવણને लवणको, **न अत्युपयुञ्जीत** અતિ ઉપયોગમાં નહીં લેવું જોઈએ अति उपयोगमें नहीं लेना चाहिए, **ये हि** જે जो, **पुरुषाः** પુરુષો पुरुष, **अतिलवणसात्म्याः** અતિ લવણના સાત્મ્યવાળા હોય છે अति लवणके सात्म्यवाले होते हैं, **तेषाम्** તેઓને उनमें, **अपि** પણ भी, **अकाले** અકાળે अकालमें, **खालित्य-** ટાલ गंजेपन, **पालित्यानि** પળિયાં पलितता, **वलयः च** અને કરચલીઓ और झुर्रियां, **भवन्ति** થાય છે होती हैं ॥१८॥

18. They are the people of Bahlika, Saurashtra (Kathiawar), Sind, and Sauveera. They always habitually take salt even in their milk; also where-ever there are saltish regions of land, their herbs, creepers, trees and vegetation either do not grow at all or are of poor quality, on account of the inhibiting effect of salt on their growth. Hence salt should not be used in excess. Even those people who have become tolerant to excessive use of salt get premature baldness, greyness and wrinkles.

तेषां तत्सात्म्यतः क्रमेणापगमनं श्रेयः—

**तस्मात्तेषां तत्सात्म्यतः क्रमेणापगमनं श्रेयः। सात्म्यमपि हि क्रमेणोपनिवर्त्यमानमदोषमल्पदोषं वा भवति ॥१९॥**

१८. खालित्यपालित्यानि–खालित्येन्द्रलुप्तपालित्यानि (ख. घ. छ. ज. झ. त.)

**तस्मात्** तेथी इसलिए, **तत्सात्म्यतः** ते सात्म्यथी उस सात्म्यसे, **तेषाम्** तेओनुं उनका, **क्रमेण** क्रमे क्रमे धीरे धीरे, **अपगमनम्** दूर थवुं हटना, **श्रेयः** श्रेयस्कर छे श्रेयस्कर है, **हि** कारण के क्योंकि, **सात्म्यम्** सात्म्य सात्म्य, **अपि** पण भी, **क्रमेण** क्रमे क्रमे धीरे धीरे, **उपनिवर्त्यमानम्** छोडवामां आवतां छोड़ने पर, **अदोषम्** दोषरहित दोषरहित, **अल्पदोषम्** अथवा अल्प दोषवाळुं अथवा अल्प दोषवाला, **भवति** थाय छे होता है ॥१९॥

19. Even in the case of such people, therefore, it is advisable to effect a gradual withdrawal from the habit formed. A gradual withdrawal as previously laid down from a habit will be attended with no severe reaction or with very mild reaction.

सात्म्यस्य लक्षणं भेदाश्च—

**सात्म्यं नाम तद् यदात्मन्युपशेते; सात्म्यार्थो ह्युपशयार्थः ।**

**यत्** जे जो, **आत्मनि** पोताने अपनेको, **उपशेते** सुखकर थाय छे सुखकर होता है, **तत्** ते वह, **सात्म्यम् नाम** ओकसात्म्य छे ओकसात्म्य है, **उपशयार्थः** उपशयनो अर्थ उपशयका अर्थ, **हि** ज ही, **सात्म्यार्थः** सात्म्यनो अर्थ छे सात्म्यका अर्थ है;

20-(1). Habituation is that which agrees with one's system. Thus habituation has the same connotation as homologation.

**तत् त्रिविधं प्रवरावरमध्यविभागेन; सप्तविधं तु रसैकैकत्वेन सर्वरसोपयोगाच्च । तत्र सर्वरसं प्रवरम्, अवरमेकरसं, मध्यं तु प्रवरावरमध्यस्थम् । तत्रावरमध्याभ्यां सात्म्याभ्यां क्रमेणैव प्रवरमुपपादयेत् सात्म्यम् । सर्वरसमपि च सात्म्यमुपपन्नः प्रकृत्याद्युपयोक्त्रष्टमानि सर्वाण्याहारविधिविशेषायतनान्यभिसमीक्ष्य हितमेवानुरुध्येत ॥ २० ॥**

**तत्** ते ओकसात्म्य वह ओकसात्म्य, **प्रवर-** प्रवर प्रवर, **अवर-** अवर अवर, **मध्य-** तथा मध्य तथा मध्य, **विभागेन** ओ विभागथी इन विभागसे, **त्रिविधम्** त्रण प्रकारनुं छे तीन प्रकारका है, **रस-एकैकत्वेन** ओक ओक रसना उपयोगथी एक एक रसके उपयोगसे, **सर्वरस-** तथा सर्व रसना तथा सब रसोंके, **उपयोगात् च** उपयोगथी उपयोगसे, **तु** तो तो, **सप्तविधम्** सात प्रकारनुं छे सात प्रकारका है, **तत्र** तेमां इसमें, **सर्वरसम्** सर्वरसवाळुं सब रसोंवाला, **प्रवरम्** प्रवर (श्रेष्ठ) छे प्रवर है, **एकरसम्** ओक रसवाळुं एक रसवाला, **अवरम्** अवर (कनिष्ठ छे) अवर है, **प्रवर-** प्रवर प्रवर, **अवर-** अने अवरनी और अवरके, **मध्यस्थम्** वच्चेनुं बीचका, **तु** तो तो, **मध्यम्** मध्य (मध्यम छे) मध्य है, **तत्र** त्यां इनमें, **अवर-** अवर अवर, **मध्याभ्याम्** तथा मध्य तथा मध्य, **सात्म्याभ्याम्** सात्म्यथी सात्म्योंसे, **क्रमेण एव** क्रमे क्रमे धीरे धीरे, **प्रवरम्** प्रवर प्रवर, **सात्म्यम्** सात्म्य सात्म्यको, **उपपादयेत्** प्राप्त करवुं जोईओ प्राप्त करना चाहिए, **सर्वरसम् च अपि** सर्व रसवाळा सब रसवाले, **सात्म्यम्** सात्म्यने सात्म्यको, **उपपन्नः** प्राप्त थयेलाओ पाये हुएको, **प्रकृत्यादि-** प्रकृतिथी शरू करी प्रकृतिसे लेकर, **उपयोक्त्रष्टमानि** उपयोक्ता जेमां आठमो छे ओवा उपयोक्ता जिनमें आठवाँ है ऐसे, **सर्वाणि** बधा सब, **आहार-** आहार आहार, **विधि-** विधि विधि, **विशेष-** विशेषना विशेषके, **आयतनानि** कारणने कारणको, **अभिसमीक्ष्य** जोईने देखकर, **हितम्** हित हितका, **एव** ज ही, **अनुरुध्येत** सेववुं जोईओ सेवन करे ॥२०॥

20. Now homologation is of three kinds—best, poor, and medium. It is again of seven kinds—agreeability to each or one of the six tastes and the seventh is agreeability to all of them combined. Among these, the agreeability to all the tastes is the best type of homologation; the poorest

२०. मध्यं तु—मध्यमन्तु (त.)
,, सात्म्यमुपपन्नः—द्रव्यसात्म्यमुपपन्नं (ध. च. त.)
,, ,, —सात्म्यमुपपन्नं सर्वाण्याहारविधिविशेषायतान्यभिसमीक्ष्य (ध.)

type is the agreeability only to a single taste; while the medium type of agreeability is the mean between the best and the poorest. So from the poorest and the medium agreeabilities one should develop the homologation of the best type, that is, agreeability to all the tastes. After acquiring homologation to all the tastes, one should resort to what is wholesome, having considered well the special factors concerning diet and dietetics described in the octalogue beginning with natural qualities.

अष्टावाहारविधिविशेषायतनानि—

**तत्र खल्विमान्यष्टावाहारविधिविशेषायतनानि भवन्ति; तद्यथा—प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्त्रष्टमानि (भवन्ति) ॥२१॥**

तत्र खलु તેમાં उसमें, इमानि આ ये, अष्टौ આઠ आठ, आहार- આહાર आहर, विधि- વિધિ विधि, विशेष- વિશેષનાં विशेषके, आयतनानि આયતન आयतन, भवन्ति થાય છે होते हैं, तत् यथा જેમકે जैसेकि, प्रकृति- પ્રકૃતિ प्रकृति, करण- કરણ करण, संयोग- સંયોગ संयोग, राशि- રાશિ राशि, देश- દેશ देश, काल- કાલ काल, उपयोगसंस्था- ઉપયોગસંસ્થા उपयोगसंस्था, उपयोक्तृ- અને ઉપયોક્તા છે और उपयोक्ता है, अष्टमानि આઠમો જેમાં એવાં आठवाँ जिनमें ऐसे, (भवन्ति થાય છે होते हैं) ॥ २१ ॥

21. The following are the eight factors of diet and dietetics. These are:— Natural qualities, Karana (preparation), Samyoga (combination), Rasi (quantum), Desa (habitat), Kala (stage of disease), rules of Upayoga (use) and Upayokta (user)—this makes the octalogue of diet and dietetics.

२१. उपयोक्त्रष्टमानि—उपयोक्तारोऽष्टमानि (प.)

प्रकृतेः विवरणम्—

**तत्र प्रकृतिरुच्यते स्वभावो यः, स पुनराहारौषधद्रव्याणां स्वाभाविको गुर्वादिगुणयोगः; तद्यथा-माषमुद्गयोः, शूकरैणयोश्च ॥ (१) ॥**

तत्र તેમાં इनमें, यः જે जो, स्वभावः સ્વભાવ છે स्वभाव है, सः તે वह, प्रकृतिः પ્રકૃતિ प्रकृति, उच्यते કહેવાય છે कही जाती है, सः पुनः અને તે और वह, आहार- આહાર आहार, औषध- અને ઔષધનાં और औषधके, द्रव्याणाम् દ્રવ્યોનો द्रव्योंका, स्वाभाविकः સ્વાભાવિક स्वाभाविक, गुर्वादिगुणयोगः ગુરુ આદિ ગુણો સાથેનો સંબંધ છે गुरु आदि गुणोंसे सम्बन्ध है, तत् यथा જેમકે जैसेकि, माषमुद्गयोः અડદ અને મગનો उड़द और मूंगका, शूकरैणयोः च તથા વરાહ અને એણનો तथा वराह और एणका ॥ (१) ॥

22-(1). Among these, natural qualities are the innate properties of substances. The presence of qualities like heaviness etc., is the natural property of substances used as diet or drug. Thus, heaviness is the nature of black-gram and pork, and lightness that of green-gram and venison.

करणस्य विवरणम्—

**करणं पुनः स्वाभाविकानां द्रव्याणामभिसंस्कारः। संस्कारो हि गुणान्तराधानमुच्यते ।**

स्वाभाविकानां पुनः સ્વાભાવિક स्वाभाविक, द्रव्याणाम् દ્રવ્યોનો द्रव्योंका, अभिसंस्कारः અભિસંસ્કાર अभिसंस्कार, करणम् કરણ છે करण है, गुणान्तराधानम् અન્ય ગુણોનું સ્થાપન अन्य गुणोंका स्थापन, संस्कारः સંસ્કાર संस्कार, उच्यते કહેવાય છે कहा जाता है ।

22-(1 a). Preparation is the process performed to modify the natural properties of substances. That process

again is that which modifies radically the properties of substances.

**ते गुणास्तोयाग्निसन्निकर्षशौचमन्थनदेशकालवासनभावनादिभिः कालप्रकर्षभाजनादिभिश्चाधीयन्ते ॥ (२) ॥**

**तोय-** જળ जल, **अग्निसन्निकर्ष-** અને અગ્નિનો સંયોગ और अग्निका संयोग, **शौच-** શુદ્ધિ शुद्धि, **मन्थन-** મથન मथना, **देश-** દેશ देश, **काल-** કાળ काल, **वासन-** વાસ દેવી सुगंध देना, **भावना-** ભાવના દેવી भावना देना, **आदिभिः च** વગેરે દ્વારા वगैरहसे, **कालप्रकर्ष-** અને કાળના પ્રકર્ષ और कालके प्रकर्ष, **भाजनादिभिः च** તથા પાત્રના ભેદ વગેરે દ્વારા तथा पात्रके भेद वगेरहसे, **ते गुणाः** એ ગુણોનું उन गुणोंका, **आधीयन्ते** સ્થાપન કરવામાં આવે છે स्थापन किया जाता है ॥ (२) ॥

22-(2). This modification is brought about by dilution, application of heat (vaporization, distillation and sublimation), clarification, emulsification, storing, maturing, flavouring, impregnation, preservation and the material of receptacle.

संयोगस्य विवरणम्—

**संयोगः पुनर्द्वयोर्बहूनां वा द्रव्याणां संहतीभावः, स विशेषमारभते, यं पुनर्नैकैकशो द्रव्याण्यारभन्ते; तद्यथा—मधुसर्पिषोः, मधुमत्स्यपयसां च संयोगः ॥ (३) ॥**

**द्वयोः** બે दो, **बहूनाम्** वा અથવા ઘણાં अथवा बहुत, **द्रव्याणाम्** દ્રવ્યોનું द्रव्योंका, **संहतीभावः पुनः** મિશ્રણ मिश्रण, **संयोगः** સંયોગ કહેવાય છે संयोग कहा जाता है, **सः** તે वह, **विशेषम्** વિશેષને विशेषको, **आरभते** ઉત્પન્ન કરે છે उत्पन्न करता है, **यम्** જેને जिसे, **द्रव्याणि** દ્રવ્યો द्रव्य, **एकैकशः** એક એક રહીને एक एक रह कर, **न आरभन्ते** ઉત્પન્ન કરતાં નથી उत्पन्न नहीं करते, **तत् यथा** જેમકે जैसे कि, **मधुसर्पिषोः** મધ અને ઘીનો शहद और घीका, **मधुमत्स्यपयसाम् च** તથા મધ, માછલી અને દૂધનો तथा शहद, मछली और दूधका, **संयोगः** સંયોગ संयोग ॥ (३) ॥

22-(3). Combination is the combining together of two or more substances. This chemical combination exhibits special properties which none of the constituents ever possessed. Examples—the combination of honey and ghee; (honey or ghee taken alone is wholesome to the body but combined together, they become toxic.) Similarly, the combination of honey, fish and milk has a toxic effect.

राशेः विवरणम्—

**राशिस्तु सर्वग्रहपरिग्रहौ मात्रामात्रफलविनिश्चयार्थः । तत्र सर्वस्याहारस्य प्रमाणग्रहणमेकपिण्डेन सर्वग्रहः, परिग्रहः पुनः प्रमाणग्रहणमेकैकश्येनाहारद्रव्याणाम् । सर्वस्य हि ग्रहः सर्वग्रहः, सर्वतश्च ग्रहः परिग्रह उच्यते ॥ (४) ॥**

**सर्वग्रहपरिग्रहौ तु** સર્વગ્રહ અને પરિગ્રહ सर्वग्रह और परिग्रह, **राशिः** રાશિ કહેવાય છે राशि कहा जाता है, **मात्रामात्र-** અને તે માત્રાવાળા તેમજ હીન તથા અધિક માત્રાવાળા આહાર કે ઔષધનાં और वह मात्रावाले एवं हीन तथा अधिक मात्रावाले आहार या औषधके, **फलविनिश्चयार्थः** શુભ તથા અશુભ ફલનો નિશ્ચય કરવા માટે છે शुभ तथा अशुभ फलका निश्चय करनेके लिए है, **तत्र** તેમાં इनमें, **सर्वस्य** સંપૂર્ણ सम्पूर्ण, **आहारस्य** આહારનું आहारका, **एकपिण्डेन** એક પિંડથી एकपिण्डसे, **प्रमाणग्रहणम्** પ્રમાણગ્રહણ प्रमाणग्रहण, **सर्वग्रहः** સર્વગ્રહ છે सर्वग्रह है, **आहारद्रव्याणाम्**

२२-(२). देशकालवासनभावनादिभिः—देशकालवशेन भावनादिभिः (च. श. त. द. ध)
,, ,, —देशकालवासभावनादिभिः (प.)
२२-(३). पुनः—तु (ध.)
,, यं पुनर्नैकैकशो—यन्नैकशो (ध.)

२२-(४). मात्रामात्रफल—मात्रामात्राफल (द.)
,, विनिश्चयार्थः—विनिश्चयार्थः प्रकृतः (ध.)
,, एकैकश्येन—एकैकत्वेन (ध. च. ज. त.)

पुनः આહારદ્રવ્યોનું आहारद्रव्योंका, एकैकश्वेन એક એક કરીને एक एक करके, प्रमाणग्रहणम् પ્રમાણ-ગ્રહણ प्रमाणग्रहण, परिग्रहः પરિગ્રહ છે परिग्रह है, सर्वस्य हि બધાનું જ समीका, ग्रहणम् ગ્રહણ ग्रहण, सर्व-ग्रहः સર્વગ્રહ सर्वग्रह, सर्वतः च અને દરેકનું और प्रत्येकका, ग्रहः અલગ અલગ ગ્રહણ भिन्न भिन्न ग्रहण, परिग्रहः પરિગ્રહ परिग्रह, उच्यते કહેવાય છે कहा जाता है ॥(४)॥

22-(4). The Rasi (quantum) is the measure of the total mass and of each constituent in order to determine the effects of the right and wrong doses. The measure of the entire meal as a whole is the total measurement. The measuring of each article of diet is detailed measurement. Measuring all together is total measurement; measuring the parts separately is detailed measurement.

देशस्य विवरणम्—

**देशः पुनः स्थानं; स द्रव्याणामुत्पत्तिप्रचारौ देशसात्म्यं चाचष्टे ॥ (५) ॥**

स्थानम् पुनः સ્થાન स्थान, देशः દેશ કહેવાય છે देश कहा जाता है, सः તે वह, द्रव्याणाम् દ્રવ્યોના द्रव्योंके, उत्पत्तिप्रचारौ ઉત્પત્તિપ્રચાર उत्पत्तिप्रचार, देशसात्म्यम् च અને દેશસાત્મ્યને और देशसात्म्यको, आचष्टे કહે છે कहता है ॥ (५) ॥

22-(5). Habitat is a geographic region. It indicates variations in qualities of substances due to difference in soil, use and climate.

कालस्य विवरणम्—

**कालो हि नित्यगश्चावस्थिकश्च; तत्रावस्थिको विकारमपेक्षते, नित्यगस्तु ऋतुसात्म्यापेक्षः॥(६)॥**

कालः हि કાળ काल, नित्यगः નિત્યગ नित्यग, आवस्थिकः च અને આવસ્થિક છે और आवस्थिक है, तत्र તેમાં इनमें, आवस्थिकः આવસ્થિક आवस्थिक, विकारम् વિકારની विकारकी, अपेक्षते અપેક્ષા રાખે છે अपेक्षा रखता है, नित्यगः तु અને નિત્યગ और नित्यग, ऋतुसात्म्य- ઋતુસાત્મ્યની ऋतुसात्म्यकी, अपेक्षः અપેક્ષા રાખે છે अपेक्षा रखता है ॥ (६) ॥

22-(6). 'Time' is used in two senses – time in the general sense and time in the sense of a stage. Now 'Stage' is used in relation to disease, and 'Time' in the general sense is used in relation to seasonal wholesomeness.

उपयोगसंस्थाया विवरणम्—

**उपयोगसंस्था तूपयोगनियमः; स जीर्णलक्षणापेक्षः ॥ (७) ॥**

उपयोगसंस्था तु ઉપયોગ સંસ્થા એ उपयोगसंस्था यह, उपयोगनियमः ઉપયોગ માટેનો નિયમ છે उपयोगके लिए नियम है, सः તે वह, जीर्णलक्षणः પચી ગયેલા આહારનાં લક્ષણોની पचे हुए आहारके लक्षणोंकी, अपेक्षः અપેક્ષા રાખે છે अपेक्षा करता है ॥(७)॥

22-(7). The procedure in diet constitutes the dietetic rules. They are determined by the strength of digestion.

उपयोक्तुः विवरणम्—

**उपयोक्ता पुनर्यस्तमाहारमुपयुङ्क्ते, यदायत्तमोकसात्म्यम्। इत्यष्टावाहारविधिविशेषायतनानि व्याख्यातानि भवन्ति ॥२२॥**

उपयोक्ता ઉપયોક્તા उपयोक्ता, यः पुनः જે जो, तम् आहारम् તે આહારનો उस आहारको, उपयुङ्क्ते ઉપયોગ કરે છે उपयोग करता है, उपयोक्ता તે ઉપયોક્તા કહેવાય છે वह उपयोक्ता कहाता है, यदायत्तम्

२२-(५). स्थानं; स द्रव्याणामुत्पत्तिप्रचारौ देशसात्म्यं चाचष्टे- अधिष्ठानद्रव्योत्पत्तिप्रचारादिस्थानं व्याचष्टे (प.)

२२. व्याख्यातानि भवन्ति-भवन्ति (ध.)

જેને આધીન जिसके अधीन, ओकसात्म्यम् ઓકસાત્મ્ય છે ओकसात्म्य है, इति આ પ્રમાણે इस तरह, अष्टौ આઠ आठ, आहारविधि- આહારવિધિના आहारविधिके, विशेष- ભેદનાં भेदके, आयतनानि કારણોનું कारणोंका, व्याख्यातानि भवन्ति વ્યાખ્યાન કરવામાં આવ્યું છે व्याख्यान किया गया है ॥ २२ ॥

22. The user is he who makes use of food; habituation depends upon him. Thus we have explained the eight special factors in the science of diet and dietetics.

आहारविधिविशेषायतनज्ञानफलम्—

**एषां विशेषाः शुभाशुभफलाः परस्परोपकारका भवन्ति; तान् बुभुत्सेत, बुद्ध्वा च हितेप्सुरेव स्यात्; न च मोहात् प्रमादाद्वा प्रियमहितमसुखोदर्कमुपसेव्यमाहारजातमन्यद्वा किंचित् ॥ २३ ॥**

एषाम् એઓના इनके, विशेषाः ભેદો भेद, शुभाशुभ- શુભ અને અશુભ शुभ और अशुभ, फलाः ફળવાળા फलवाले, परस्पर- એમે એક બીજાના और एक दूसरेके, उपकारकाः ઉપકારક उपकारक, भवन्ति થાય છે होते हैं, तान् તેઓને उनको, बुभुत्सेत જાણવાની ઇચ્છા રાખવી જોઈએ जाननेकी इच्छा करनी चाहिए, बुद्ध्वा च અને જાણીને और जान कर, हितेप्सुः एव હિતકર વસ્તુની ઇચ્છાવાળા જ हितकर वस्तुकी इच्छावाला ही, स्यात् થવું જોઈએ होना चाहिए, मोहात् મોહથી मोहसे, प्रमादात् वा કે પ્રમાદથી या प्रमादसे, प्रियम् પ્રિય છતાં प्रिय होने पर, अहितम् અહિતકર अपथ्य, असुखोदर्कम् પરિણામે અસુખકર परिणाममें असुखकारक, आहारजातम् આહારસમૂહનું आहारसमूहको, अन्यत् वा અથવા બીજા अथवा दूसरे, किंचित् કોઈ ઔષધ વિહાર વગેરેનું कोई औषध विहारादिका, न च उपसेव्यम् સેવન નહિ કરવું જોઈએ सेवन नहीं करना चाहिए ॥ २३ ॥

23. These different factors give rise to good and evil effects and are helpful to one another. The physician should try to know them and having known them he should make use of the wholesome only. Either out of ignorance or negligence he should not make use of any article or diet or any other thing which is pleasant but unwholesome and fraught with unhappy consequences.

हिततमाहारविधिविधाननिरूपणम्—

**तत्रेदमाहारविधिविधानमरोगाणामातुराणां चापि केषांचित् काले प्रकृत्यैव हिततमं भुञ्जानानां भवति—**

तत्र અહીં यहां, इदम् આ यह, आहारविधि- આહારવિધિનું आहारविधिका, विधानम् વિધાન विधान, काले સમયે समय पर, प्रकृत्या एव સ્વભાવથીજ स्वभावसे ही, हिततमम् હિતતમ हिततम, भुञ्जानानाम् ભોજન કરનારા भोजन करनेवाले, अरोगाणाम् નીરોગીઓ માટે नीरोगियोंके लिए, केषांचित् च અને કેટલાએક और कई, आतुराणाम् अपि રોગીઓ માટે પણ रोगियोंके लिये भी, भवति છે है—

24-(1). These are the dietetic rules and procedure for those who are healthy as well as for certain types of patients, concerning the taking of food that is most wholesome.

**उष्णं, स्निग्धं, मात्रावत्, जीर्णे, वीर्याविरुद्धम्, इष्टे देशे, इष्टसर्वोपकरणं, नातिद्रुतं, नातिविलम्बितम्, अजल्पन्, अहसन्, तन्मना भुञ्जीत, आत्मानमभिसमीक्ष्य सम्यक् ॥ २४ ॥**

आत्मानम् પોતાને अपना, अभिसमीक्ष्य વિચાર કરીને विचार करके, उष्णम् ઊનું गरम, स्निग्धम् સ્નિગ્ધ स्निग्ध, मात्रावत् માત્રાસર मात्रामें, जीर्णे પછી

२३. शुभाशुभफलाः—शुभाशुभफलप्रदाः (घ. त.)

२४. हिततमं—हिताहिततमं (त.)

„ अजल्पन्, अहसन्, तन्मना—न जल्पन्न हसंस्तन्मना (घ.)

ગયા પછી जीर्ण होनेपर, वीर्य-अविरुद्धम् વીર્યમાં અવિરોધી वीर्यके अविरुद्ध, इष्टे ઇષ્ટ इष्ट, देशे દેશમાં देशमें, इष्टसर्वोपकरणम् મનગમતાં સર્વસાધન સહિત वाञ्छित सब साधनों सहित, न अतिद्रुतम् બહુ ઉતાવળે નહિ न बहुत जल्दी, न अतिविलम्बितम् બહુ વિલંબ કરીને નહિ न बहुत धीरे, अजल्पन् ન બોલતાં न बोलते हुए, अहसन् તેમજ ન હસતાં एवं न हंसते हुए, तन्मनाः ભોજનમાં મનને લગાડી भोजनमें मनको लगाकर, सम्यक् સારી રીતે भली प्रकार, भुञ्जीत ભોજન કરવું જોઈએ भोजन करे ॥ २४ ॥

24. One should eat food which is hot, unctuous and non-antagonistic in potency and in due measure, after full digestion of the previous meal, in a congenial place, provided with all the accessories, neither too hurriedly, nor too leisurely, without talking or laughing, with full concentration and having proper regard to oneself.

उष्णभोजनगुणाः—

**तस्य साद्गुण्यमुपदेक्ष्यामः—उष्णमश्नीयात्; उष्णं हि भुज्यमानं स्वदते, भुक्तं चाग्निमौदर्यमुदीरयति, क्षिप्रं जरां गच्छति, वातमनुलोमयति, श्लेष्माणं च परिह्रासयति; तस्मादुष्णमश्नीयात् ॥ (१) ॥**

तस्य તેના इसके, साद्गुण्यम् શ્રેષ્ઠ ગુણવાળાપણાનો श्रेष्ठ गुणकारक होनेका, उपदेक्ष्यामः ઉપદેશ કરશું उपदेश करेंगे, उष्णम् ઉષ્ણ उष्ण, अश्नीयात् ખાવું જોઈએ खाना चाहिए, हि કેમકે क्योंकि, उष्णम् ઉષ્ણ उष्ण, भुज्यमानम् ખાવામાં આવતાં खाया जाता हुआ, स्वदते સ્વાદ આપે છે स्वादु लगता है, भुक्तम् च અને ખાધા પછી और खा लेने पर, औदर्यम् ઉદરના उदरकी, अग्निम् અગ્નિને अग्निको, उदीरयति ઉત્તેજિત કરે છે प्रदीप्त करता है, जराम् પાકને पाकको, क्षिप्रम् જલદી जल्दी, गच्छति પામે છે पाता है, वातम् વાતનું वातका, अनुलोमयति અનુલોમન કરે છે अनुलोमन करता है, श्लेष्माणम् च તથા કફને तथा कफको, परिह्रासयति શિથિલ કરે છે शिथिल करता है, तस्मात् તેથી इस लिए, उष्णम् ઉષ્ણ उष्ण, अश्नीयात् ખાવું જોઈએ खाना चाहिए ॥ (१) ॥

25-(1). We shall indicate the benefits accruing from each of these conditions.

One should eat hot. It is the food eaten hot, that is relished and which on being consumed excites the gastric fire, which is soon digested and stimulates the peristaltic movement, and breaks up the mucus in gastric secretion. Therefore one should eat food that is hot.

स्निग्धभोजनगुणाः—

**स्निग्धमश्नीयात्; स्निग्धं हि भुज्यमानं स्वदते, भुक्तं चानुदीर्णमग्निमुदीरयति, क्षिप्रं जरां गच्छति, वातमनुलोमयति, शरीरमुपचिनोति, दृढीकरोतीन्द्रियाणि, बलाभिवृद्धिमुपजनयति, वर्णप्रसादं चाभिनिर्वर्तयति; तस्मात् स्निग्धमश्नीयात् ॥ (२) ॥**

स्निग्धम् સ્નિગ્ધ स्निग्ध, अश्नीयात् ખાવું જોઈએ खाना चाहिए, हि કેમકે क्योंकि, स्निग्धम् સ્નિગ્ધ स्निग्ध, भुज्यमानम् ખાવામાં આવતાં खाया जाता हुआ, स्वदते સ્વાદ આપે છે स्वादु लगता है, भुक्तम् च અને ખાધા પછી और खा लेने पर, अनुदीर्णम् પ્રેરિત ન થયેલા प्रेरित न हुई, अग्निम् અગ્નિને अग्निको,

२५-(१). अग्निमौदर्यमुदीरयति—अग्निमुदीर्यमुदीरयति (प.)
,, ,, —अग्निमुदर्यमुदीरयति (प.)
,, परिह्रासयति - परिशोषयति (च. ज्ञ. ड. ब.)
,, ,, —शोषयति (छ.)

२५-(२). भुक्तश्चानुदीर्णमग्निमुदीरयति—भुक्तमौदर्यमग्निमुदीरयति (ख. ब. त. थ.)
,, दृढीकरोतीन्द्रियाणि—दृढीकरोति शरीरोपचयम् (ख.ब.त.थ.)
,, उपजनयति- अभिजनयति (ब.)

**उदीरयति** પ્રેરિત કરે છે प्रेरित करता है, **जराम्** પાકને पाकको, **क्षिप्रम्** જલદી जल्दी, **गच्छति** પામે છે पाता है, **वातम्** વાતનું वातका, **अनुलोमयति** અનુલોમન કરે છે अनुलोमन करता है, **शरीरम्** શરીરને शरीरको, **उपचिनोति** પુષ્ટ કરે છે पुष्ट करता है, **इन्द्रियाणि** ઇન્દ્રિયોને इन्द्रियोंको, **दृढीकरोति** દઢ કરે છે दृढ करता है, **बल-** બળની बलकी, **अभिवृद्धिम्** વૃદ્ધિ वृद्धि, **उपजनयति** ઉત્પન્ન કરે છે उत्पन्न करता है, **वर्ण-** વર્ણની वर्णकी, **प्रसादम्** નિર્મળતા स्वच्छताको, **अभिनिर्वर्तयति** ઉત્પન્ન કરે છે उत्पन्न करता है, **तस्मात्** તેથી इस लिए, **स्निग्धम्** સ્નિગ્ધ स्निग्ध, **अश्नीयात्** ખાવું જોઈએ खाना चाहिए ॥ (२) ॥

25-(2). Eat unctuous. The unctuous food, being eaten, gives relish and on being consumed, excites the inactive gastric fire, is rapidly digested, stimulates the peristaltic movement, makes the body plump, strengthens the sense-organs, increases the vigor and brightens the complexion. Therefore one should eat unctuous food.

मात्रावतो भोजनस्य गुणाः—

**मात्रावदश्नीयात्; मात्रावद्धि भुक्तं वातपित्तकफानपीडयदायुरेव विवर्धयति केवलं, सुखं गुदमनुपर्येति, न चोष्माणमुपहन्ति, अव्यथं च परिपाकमेति; तस्मान्मात्रावदश्नीयात् ॥ (३) ॥**

**मात्रावत्** માત્રાસર मात्रामें, **अश्नीयात्** ખાવું જોઈએ खाना चाहिए, **हि** કારણ કે क्योंकि, **मात्रावत्** માત્રાસર मात्रामें, **भुक्तम्** ખાધેલું खाया हुआ, **वात-** વાત वात, **पित्त-** પિત્ત पित्त, **कफान्** કફને कफको, **अपीडयत्** પીડિત કર્યા વિના पीड़ित किये बिना, **आयुः** આયુષ્યને आयुको, **एव** જ ही, **केवलम्** સમ્પૂર્ણપણે सम्पूर्णतासे, **विवर्धयति** વધારે છે बढ़ाता है, **गुदम्** ગુદા સુધી गुदा तक, **सुखम्** સુખપૂર્વક सुखपूर्वक, **अनुपर्येति** પહોંચી જાય છે पहुंच जाता है, **ऊष्माणम् च** અગ્નિને अग्निको, **न उपहन्ति** હાનિ કરતું નથી हानि नहीं करता, **अव्यथम् च** અને કષ્ટ વગર बिना कष्टके, **परिपाकम्** પાકને पाकको, **एति** પામે છે पाता है, **तस्मात्** તેથી इस लिए, **मात्रावत्** માત્રાસર मात्रामें, **अश्नीयात्** ખાવું જોઈએ खाना चाहिए ॥ (३)॥

25-(3). Eat in measure. The food eaten in measure, does not disturb the balance of vata, pitta and kapha, but exclusively promotes life, is easily passed down to the rectum, does not disturb the gastric fire and is easily assimilated. Therefore one must eat in measure.

जीर्णे भुक्तवतो गुणाः—

**जीर्णेऽश्नीयात्; अजीर्णे हि भुञ्जानस्याभ्यवहृतमाहारजातं पूर्वस्याहारस्य रसमपरिणतमुत्तरेणाहाररसेनोपसृजत् सर्वान् दोषान् प्रकोपयत्याशु, जीर्णे तु भुञ्जानस्य स्वस्थानस्थेषु दोषेष्वग्नौ चोदीर्णे जातायां च बुभुक्षायां विवृतेषु च स्रोतसां मुखेषु विशुद्धे चोद्गारे हृदये विशुद्धे वातानुलोम्ये विसृष्टेषु च वातमूत्रपुरीषवेगेष्वभ्यवहृतमाहारजातं सर्वशरीरधातूनप्रदूषयदायुरेवाभिवर्धयति केवलं; तस्माज्जीर्णेऽश्नीयात् ॥ (४) ॥**

**जीर्णे** પચી ગયા પછી जीर्ण हो जाने पर, **अश्नीयात्** ખાવું જોઈએ खाना चाहिए, **हि** કારણકે क्योंकि, **अजीर्णे** અજીર્ણ પર अजीर्णमें, **भुञ्जानस्य** ખાનારનો भोजन करनेवालेका, **अभ्यवहृतम्** ખાધેલો खाया हुआ, **आहारजातम्** આહારનો સમૂહ आहारसमूह, **पूर्वस्य** પૂર્વ पूर्व, **आहारस्य** આહારના आहारके, **अपरिणतम्** અપકવ अपक्व, **रसम्** રસને रसको, **उत्तरेण** પાછળના पिछले, **आहाररसेन** આહારના રસની સાથે आहारके रसके साथ, **उपसृजत्** મિશ્રિત કરતાં मिश्रित करता हुआ, **सर्वान्** બધા सब, **दोषान्** દોષોને दोषोंको, **आशु** જલદી जल्दी, **प्रकोपयति** પ્રકુપિત કરે છે प्रकुपित करता है, **जीर्णे** પચી ગયા પછી जीर्ण होने पर, **तु** તો तो, **भुञ्जानस्य** ખાનારના खाते हुएके, **दोषेषु** દોષો दोष, **स्वस्थानस्थेषु** પોતાના સ્થાન પર હોતાં अपने स्थानमें

होने पर, अग्नौ च અગ્નિ अग्नि, उदीर्णे પ્રદીપ્ત થતાં प्रदीप्त होने पर, बुभुक्षायाम् च ખાવાની ઇચ્છા खानेकी इच्छा, जातायाम् ઉત્પન્ન થતાં उत्पन्न होने पर, स्रोतसाम् સ્રોતોનાં स्रोतोंके, मुखेषु च મુખ मुख, विवृतेषु ખુલ્લાં થતાં खुल जाने पर, उद्गारे च ઓડકાર उद्गारके, विशुद्धे વિશુદ્ધ થતાં विशुद्ध होने पर, हृदये હૃદય हृदय, विशुद्धे વિશુદ્ધ થતાં विशुद्ध होने पर, वातानुलोम्ये વાતનું અનુલોમન થતાં वातके अनुलोमन होने पर, वात- અને વાત और वात, मूत्र- મૂત્ર मूत्र, पुरीष- તથા મળના तथा मलके, वेगेषु વેગોનો वेगोंका, विसृष्टेषु च ત્યાગ કરતાં त्याग करने पर, अभ्यवहृतम् ખાધેલો खाया हुआ, आहारजातम् આહારનો સમુદાય आहारसमूह, सर्व- સર્વ सब, शरीर- શરીરના शरीरकी, धातून् ધાતુઓને धातुओंको, अप्रदूषयत् દૂષિત ન કરતાં बिना दूषित किये, आयुः આયુષ્યને आयुको, एव જ ही, केवलम् સમ્પૂર્ણપણે सम्पूर्णतासे, अभिवर्धयति વધારે છે बढ़ाता है, तस्मात् તેથી इस लिए, जीर्णे પચી ગયા પછી जीर्ण होने पर, अश्नीयात् ખાવું જોઈએ खाना चाहिए ॥ (४) ॥

25-(4). Eat after the digestion of the previous meal. The food that is eaten while the previous meal is lying undigested in the stomach, getting mixed with the semi-digested chyme of the previous meal, immediately provokes all the humors. The food taken when the previous meal has been fully digested, the humors have returned to their normal places, the gastric fire is kindled, hunger is born, the channels are clear and open, the eructation from the mouth is healthy, the stomach is clear, the peristaltic movement is normal and when the urges for evacuation of flatus, urine and feces are well attended to—that food, not vitiating any of the body-elements, serves the sole purpose of promoting life. Therefore one should eat on empty stomach after the digestion of the previous meal.

वीर्याविरुद्धं भुक्तवतो गुणाः—

**वीर्याविरुद्धमश्नीयात्; अविरुद्धवीर्यमश्नन् हि विरुद्धवीर्याहारजैर्विकारैर्नोपसृज्यते; तस्माद्वीर्याविरुद्धमश्नीयात् ॥ (५) ॥**

वीर्य- अविरुद्धम् વીર્યમાં વિરુદ્ધ ન હોય એવું वीर्यमें अविरोधी, अश्नीयात् ખાવું જોઈએ भोजन करे, हि કારણકે क्योंकि, अविरुद्धवीर्यम् વિરુદ્ધ વીર્યવાળું ન હોય એવું वीर्यमें अविरोधि, अश्नन् ભોજન કરતો મનુષ્ય भोजन करता हुआ, विरुद्धवीर्य- વિરુદ્ધ વીર્યવાળા विरुद्ध वीर्यवाले, आहारजैः આહારથી ઉત્પન્ન થયેલા आहारसे उत्पन्न हुए, विकारैः વિકારોથી विकारोंसे, न उपसृज्यते યુક્ત થતો નથી युक्त नहीं होता, तस्मात् તેથી इस लिए, वीर्य- अविरुद्धम् વીર્યથી અવિરુદ્ધ वीर्यमें अविरोधि, अश्नीयात् ખાવું જોઈએ भोजन करे ॥ (५) ॥

25-(5). Eat what is not antagonistic in potency. Eating the food that is not antagonistic in potency, one is not afflicted with disorders born of incompatible dietary. Therefore one should eat what is not antagonistic in potency.

इष्टे देशे भुक्तवतो गुणाः—

**इष्टे देशे इष्टसर्वोपकरणं चाश्नीयात्; इष्टे हि देशे भुञ्जानो नानिष्टदेशजैर्मनोविघातकरैर्भावैर्मनोविघातं प्राप्नोति, तथैवेष्टैः सर्वोपकरणैः; तस्मादिष्टे देशे तथेष्टसर्वोपकरणं चाश्नीयात् ॥ (६) ॥**

इष्टे ઇષ્ટ इष्ट, देशे સ્થાનમાં स्थानमें, इष्टसर्वोपकरणम् च અને મનગમતાં સર્વ સાધનો સહિત वाञ्छित सब साधनोंके साथ, अश्नीयात् ખાવું જોઈએ

२५-(६). इष्टे देशे इष्टसर्वोपकरणम् चाश्नीयात्—इष्टे देशेऽश्नीयात् (ख. ग.)

खाना चाहिए, हि કારણકે क्योंकि, इष्टे ઇષ્ટ इष्ट, देशे સ્થાનમાં स्थानमें, तथा एव તે જ પ્રમાણે इसी प्रकार, इष्टैः ગમતાં वाञ्छित, सर्व- સર્વ सब, उपकरणैः સાધનોથી उपकरणोंसे, भुञ्जानः ભોજન કરતો મનુષ્ય भोजन करता हुआ मनुष्य, अनिष्टदेशजैः અનિષ્ટ સ્થાનથી ઉત્પન્ન થયેલાં अनिष्ट स्थानसे उत्पन्न हुए, मनोविघातकरैः તથા મનને ખરાબ કરનારા तथा मनको खराब करनेवाले, भावैः ભાવોથી भावोंसे, मनोविघातम् મનના વિકારને मनके विकारको, न प्राप्नोति પ્રાપ્ત થતો નથી प्राप्त नहीं होता, तस्मात् તેથી इसलिए, इष्टे ઇષ્ટ इष्ट, देशे દેશમાં देशमें, तथा તથા तथा, इष्टसर्वोपकरणम च મનગમતાં સર્વ સાધનો સહિત वाञ्छित सब साधनोंके साथ, अश्नीयात् ખાવું જોઈએ भोजन करना चाहिए ॥ (६) ॥

25-(6). Eat in a congenial place provided with all the necessary appurtenances. One eating in a congenial place does not get depressed in the mind by the depressing emotions produced in unpleasant environment. Similarly with the appurtenances. Therefore, one should eat in a congenial place and circumstance.

नातिद्रुतं भुक्तवतो गुणाः—

**नातिद्रुतमश्नीयात्; अतिद्रुतं हि भुञ्जानस्योत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं च, भोज्यदोषसाद्गुण्योपलब्धिश्च न नियता; तस्मान्नातिद्रुतमश्नीयात् ॥ (७) ॥**

अतिद्रुतम् બહુ ઉતાવળે बहुत जल्दी, न નહિ नहीं, अश्नीयात् ભોજન કરવું જોઈએ भोजन करना चाहिए, हि કારણ કે क्योंकि, अतिद्रुतम् અતિ ઉતાવળે बहुत जल्दी, भुञ्जानस्य ભોજન કરતા મનુષ્યને भोजन करते हुए मनुष्यको, उत्स्नेहनम् અંતરાશ જવું भोजनका उल्टे रास्ते पर जाना, अवसादनम् શિથિલતા शिथिलता, भोजनस्य તથા ભોજનનું तथा भोजनका, अप्रतिष्ठानम् च ઠેકાણે ન બેસવું થાય છે स्थान पर स्थिर न होना होता है, भोज्य- ભોજનના भोजनके, दोष- દોષની दोषका, साद्गुण्य- તથા પ્રશસ્ત ગુણવાળાપણાની तथा प्रशस्त गुणोंके होनेका, उपलब्धिः च જ્ઞાન ज्ञान, न नियता ચોક્કસ થતી નથી निश्चित नहीं होता, तस्मात् તેથી इसलिए, अतिद्रुतम् અતિ ઉતાવળે बहुत जल्दी, न अश्नीयात् ભોજન કરવું જોઈએ નહિ भोजन नहीं करना चाहिए ॥ (७) ॥

25-(7). Do not eat hurriedly. By eating hurriedly the food is liable to go the wrong way, or injure the health or it is not properly placed; and there is no appreciation of either the good or bad qualities of the food taken. Therefor one should not eat hurriedly.

नातिविलम्बितं भुक्तवतो गुणाः—

**नातिविलम्बितमश्नीयात्; अतिविलम्बितं हि भुञ्जानो न तृप्तिमधिगच्छति, बहु भुङ्क्ते, शीतीभवत्याहारजातं, विषमं च पच्यते; तस्मान्नातिविलम्बितमश्नीयात् ॥ (८) ॥**

अतिविलम्बितम् બહુ વિલંબથી बहुत धीरे, न अश्नीयात् ભોજન ન કરવું જોઈએ भोजन नहीं करना चाहिए, हि કારણકે क्योंकि, अतिविलम्बितम् અતિ વિલંબથી बहुत धीरे, भुञ्जानः ભોજન કરતો મનુષ્ય भोजन करता हुआ मनुष्य, तृप्तिम् તૃપ્તિ तृप्तिको, न अधिगच्छति પામતો નથી प्राप्त नहीं करता, बहु બહુ बहुत, भुङ्क्ते ખાય છે खाता है, आहारजातम् આહારનો સમૂહ आहारसमूह, शीतीभवति ઠરી જાય છે ठंडा हो जाता है, विषमम् च અને વિષમ પણે और विषमतासे, पच्यते પચે છે पचता है, तस्मात् તેથી इसलिए, अतिविलम्बितम् બહુ વિલંબથી बहुत धीरे, न अश्नीयात् ખાવું જોઈએ નહિ नहीं खाना चाहिए ॥(८)॥

25-(8). Do not eat too leisurely. One eating too leisurely, is not satisfied even if he eats much. The food

२५-(८). विषमं च पच्यते—विषमपाकं च भवति (ग. च. त.)
,, ,, —विषमपाकं च गच्छति (ग.)

gets cold and is digested irregularly. Therefore one should not eat too leisurely.

अजल्पतोऽहसतस्तन्मनसश्च भुक्तवतो गुणाः —

**अजल्पन्नहसन् तन्मना भुञ्जीत; जल्पतो हसतोऽन्यमनसो वा भुञ्जानस्य त एव हि दोषा भवन्ति, य एवातिद्रुतमश्नतः; तस्मादजल्पन्नहसंस्तन्मना भुञ्जीत ॥ (९) ॥**

**अजल्पन्** મનુષ્યે ન બોલતાં मनुष्य न बोलते हुए, **अहसन्** ન હસતાં न हंसते हुए, **तन्मनाः** તેમજ ભોજનમાં મન લગાડી एवं भोजनमें मन लगा कर, **भुञ्जीत** જમવું જોઈએ खावे, **हि** કારણકે क्योंकि, **ये एव** જે जो, **अतिद्रुतम्** બહુ જલદી बहुत जल्दी, **अश्नतः** ખાનારને खानेवालेके, **दोषाः** દોષો થાય છે दोष होते हैं, **ते** તેઓ વે, **एव** જ ही, **जल्पतः** બોલબોલ કરતાં बोलते हुए, **हसतः** હસતાં हंसते हुए, **अन्यमनसः वा** અથવા બીજી તરફ મન લગાડી अथवा दूसरी ओर मन लगाकर, **भुञ्जानस्य** ખાનારને खानेवालेको, **भवन्ति** થાય છે होते हैं, **तस्मात्** તેથી इस लिए, **अजल्पन्** ન બોલતાં न बोलते हुए, **अहसन्** ન હસતાં न हंसते हुए, **तन्मनाः** તેમજ ભોજનમાં મન લગાડી एवं भोजनमें मन लगा कर, **भुञ्जीत** જમવું જોઈએ खाना चाहिए ॥ (९) ॥

25-(9). Do not talk or laugh while eating. One who talks and laughs and is preoccupied while eating, is liable to suffer the same disorders as the one who eats too hastily. Therefore, one should not talk or laugh while eating but should eat with due attention to oneself.

आत्मानमभिसमीक्ष्य भुक्तवतो गुणाः —

**आत्मानमभिसमीक्ष्य भुञ्जीत सम्यक्; इदं ममोपशेते इदं नोपशेत इत्येवं विदितं ह्यस्यात्मन आत्मसात्म्यं भवति; तस्मादात्मानमभिसमीक्ष्य भुञ्जीत सम्यगिति ॥ २५ ॥**

**आत्मानम्** પોતાની જાતને अपने आत्माको, **सम्यक्** સરખી રીતે भली प्रकार, **अभिसमीक्ष्य** વિચારીને विचार करके, **भुञ्जीत** ભોજન કરવું જોઈએ खाना चाहिए, **इदम्** આ यह, **मम** મને मुझे, **उपशेते** અનુકૂળ આવે છે अनुकूले है, **इदम्** આ यह, **न उपशेते** અનુકૂળ આવતું નથી अनुकूल नहीं है, **इति एवम् हि** એ પ્રમાણે इस प्रकारसे, **आत्म-** પોતાની જાતનું अपने आत्माका, **सात्म्यम्** સાત્મ્ય सात्म्य, **अस्य आत्मनः** એને પોતાને अपने आत्मासे, **विदितम्** વિદિત विदित, **भवति** થાય છે होता है, **तस्मात्** તેથી इस लिए, **आत्मानम्** પોતાની જાતને अपने आत्माको, **सम्यक्** સરખી રીતે भली प्रकार, **अभिसमीक्ष्य** વિચારીને देख कर, **भुञ्जीत इति** ખાવું જોઈએ खाना चाहिए ॥२५॥

25. Eat rightly, considering your constitution. 'This food will agree with me, this food will not agree with me', this knowledge makes for the determination of what is wholesome for each individual. Therefore, one should eat rightly, considering one's individual constitution.

रसादिज्ञातुर्भिषजः प्रशंसा—

**भवति चात्र—**

**रसान् द्रव्याणि दोषांश्च विकारांश्च प्रभावतः।**
**वेद यो देशकालौ च शरीरं च स नो भिषक् ॥२६॥**

**अत्र च** આ વિષયમાં इस विषयमें, **भवति** શ્લોક છે કે श्लोक है कि, **यः** જે जो, **रसान्** રસને रसको, **द्रव्याणि** દ્રવ્યને द्रव्यको, **दोषान् च** દોષોને दोषको, **विकारान् च** વિકારોને विकारोंको, **देश-** દેશ देश, **कालौ च** તથા કાળને तथा कालको, **शरीरम् च** અને શરીરને और शरीरको, **प्रभावतः** પ્રભાવથી प्रभावसे, **वेद** જાણે છે जानता है, **सः** તે वह, **नः** અમારો માન્ય हमको मान्य, **भिषक्** વૈદ્ય છે वैद्य है ॥ २६ ॥

२६. स नो भिषक्-स ना भिषक् (च. द. ष.)

Here is a verse again—

26. Him do we regard as a physician, who possesses the knowledge of the effects of tastes, the substances, the humors and the diseases, as also the knowledge of clime, season and the body.

अध्यायार्थसंग्रहः—

तत्र श्लोकौ—

विमानार्थो रसद्रव्यदोषरोगाः प्रभावतः ।
द्रव्याणि नातिसेव्यानि त्रिविधं सात्म्यमेव च ॥२७॥
आहारायतनान्यष्टौ भोज्यसाद्गुण्यमेव च ।
विमाने रससंख्याते सर्वमेतत् प्रकाशितम् ॥२८॥

तत्र તે વિષયમાં उस विषयमें. श्लोकौ ઉપસંહારના બે શ્લોકો છે કે उपसंहारके दो श्लोक हैं कि, विमानार्थः વિમાનસ્થાનનું પ્રયોજન विमानस्थानका प्रयोजन, प्रभावतः પ્રભાવદ્વારા प्रभावद्वारा, रस- રસ रस, द्रव्य- દ્રવ્ય द्रव्य, दोष- દોષ दोष, रोगाः અને રોગ और रोग, न अतिसेव्यानि બહુ ન સેવવા લાયક बहुत सेवन योग्य नहीं ऐसे, द्रव्याणि દ્રવ્યો द्रव्य, त्रिविधम् અને ત્રણ પ્રકારનું और तीन प्रकारका, सात्म्यम् च एव સાત્મ્ય सात्म्य, अष्टौ આઠ आठ, आहारायतनानि આહારવિધિવિશેષાયતન आहारविधिविशेषायतन, भोज्य- અને ભોજનનું आहारके, साद्गुण्यम् च एव પ્રશસ્ત ગુણવાળાપણું प्रशस्त गुणका होना, एतत् આ यह, सर्वम् સર્વ सब, रससंख्याते विमाने 'રસવિમાન' અધ્યાયમાં 'रसविमान' अध्यायमें, प्रकाशितम् પ્રકાશિત કર્યું છે प्रकाशित किया है ॥ २८ ॥

Here are the two recapitulatory verses—

27-28. The purpose of this section on specific determination of measure, the effects of the tastes, substances, humors and diseases, the substances that are not to be taken in excess, the three grades of homologation, the octalogue of dietetic rules, the advantages accruing from the observation of these rules—all these have been revealed in this chapter on the specific determination of the measure of tastes.

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने
रसविमानं नाम प्रथमोऽध्यायः ॥ १ ॥

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा प्रतिसंस्कृत इस शास्त्रके, विमानस्थाने વિમાનસ્થાન વિષે विमानस्थानमें, 'रसविमानम्' 'રસવિમાન' 'रसविमान', नाम નામનો नामका, प्रथमः પ્રથમ प्रथम, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ १ ॥

1. Thus in the section on Specific Determination of Measure in the treatise compiled by Agnivesa and revised by Caraka, the first chapter entitled the "Specific Determination of the Measure of Taste" is completed.

## द्वितीयोऽध्यायः ।

## બીજો અધ્યાય अध्याय दूसरा

## Chapter II

त्रिविधकुक्षीयविमानाध्यायोपक्रमः—

अथातस्त्रिविधकुक्षीयं विमानं व्याख्यास्यामः॥१॥
इति ह स्माह भगवानात्रेयः ॥ २ ॥

अथ अतः હવે અહીંથી अब आगे, त्रिविधकुक्षीयम् विमानम् 'ત્રિવિધકુક્ષીય વિમાન' નામના અધ્યાયનું 'त्रिविधकुक्षीय विमान' नामके अध्यायका, व्याख्यास्यामः વ્યાખ્યાન કરશું व्याख्यान करेंगे ॥ १ ॥

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, इति ह આ વિષયમાં નીચે પ્રમાણે જ इस विषयमें निम्न प्रकारसे ही, आह स्म કહેલું છે कहा है ॥ २ ॥

1. We shall now expound the chapter entitled "The Specific Determination of the Measure of the stomach-capacity",

2. Thus declared the worshipful Atreya.

कुक्षौ त्रिविधावकाशांशविभागः—

**त्रिविधं कुक्षौ स्थापयेदवकाशांशमाहारस्याहारमुपयुञ्जानः; तद्यथा—एकमवकाशांशं मूर्तानामाहारविकाराणाम्, एकं द्रवाणाम्, एकं पुनर्वातपित्तश्लेष्मणाम्; एतावतीं ह्याहारमात्रामुपयुञ्जानो नामात्राहारजं किंचिदशुभं प्राप्नोति ॥३॥**

आहारम् આહારનો भोजनका, उपयुञ्जानः ઉપયોગ કરનારે उपयोग करनेवाला, कुक्षौ ઉદરમાં उदरमें, आहारस्य આહારને માટે आहारके लिए, अवकाशांशम् ખાલી જગ્યાને खाली जगहको, त्रिविधम् ત્રણ પ્રકારે तीन प्रकार, स्थापयेत् રાખવી જોઈએ रखे, तत् यथा જેમકે जैसे कि, मूर्तानाम् ઘન ठोस, आहार- विकाराणाम् આહારની વાનીઓ માટે भोजनके पदार्थोंके लिए, एकम् अवकाशांशम् એક ખાલી ભાગ एक रिक्त भागको, द्रवाणाम् પ્રવાહી માટે द्रवोंके लिए, एकम् બીજો ખાલી ભાગ दूसरे रिक्त भागको, वात-पित-श्लेष्मणाम् તેમજ વાત-પિત્ત અને કફ માટે एवं वात-पित्त और कफके लिए, पुनः एकम् ત્રીજો ખાલી ભાગ રાખવો જોઈએ तीसरे रिक्त भागको रखे, एतावतीम् हि આટલા પ્રમાણમાં इतनी, आहार- मात्राम् આહારની માત્રાનો आहार-मात्राका, उपयुञ्जानः ઉપયોગ કરતા મનુષ્યને उपयोग करते हुए मनुष्यको, अमात्राहारजम् માત્રારહિત આહારથી ઉત્પન્ન થતું आहारकी अमात्राके सेवनसे उत्पन्न, किंचित् કંઈ પણ कुछ भी, अशुभम् અશુભ अशुभ, न प्राप्नोति પ્રાપ્ત થતું નથી प्राप्त नहीं होता ॥ ३ ॥

3. One about to eat a meal ought to dispose the stomach capacity in three parts. Thus he should use one third of his gastric capacity for solid food, one third for liquids and the remaining one third for the full play of the three humors—vata, pitta and kapha Eating in conformity to this rule, one is not liable to any one of the ill effects resulting from eating without measure.

आहारराशिमधिकृत्य मात्राऽमात्रावत्त्वविचारः—

**न च केवलं मात्रावत्त्वादेवाहारस्य कृत्स्नमाहारफलसौष्ठवमवाप्तुं शक्यं, प्रकृत्यादीनामष्टानामाहारविधिविशेषायतनानां प्रविभक्तफलत्वात्॥४॥**

प्रकृत्यादीनाम् પ્રકૃતિ વગેરે प्रकृति आदि, अष्टानाम् આઠ आठ, आहारविधि- विशेष- આહારની કલ્પનાની ભિન્નતાના आहारविधिभेदके, आयतनानाम् હેતુઓમાં हेतुओंमें, प्रविभक्तफलत्वात् ફળ વહેંચાયેલું હોવાને લીધે फलके बंटे जानेके कारण, आहारस्य આહારની आहारकी, केवलम् કેવળ केवल, मात्रावत्त्वात् एव માત્રા-પુરઃસરતાને લઈને જ मात्राको लेके ही, कृत्स्नम् સંપૂર્ણ संपूर्ण, आहारफल- આહારના ફલની आहारफलकी, सौष्ठवम् શ્રેષ્ઠતા उत्तमताको, अवाप्तुम् મેળવવી प्राप्त करना, न च शक्यम् શક્ય નથી शक्य नहीं है ॥ ४ ॥

4. However, it is not possible to obtain the full benefit accruing from diet by merely conforming to the rule of measure, since all the eight factors beginning with the nature of the food-constituents have each a share in the final result.

**तत्रायं तावदाहारराशिमधिकृत्य मात्रामात्राफलविनिश्चयार्थः प्रकृतः। एतावानेव ह्याहारराशिविधिविकल्पो यावन्मात्रावत्त्वममात्रावत्त्वं च ॥५॥**

३. स्थापयेदवकाशांशमाहारस्याहारमुपयुञ्जानः—स्थापयेदवकाशं सदाहारमुपयुञ्जानः (प.)

५. अमात्रावत्त्वं—अमात्रत्वं (प.)

**तत्र तावत्** ત્યારે તેમાં यहां पर, **आहारराशिम्** આહારરાશિને आहारराशिको, **अधिकृत्य** અનુલક્ષીને उद्देश करके, **अयम्** આ यह, **मात्रा-अमात्रा-** માત્રા અને અમાત્રાનાં मात्रा तथा अमात्राके, **फल-** ફલના फलके, **विनिश्चयार्थः** નિશ્ચયરૂપ પ્રયોજન निश्चयरूप प्रयोजनका, **प्रकृतः** પ્રસ્તુત છે प्रसंग है, **यावत्** જે કાંઇ जो कुछ, **मात्रावत्त्वम्** માત્રાસરપણું છે मात्रायुक्तता, **अमात्रात्वम् च** અને માત્રાસરપણું નથી और अमात्रायुक्तता, **एतावान् एव हि** આ બે પ્રકારના જ यही दो प्रकारके, **आहारराशि-** આહારરાશિની आहारराशिके, **विधि-** વિધિનો विधिका, **विकल्पः** ભેદ છે भेद है ॥ ५॥

5. Here, however, we are concerned with determining the results of the quantity of food in measure or out of measure. The whole of the dietetic mode as regards quantity resolves itself into food taken in measure and food taken out of measure.

मात्रावतो भोजनस्य गुणाः —

**तत्र मात्रावत्त्वं पूर्वमुद्दिष्टं कुक्ष्यंशविभागेन, तद् भूयो विस्तरेणानुव्याख्यास्यामः ।**

**तत्र** તેમાં इसमें, **कुक्ष्यंश- विभागेन** ઉદરના અંશવિભાગદ્વારા कुक्षिके विभागोंद्वारा, **मात्रावत्त्वम्** માત્રાપુરઃસરતા मात्रापरिमाण, **पूर्वम्** પ્રથમ जो पहिले, **उद्दिष्टम्** બતાવી છે कहा है, **तत् भूयः** તે ફરીને उसीको फिर, **विस्तरेण** વિસ્તારપૂર્વક विस्तारसे, **अनुव्याख्यास्यामः** કહેશું कहेंगे।

6-(1). Now measure has already been touched upon in relation to the disposition of the gastric capacity. We shall explaiu the same thing once again at greater length.

**तद्यथा—कुक्षेरप्रपीडनमाहारेण, हृदयस्यानवरोधः, पार्श्वयोरविपाटनम्, अनतिगौरवमुदरस्य, प्रीणनमिन्द्रियाणां, क्षुत्पिपासोपरमः, स्थानासनशयनगमनोच्छ्वासप्रश्वासहास्यसंकथासु सुखानुवृत्तिः, सायं प्रातश्च सुखेन परिणमनं, बलवर्णोपचयकरत्वं च; इति मात्रावतो लक्षणमाहारस्य भवति ॥ ६ ॥**

**तत् यथा** જેમકે जैसेकि, **आहारेण** આહારથી भोजनसे, **कुक्षेः** પેટ उदरका, **अप्रपीडनम्** દબાય નહિ पीड़ित न होना, **हृदयस्य** હૃદય हृदयका, **अनवरोधः** રુંધાય નહિ अवरोध न होना, **पार्श्वयोः** પડખાં पार्श्वोंका, **अविपाटनम्** ફાટે નહિ न फटना, **उदरस्य** પેટ उदरमें, **अनतिगौरवम्** બહુ ભારે લાગે નહિ बहुत भारीपन न होना, **इन्द्रियाणाम्** ઇન્દ્રિયોની इन्द्रियोंकी, **प्रीणनम्** પ્રસન્નતા तृप्ति, **क्षुत्पिपासोपरमः** ભૂખ અને તરસની શાંતિ भूख तथा प्यासकी शान्ति, **स्थान-** ઊભા રહેવું स्थिति, **आसन-** બેસવું बैठने, **शयन-** સૂવું सोने, **गमन-** જવું चलने, **उच्छ्वास-** શ્વાસ કાઢવો श्वास, **प्रश्वास-** શ્વાસ લેવો निश्वास, **हास्यसंकथासु** હસવું તથા વાતચીતમાં हास्य एवं बातचीतमें, **सुखानुवृत्तिः** આરામનું રહેવું आराम रहना, **सायं प्रातः च** સાંજ અને સવાર सायं और प्रातः, **सुखेन** સુખેથી सुखपूर्वक, **परिणमनम्** પચી જવું जीर्ण हो जाना, **बल-वर्ण-** બળ તથા વર્ણની बल और वर्णकी, **उपचयकरत्वम्** પુષ્ટિ કરવી वृद्धि करना, **इति** એ ये, **मात्रावतः** માત્રાસર લીધેલ मात्रापूर्वक, **आहारस्य** આહારનું आहारका, **लक्षणम्** લક્ષણ लक्षण, **भवति** છે है ॥ ६ ॥

6. Thus, the following are the signs of food eaten in measure; freedom from distress in the stomach as the result of the quantity taken; absence of any cardiac discomfort; the nondistension of the sides; freedom from excessive heaviness of the stomach; gratification of the senses; subsidence of hunger and thirst; sense of ease in standing, sitting, lying down, walking, exhalation and inhalation, repartee

६. हास्यसंकथासु-हाससंकथासु (ज.)
,, परिणमनं-परिणामगमनं (ध.)

and conversation; easeful digestion and assimilation of food in the evening and morning; the imparting of strength, complexion and plumpness.

हीनमात्रस्य भोजनस्य दोषाः—

**अमात्रावत्त्वं पुनर्द्विविधमाचक्षते—हीनम्, अधिकं च । तत्र हीनमात्रमाहारराशिं बलवर्णोपचयक्षयकरमतृप्तिकरमुदावर्तकरमनायुष्यमवृष्यमनौजस्यं शरीरमनोबुद्धीन्द्रियोपघातकरं सारविधमनमलक्ष्म्यावहमशीतेश्च वातविकाराणामायतनमाचक्षते, अतिमात्रं पुनः सर्वदोषप्रकोपणमिच्छन्ति कुशलाः ।**

**अमात्रावत्त्वम्** માત્રરહિતતા अमात्रा, **पुनः** વળી पुनः, **द्विविधम्** બે પ્રકારની दो प्रकारकी, **आचक्षते** કહે છે कहते हैं, **हीनम्** હીન हीन, **अधिकम्** **च** અને અધિક और अधिक, **तत्र** તેમાં इनमें, **हीनमात्रम्** હીનમાત્રાવાળા हीनमात्रामें, **आहारराशिम्** આહારસમૂહને आहारसमूहको, **बल-** બળ बल, **वर्ण-** વર્ણ वर्ण, **उपचय-** તથા પુષ્ટિનો वृद्धिको, **क्षयकरम्** ક્ષય કરનાર क्षय करनेवाला, **अतृप्तिकरम्** અતૃપ્તિ કરનાર तृप्ति नहीं करनेवाला, **उदावर्तकरम्** ઉદાવર્ત કરનાર उदावर्त करनेवाला, **अनायुष्यम्** આયુષને માટે અહિતકર आयुके लिए अहितकर, **अवृष्यम्** વીર્યનો ક્ષય કરનાર वीर्यका क्षय करनेवाला, **अनौजस्यम्** ઓજસને ન વધારનાર ओजकी वृद्धि नहीं करनेवाला, **शरीर-मन-बुद्धि-इन्द्रिय-** શરીર-મન-બુદ્ધિ અને ઇન્દ્રિયોને शरीर-मन-बुद्धि और इन्द्रियोंके, **उपघातकरम्** હાનિ કરનાર नाशका कारण, **अलक्ष्म्यावहम्** દારિદ્રને લાવનાર गरीबी पैदा करनेवाला, **अशीतेः** અને એંશી और अस्सी, **वात-विकाराणाम्** વાતવિકારોનું वातरोगोंका, **आयतनम्** **च** કારણ કારણ, **आचक्षते** કહે છે कहते हैं, **कुशलाः** કુશળ વૈદ્યો चतुर वैद्यों, **अतिमात्रम्** અધિક માત્રાવાળા આહારને मात्रासे अधिक आहारको, **पुनः** વળી फिर, **सर्वदोष-** સર્વ દોષનો सब दोषोंका, **प्रकोपणम्** પ્રકોપ કરનાર प्रकोपक, **इच्छन्ति** માને છે मानते हैं ।

7·(1). Now the absence of measure is laid down as coming under two heads—the deficient and the excessive. The diet which is deficient in measure is seen to result in the impairment of strength, complexion and plumpness, in want of satisfactian, in mis-peristalsis and the impairment of the functions of life, virility and vitality, body, mind, understanding and senses, in the vitiation of the eight body-elements, in inducing inauspicious conditions and in the incidence of the eighty kinds of vata disorders. The learned aver that the diet which is excessive in measure is provocative of the morbidity of all the three humors.

अतिमात्रस्य भोजनस्य दोषाः—

**यो हि मूर्तानामाहारजातानां सौहित्यं गत्वा द्रवैस्तृप्तिमापद्यते भूयस्तस्यामाशयगता वातपित्तश्लेष्माणोऽभ्यवहारेणातिमात्रेणातिप्रपीड्यमानाः सर्वे युगपत् प्रकोपमापद्यन्ते, ते प्रकुपितास्तमेवाहारराशिमपरिणतमाविश्य कुक्ष्येकदेशमन्नाश्रिता विष्टम्भयन्तः सहसा वाऽप्युत्तराधराभ्यां मार्गाभ्यां प्रच्यावयन्तः पृथक् पृथगिमान् विकारानभिनिर्वर्तयन्त्यतिमात्रभोक्तुः ।**

**यः हि** જે जो, **मूर्तानाम्** ઘન ઠોસ, **आहारजातानाम्** આહારનો સમુદાય भोज्य पदार्थोंको, **सौहित्यम्** પેટ ભરીને तृप्तिपूर्वक, **गत्वा** ખાઈ खा कर, **भूयः** ફરીથી ऊपरसे, **द्रवैः** દ્રવ પદાર્થોથી द्रवोंको, **तृप्तिम्** तृप्ति तृप्तिपूर्वक, **आपद्यते** કરે છે पी लेता है, **तस्य** તેના उस पुरुषके, **अतिमात्रेण** અધિક માત્રામાં લીધેલા मात्रासे

---

७-(१). अलक्ष्म्यावहम्—अलक्षणात्वहम् (प.)
,, वातविकाराणाम्—वातजानाम् (च.)

७-(२). आहारजातानां—आहारविकाराणाम (ब. ज.)
,, कुक्ष्येकदेशमन्नाश्रिता—कुक्ष्येकदेशमाश्रिता (च. ब.)

**अधिक, अभ्यवहारेण** ખોરાકથી खाये हुए भोजन द्वारा, **अतिप्रपीड्यमानाः** અતિ દબાણ પામતા अतिपीड़ित हो कर, **आमाशयगताः** આમાશયમાં રહેલા आमाशयमें स्थित, **सर्वे** સર્વે सब, **वात- पित्त- श्लेष्माणः** વાત, પિત્ત અને કફ वात, पित्त और कफ, **युगपत्** એક સાથે एक साथ, **प्रकोपम्** પ્રકોપ प्रकुपित, **आपद्यन्ते** પામે છે हो जाते हैं, **प्रकुपिताः** પ્રકોપ પામેલા प्रकुपित हुए, **ते** તેઓ ये दोष, **कुक्ष्येकदेशम्** ઉદરના એક ભાગમાં उदरके एक भागमें, **आविश्य** પ્રવેશ કરીને आश्रय लेकर, **अन्नाश्रिताः** અન્નનો આશ્રય કરીને आहारराशिमें घुस-कर, **अपरिणतम्** અપક્વ अपरिपक्व, **तम् एव** તે જ उसी, **आहारराशिम्** આહારના સમૂહને आहारराशिको, **विष्टम्भयन्तः** વિષ્ટંભ કરી रोकते हुए, **सहसा वा** અથવા ઓચિંતા सहसा, **उत्तराधराभ्याम्** ઉપલા અને નીચલા ऊपर एवं नीचेके, **मार्गाभ्याम्** માર્ગોથી मार्गोंसे, **अपि** પણ भी, **प्रच्यावयन्तः** તેને બહાર કાઢતાં उसको निकालते हुए, **अतिमात्रभोक्तुः** અધિક માત્રામાં ખાના-રને अति मात्रामें खानेवाले पुरुषमें, **पृथक्** જુદા भिन्न, **पृथक्** જુદા भिन्न, **इमान्** આ निम्न, **विकारान्** વિકારો रोगोंको, **अभिनिर्वर्तयन्ति** ઉત્પન્ન કરે છે उत्पन्न करते हैं;

7-(2). He who eats solid foods to repletion and in addition drinks his fill of beverages, will have all the three humors—vata, pitta and kapha abiding in the stomach, provoked simultaneously, as they get compressed greatly by the excessive quantity of the food taken. These humors, being thus irritated, lay hold of the undigested food-mass and getting localised in one part of the stomach of the man who has overeaten and making their resort in the food-mass either obstruct or dispose of the stomach-contents violently through the upper or the lower channels of the alimentary tract, giving rise, severally, to the following kinds of disorders.

तत्र वातः शूलानाहाङ्गमर्दमुखशोषमूर्च्छा-भ्रमाग्निवैषम्यपार्श्वपृष्ठकटिग्रहसिराकुञ्चनस्तम्भ-नानि करोति, पित्तं पुनर्ज्वरातीसारान्तर्दाहतृष्णा-मदभ्रमप्रलपनानि, श्लेष्मा तु छर्द्यरोचकाविपाक-शीतज्वरालस्यगात्रगौरवाणि ॥ ७ ॥

**तत्र** તેમાં उनमें, **वातः** વાત वायु, **शूल-** શૂલ शूल, **आनाह-** આનાહ आनाह, **अङ्गमर्द-** અંગમર્દ अंगोंका टूटना, **मुखशोष-** મુખશોષ मुखशोष, **मूर्च्छा-** મૂર્ચ્છા मूर्च्छा, **भ्रम-** ભ્રમ भ्रम, **अग्निवैषम्य-** અગ્નિની વિષમતા अग्निकी विषमता, **पार्श्व- पृष्ठ- कटिग्रह-** પડખાં, પીઠ અને કેડનું ઝલાઈ જવું पार्श्वग्रह, पृष्ठग्रह, कटिग्रह, **सिराकुञ्चन-** સિરાઓનો સંકોચ सिरासंकोच, **स्तम्भनानि** તથા સ્તંભન કરે છે और जड़ता करती है, **पित्तम् पुनः** વળી પિત્ત और पित्त, **ज्वर-** જ્વર ज्वर, **अतीसार-** અતીસાર अतीसार, **अन्तर्दाह-** અન્તર્દાહ अन्तर्दाह, **तृष्णा-** તૃષા प्यास, **मद-** મદ मद, **भ्रम-** ભ્રમ भ्रम, **प्रलपनानि** અને બબડાટ કરે છે और प्रलाप करता है, **श्लेष्मा तु** અને કફ और कफ, **छर्दि-** ઉલટી वमन, **अरोचक-** અરોચક अरुचि, **अविपाक-** અપચો अविपाक, **शीतज्वर-** શીતજ્વર शीतज्वर, **आलस्य-** આળસ आलस्य, **गात्रगौरवाणि** અને શરીરનું ભારેપણું शरीरका भारीपन, **करोति** કરે છે करता है॥ ७॥

7. The vata causes colic, constipation, bodyache, parching of the mouth, fainting, giddiness, irregularity of the gastric fire, rigidity of the sides, back and waist, and the contraction and the hardening of the vessels. The pitta causes fever, diarrhea, internal burning, thirst, intoxication, giddiness and delirium. The kapha causes vomiting, anorexia, indigestion, algid fevers, torpor and heaviness of the limbs.

७. गौरवाणि -गौरवाभिनिर्वृत्तिकरः सम्पद्यते (क. ग. छ. ड. थ.)

अतिमात्रभोजनादन्येऽप्यामप्रकोपस्य हेतवः —

**न च खलु केवलमतिमात्रमेवाहारराशिमामप्रदोषकरमिच्छन्ति, अपि तु खलु गुरुरूक्षशीतशुष्कद्विष्टविष्टम्भिविदाह्यशुचिविरुद्धानामकाले चान्नपानानामुपसेवनं, कामक्रोधलोभमोहेर्ष्याह्रीशोकमानोद्वेगभयोपतप्तमनसा वा यदन्नपानमुपयुज्यते, तदप्याममेव प्रदूषयति ॥ ८ ॥**

**केवलम्** કેવળ केवल, **अतिमात्रम्** અતિમાત્રામાં લીધેલો अतिमात्रामें खाई हुई, **आहारजातम्** આહારસમૂહ आहारराशि ही, **न च खलु** નહિ જ नहीं, **अपि तु खलु** પણ किन्तु, **गुरु-** ગુરુ गुरु, **रूक्ष-** રૂક્ષ रूक्ष, **शीत-** શીત शीत, **शुष्क-** શુષ્ક शुष्क, **द्विष्ट-** દ્વિષ્ટ अप्रिय, **विष्टम्भि-** વિષ્ટંભી विष्टम्भी, **विदाहि-** વિદાહી विदाही, **अशुचि-** અસ્વચ્છ अपवित्र, **विरुद्धानाम् च** અને વિરુદ્ધ एवं विरोधी, **अन्नपानानाम्** અન્નપાનનું खानपानका, **अकाले** અકાળે अकालमें, **उपसेवनम्** સેવન પણ सेवन भी, **आमप्रदोषकरम्** આમદોષ કરનાર છે आमदोषको उत्पन्न करता है, **इच्छन्ति** એમ માને છે ऐसा मानते हैं. **काम- क्रोध- लोभ- मोह-** અથવા કામ- ક્રોધ- લોભ- મોહ अथवा काम- क्रोध- लोभ- मोह, **ईर्ष्या-** ઈર્ષ્યા ईर्ष्या, **ह्री-** લજ્જા लज्जा, **शोक-** શોક शोक, **मान-** માન मान, **उद्वेग-** ઉદ્વેગ उद्वेग, **भय-** અને ભયથી और भयसे, **उपतप्तमनसा वा** સંતાપ પામેલા મને मन आक्रांत होने पर, **यत्** જે जो, **अन्नपानम्** અન્નપાનનો खानपान, **उपयुज्यते** ઉપયોગ કરવામાં આવે છે सेवन किया जाता है, **तत् अपि** તે પણ वह भी, **आमम् एव** આમને જ आमको ही, **प्रदूषयति** દૂષિત કરે છે दूषित करता है ॥ ८ ॥

8. It is not the excessive intake of food alone that is responsible for setting up the ills of chyme-disorder. The following factors too induce the chyme-disorder, namely, the untimely indulgence in foods and drinks that are heavy, dry, cold, dehydrated, disagreeable, retardent, irritant, unclean, or incompatible, or eating and drinking while the mind is afflicted with desire, anger, greed, infatuation, envy, shame, grief, indignation, anxiety and fear.

**भवति चात्र—**

**मात्रयाऽप्यभ्यवहृतं पथ्यं चान्नं न जीर्यति ।**
**चिन्ताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥ ९ ॥**

**अत्र च** આ વિષયમાં इस विषयमें, **भवति** શ્લોક છે કે श्लोक है कि, **मात्रया** માત્રામાં मात्रामें, **अपि** પણ भी, **अभ्यवहृतम्** લીધેલું खाया हुआ, **पथ्यम् च** પથ્ય हितकारी, **अन्नम्** અન્ન अन्न, **चिन्ता-** ચિંતા चिन्ता, **शोक-** શોક शोक, **भय-** ભય भय, **क्रोध-** ક્રોધ क्रोध, **दुःख-** દુઃખ दुःख, **शय्या-** સૂતા રહેવું सोते रहने, **प्रजागरैः** અને જાગરણથી और रात्रिके जागरणके कारण, **न जीर्यति** પચતું નથી जीर्ण नहीं होता ॥ ९ ॥

Here is a verse again—

9. The food eaten by one who is given to anxiety, grief, fear, anger, pain, sedentary habits or, to keeping awake at night, though it be the prescribed diet and is eaten with strict regard to measure, will fail to be digested properly.

आमप्रदोषभेदौ —

**तं द्विविधमामप्रदोषमाचक्षते भिषजः—विसूचिकाम्, अलसकं च ॥ १० ॥**

**भिषजः** વૈદ્યો वैद्य, **तम्** તે उस, **आमप्रदोषम्** આમપ્રદોષને आमदोषको, **विसूचिकाम्** વિસૂચિકા विसूचिका, **अलसकम् च** અને અલસક और अलसक, **द्विविधम्** એમ બે પ્રકારનો ऐसे दो प्रकारका, **आचक्षते** કહે છે कहते हैं ॥ १० ॥

10. The physicians divide the chyme-disorders into two classes viz,

८. आमप्रदोषकरम्–आमप्रदोषकारणम् (ग.)

९. दुःखशय्या–दुःखमोह (द. प.)

acute alimentary irritation and intestinal torpor.

विसूचिकाया लक्षणम्—

**तत्र विसूचिकामूर्ध्वं चाधश्च प्रवृत्तामदोषां यथोक्तरूपां विद्यात् ॥ ११ ॥**

**तत्र** તેમાં उनमें, **ऊर्ध्वं च** ઉપરના ऊपर, **अधः च** તથા નીચેના માર્ગે और नीचे दोनों मार्गों द्वारा, **प्रवृत्त-** પ્રવૃત્ત થયેલ प्रवृत्त, **आमदोषाम्** આમદોષવાળી आम-दोषवाली, **यथोक्तरूपाम्** અને વાતાદિકનાં કહ્યા પ્રમાણેનાં લક્ષણવાળી જે હોય તેને उपर्युक्त वातादिके लक्षणोंसे युक्त जो हो उसे, **विसूचिकाम्** વિસૂચિકા विसूचिका, **विद्यात्** જાણવી जानना चाहिए ॥ ११ ॥

11. Of these the expulsion of undigested food either through the upper or lower channels of the alimentary canal with the symptoms already mentioned should be known as acute alimentary irritation.

अलसकस्य लक्षणम्—

**अलसकमुपदेक्ष्यामः—दुर्बलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्रपुरीषवेगविधारिणः स्थिरगुरुबहुरूक्षशीतशुष्कान्नसेविनस्तदन्नपानमनिलप्रपीडितं श्लेष्मणा च विबद्धमार्गमतिमात्रप्रलीनमलसत्वान्न बहिर्मुखीभवति, ततश्छर्द्यतीसारवर्ज्यान्यामप्रदोषलिङ्गान्यभिदर्शयत्यतिमात्राणि ।**

**अलसकम्** અલસકને अलसकको, **उपदेक्ष्यामः** ઉપદેશ કરશું कहेंगे, **दुर्बलस्य** દૂબળા दुर्बल, **अल्पाग्नेः** અલ્પ અગ્નિવાળા अल्पाग्निवाले, **बहुश्लेष्मणः** બહુ કફવાળા बहुत कफवाले, **वात- मूत्र- पुरीष-** વાત, મૂત્ર અને મળના वायु, मूत्र तथा मलके, **वेगविधारिणः** વેગને રોકનાર वेगको रोकनेवाले, **स्थिर- गुरु- बहु- रूक्ष- शीत- शुष्क-** સ્થિર- ગુરુ- બહુ રૂક્ષ- શીત અને શુષ્ક स्थिर- गुरु- बहुत- रूक्ष- शीत- और शुष्क, **अन्नसेविनः** અન્ન સેવનારને अन्नका सेवन करनेवाले पुरुषका, **तत्** તે वह, **अन्नपानम्** અન્નપાન अन्नपान, **अनिलप्रपीडितम्** વાયુથી દબાઈને वायुसे पीडित हो कर, **श्लेष्मणा च** तथा કફથી कफद्वारा, **विबद्धमार्गम्** માર્ગ રૂંધાઈ જતાં मार्गोंके अवरुद्ध होनेसे, **अतिमात्र- प्रलीनम्** અંદરના ભાગમાં અતિશય રોકાઈ જતાં अतिमात्रामें लीन होनेके कारण, **अलसत्वात्** આળસુપણાને લીધે आलसी बन जानेसे, **बहिर्मुखी न भवति** બહાર નીકળતું નથી बाहिर नहीं आता है, **ततः** અને પછી इसके पीछे, **छर्दि- अतीसार-** ઉલટી તથા અતીસાર वमन और अतीसारको, **वर्ज्यानि** સિવાયનાં छोड़ कर, **अतिमात्राणि** ઘણા પ્રમાણમાં अतिमात्रामें, **आमप्रदोष-** આમદોષનાં आमदोषके, **लिङ्गानि** લક્ષણો लक्षण, **अभिदर्शयति** બતાવે છે दिखाता है ।

12-(1). We shall now describe the disorder of intestinal torpor. Let us take a man who is frail, of weak digestion, of kapha habitus, habitually given to suppressing the urges of flatus, urine and feces, and who is given to eating food which is compact, heavy, large in quantity, dry, cold and dehydrated. Such food and drink consumed by such a one, though painfully urged on by peristalsis cannot find an outlet, as it gets inert owing to the passages being obstructed by the accumulated kapha and the food masses being jammed inside. In consequence of this condition, the symptoms of general indigestion, excepting the two—vomiting and purging, manifest themselves in a very aggravated form.

---

१२. आमप्रदोषलिङ्गान्यभिदर्शयति–लिङ्गानि यथोक्तान्यभिदर्शयति (च)

,, ,, ,, ,, –आमप्रदोषरूपाणि यथोक्तान्यभिदर्शयति (फ.)

**अतिमात्रप्रदुष्टाश्च दोषाः प्रदुष्टामबद्धमार्गास्तिर्यग्गच्छन्तः कदाचिदेव केवलमस्य शरीरं दण्डवत् स्तम्भयन्ति, ततस्तं दण्डालसकमसाध्यं ब्रुवते ।**

अतिमात्र- અતિ પ્રમાણુમાં अति मात्रामें, प्रदुष्टाः च દૂષિત થયેલા दूषित हुए, दोषाः દોષો दोष, प्रदुष्ट-आम- દૂષિત થયેલા આમથી दूषित आमद्वारा, बद्धमार्गाः માર્ગો રૂંધાઈ જતાં मार्गके अवरुद्ध होनेके कारण, तिर्यक् ત્રાંસા (શાખાઓમાં) तिरछे (शाखामें), गच्छन्तः ચાલતાં जाते हुए, कदाचित् एव ક્યારેક कभी, अस्य એના इस पुरुषके, केवलम् આખા सम्पूर्ण, शरीरम् શરીરને शरीरको, दण्डवत् દંડની પેઠે दण्डके समान, स्तम्भयन्ति જડ બનાવી દે છે जकड़ देते हैं, ततः तम् ત્યારે તેને तब उसे, असाध्यम् અસાધ્ય असाध्य, दण्डालसकम् દંડાલસક दण्डालसक, ब्रुवते કહે છે कहते हैं ।

12-(2). This brings about extreme vitiation of the humors which, finding the alimentary canal blocked at both ends by the vitiated mass of undigested food, tend to spread sideways and in that process, not infrequently cause the body to become rigid like a staff. This condition which is spoken of as " Dandalasaka ", " Staff-like rigidity " is considered to be incurable.

आमविषस्य लक्षणम् —

**विरुद्धाध्यशनाजीर्णाशनशीलिनः पुनरामदोषमामविषमित्याचक्षते भिषजः, विषसदृशलिङ्गत्वात्; तत् परमसाध्यम्, आशुकारित्वाद्विरुद्धोपक्रमत्वाच्चेति ॥ १२ ॥**

१२. ततस्तं दण्डालसकमसाध्यं — अतस्तमलसकमसाध्य (ह. त. द. च.)

,, पुनरामदोषमामविषमित्याचक्षते—पुनरेवं दोषमामविषमित्याचक्षते (ध.)

,, ,, ,, —आमप्रदोषविषमाचक्षते (ध.)

विरुद्धाध्यशन- વિરુદ્ધ ખાનાર, ખાધા ઉપર ખાનાર विरुद्ध भोजन करनेवाले- अध्यशन (खाये पर खाना) करनेवाले, अजीर्णाशन- शीलिनः पुनः तथा અજીર્ણ પર ખાનારના तथा अजीर्णमें भोजन करनेवाले पुरुषके, आमदोषम् આમદોષને आमदोषको, विषसदृश- વિષ જેવાં विषके समान, लिङ्गत्वात् લક્ષણો હોવાથી लक्षणोंके होनेसे, भिषजः વૈદ્યો वैद्य, आमविषम् इति આમવિષ आमविष, आचक्षते કહે છે कहते हैं, आशुकारित्वात् તુરત મારનાર तुरन्त मारक, विरुद्ध- उपक्रमत्वात् च અને વિરુદ્ધ ચિકિત્સાવાળો હોવાથી और विरुद्ध चिकित्सावाला होनेसे, तत् परम् તે પરમ वह अत्यन्त, असाध्यम् इति અસાધ્ય છે असाध्य है ॥ १२ ॥

12. The chyme-disorder which results from incompatible foods, or from eating predigestion-meals, is named by the physicians as intestinal toxemia because it evinces symptoms similar to those of toxemia. Such a disorder is indeed absolutely irremediable, because of its fulminating character and also because of the antagonism in the lines of treatment indicated

अलसकविसूचिकामदोषेषु चिकित्साक्रमः —

**तत्र साध्यमामं प्रदुष्टमलसीभूतमुल्लेखयेदादौ पाययित्वा सलवणमुष्णं वारि, ततः स्वेदनवर्तिप्रणिधानाभ्यामुपाचरेदुपवासयेच्चैनम् ।**

तत्र તેમાં इनमें, प्रदुष्टम् દૂષિત થયેલ दूषित, अलसीभूतम् રોકાયેલ रुके हुए, साध्यम् અને સાધ્ય और साध्य, आमम् આમનું आमदोषको, आदौ પ્રથમ प्रथम, सलवणम् उष्णम् લવણસહિત અને ઊનું नमकके साथ और उष्ण, वारि પાણી पानी, पाययित्वा પિવરાવીને पिला कर, उल्लेखयेत् વમન કરાવવું वमन करावे, ततः તે પછી पीछे, स्वेदन- સ્વેદન स्वेदन, वर्तिप्रणिधानाभ्याम् અને વર્તિ ચડાવવા દ્વારા और वर्तिप्रणिधान द्वारा, एनम्

१३. स्वेदन-छेदन (द. प.)

એને इसकी, उपाचरेत् ઉપચાર કરવો चिकित्सा करे, उपवासयेत् च અને ઉપવાસ કરાવવો उपवास करावे;

13-(1) Now the remediable variety of chyme-disorder in which the intaken food is vitiated and becomes stagnant, should be treated thus:—To begin with, the patient should be made to vomit by the administration of an emetic consisting of warm saline water; thereafter he should be treated with sudation and suppositories and made to fast.

**विसूचिकायां तु लङ्घनमेवाग्रे विरिक्तवच्चानुपूर्वी ।**

**विसूचिकायाम्** વિસૂચિકામાં विसूचिकामें, **तु अग्रे** વળી પ્રથમ प्रथम, **लङ्घनम् एव** લંઘન જ કરાવવું लंघन ही करावे, **विरिक्तवत्** અને પછી વિરેચન કરાવેલ પુરુષની પેઠે और पीछे विरेचन कराये गये पुरुषके समान, **आनुपूर्वी** સંસર્જન ક્રમ પ્રમાણે ઉપચાર કરાવવો संसर्जन अनुसार उपचार करावे;

13-(2). In cases of acute alimentary irritation, the patient should first be subjected to lightening therapy and the after-treatment should be the same as that in purification therapy.

**आमप्रदोषेषु त्वन्नकाले जीर्णाहारं पुनर्दोषावलिप्तामाशयं स्तिमितगुरुकोष्ठमनन्नाभिलाषिणमभिसमीक्ष्य पाययेद्दोषशेषपाचनार्थमौषधमग्निसंधुक्षणार्थं च, नत्वेवाजीर्णाशनम्; आमप्रदोषदुर्बलो ह्यग्निर्न युगपद्दोषमौषधमाहारजातं च शक्तः पक्तुम् ।**

**आमप्रदोषेषु तु** આમદોષમાં आमदोषमें, **जीर्णाहारम्** પચી ગયેલા આગલા આહારવાળા પુરુષને पहले आहारके पच जाने पर पुरुषको, **पुनः** વળી फिर, **दोषावलिप्त-** દોષથી લિપ્ત दोषोंसे भरे, **आमाशयम्** આમાશય હોવાથી आमाशयके होने पर, **स्तिमित- गुरु-** તેમજ નિશ્ચલ અને ભારે एवं निश्चल और भारी, **कोष्ठम्** કોઠો હોવાથી कोष्ठ होने पर, **अनन्नाभिलाषिणम्** અન્નને નહિ ઇચ્છતો भोजनकी इच्छा न करते हुए, **अभिसमीक्ष्य** જોઈને देखकर, **दोषशेष-** બાકીના દોષો अवशिष्ट दोषोंको, **पाचनार्थम्** પચાવવા માટે पचानेके लिए, **अग्नि- संधुक्षणार्थम् च** તથા અગ્નિને પ્રજ્વલિત કરવા માટે तथा अग्निको प्रदीप्त करनेके लिए, **औषधम्** ઔષધ औषध, **अन्नकाले** જમવા વખતે भोजनके समय, **पाययेत्** પાવું पिलानी चाहिए, **अजीर्णाशनम् तु** પણ ખાધેલું પચ્યું ન હોય તો भोजनके पचे बिना, **न एव** એમ ન કરવું ऐसा न करे, **हि** કારણકે क्योंकि, **आम- प्रदोष-** આમદોષથી आमदोषसे, **दुर्बलः** નબળો થયેલો दुर्बल, **अग्निः** અગ્નિ अग्नि, **दोषम्** દોષ दोष, **औषधम्** ઔષધ औषध, **आहारजातम् च** અને આહારના સમૂહને और आहारसमूहको, **युगपत्** એકસાથે एकसाथ, **पक्तुम्** પચાવવા पचा, **न शक्तः** શક્તિમાન થતો નથી नहीं सकती;

13-(3). In chyme-disorder, when dealing with a patient who has digested his last meal but whose stomach is still smeared with morbid humors and is inactive and heavy and who is averse to food, medicine should be administered at the meal-time with a view to helping the digestion of the remaining morbid matter in the stomach and the stimulation of the digestive fire. But if the patient has not digested his last meal, this procedure is not to be followed. For, the digestive fire that has been enfeebled by the chyme-disorder is unable to digest, at one and the same time, the vitiated humor, the medicine and the intaken food-mass.

१३. आनुपूर्वी—आनुपूर्व्या (प.)
,, ,, —आनुपूर्वी क्रिया (प.)

**अपि चामप्रदोषाहारौषधविभ्रमोऽतिबलत्वादुपरतकायाग्निं सहसैवातुरमबलमतिपातयेत् ।**

अपि च અને વળી और भी, आमप्रदोष- આમદોષ आमदोष, आहार- આહાર आहार, औषध- तथा ઔષધનો तथा औषधके, विभ्रमः ઉત્પાત उत्पातके, अतिबलत्वात् અતિ બલવાન હોવાથી अति बलवान होनेके कारण, उपरत- નાશ પામેલ शान्त हुए, कायाग्निम् જઠરાગ્નિવાળા शरीराग्निवाले, अबलम् નિર્બળ निर्बल, आतुरम् રોગીને रोगीको, सहसा एव એકદમ જ सहसा ही, अतिपातयेत् મારે છે मार देती है;

13-(4). Since the untoward effect cumulatively of the chyme-disorder, the medicine and the food is too great, it will perforce hasten to death the enfeebled patient in whom the thermal processes have become inactive.

**आमप्रदोषजानां पुनर्विकाराणामपतर्पणेनैवोपरमो भवति, सति त्वनुबन्धे कृतापतर्पणानां व्याधीनां निग्रहे निमित्तविपरीतमपास्यौषधमातङ्कविपरीतमेवावचारयेद्यथास्वम् ।**

आमप्रदोषजानाम् આમદોષથી ઉત્પન્ન થતા आमदोषजन्य, पुनः विकाराणाम् વિકારોની रोगोंकी, अपतर्पणेन અપતર્પણથી अपतर्पणसे, एव જ ही, उपरमः શાંતિ शान्ति, भवति થાય છે होती है, अनुबन्धे રોગોનો અનુબંધ रोगोंका अनुबंध, तु सति થાય તો होने पर, कृत- अपतर्पणानाम् અપતર્પણ કરાવેલા अपतर्पण करने पर भी, व्याधीनाम् વ્યાધિઓના रोगोंको, निग्रहे નિગ્રહમાં शांत करनेके लिए, निमित्त- हेतु कारण, विपरीतम् વિપરીત विरुद्ध, औषधम् ઔષધનો औषध, अपास्य ત્યાગ કરી न देकर, आतङ्क- વ્યાધિ रोग, विपरीतम् વિપરીત ઔષધ विपरीत औषध, एव જ ही, यथास्वम् યથાયોગ્ય दोषानुसार, अवचारयेत् આપવું જોઈએ देनी चाहिए;

13-(5). The ailments resulting from chyme-disorder are to be quieted only through the depletion therapy. If, however, the effect of disease persists even after the depletory treatment, then for the subjugation of the disease, the physician should give up treating the disease with reference to the causative factors and begin treating the actual morbid conditions.

**सर्वविकाराणामपि च निग्रहे हेतुव्याधिविपरीतमौषधमिच्छन्ति कुशलाः, तदर्थकारि वा ।**

कुशलाः કુશળ વૈદ્યો बुद्धिमान वैद्य, सर्वविकाराणाम् સર્વે વિકારોના सब रोगोंको, निग्रहे નિગ્રહમાં शान्त करनेके लिए, अपि च પણ भी, हेतु-व्याधि-विपरीतम् હેતુવિપરીત અને વ્યાધિવિપરીત हेतुविपरीत और व्याधिविपरीत, तदर्थकारि वा અથવા વ્યાધિવિપરીત अथवा व्याधिविपरीत, औषधम् ઔષધ દેવાની औषध देना, इच्छन्ति ઇચ્છા રાખે છે पसंद करते हैं;

13-(6). In the conquest of all disorders the learned physicians give the first place to those drugs that are antagonistic to both the morbific and the morbid factors or other therapeutic agents which serve the same purpose.

**विमुक्तामप्रदोषस्य पुनः परिपक्वदोषस्य दीप्ते चाग्नावभ्यङ्गास्थापनानुवासनं विधिवत् स्नेहपानं च युक्त्या प्रयोज्यं प्रसमीक्ष्य दोषभेषजदेशकालबलशरीराहारसात्म्यसत्त्वप्रकृतिवयसामवस्थान्तराणि विकारांश्च सम्यगिति ॥ १३ ॥**

विमुक्त-आमप्रदोषस्य આમદોષથી મુક્ત થયેલાને आमदोषसे मुक्त हो जाने पर, परिपक्वदोषस्य દોષ પરિપક્વ થતાં दोषके परिपक्व होने पर, पुनः વળી और,

१३-(४) अतिबलत्वादुपरतकायाग्निं—अतिबलत्वादुपहत्य कायाग्निम् (च. ध.)

१३. विमुक्तामप्रदोषस्य—अनुद्रिक्तामप्रदोषस्य (द. ध. प.)

अग्नौ च અગ્નિ अग्निके, दीप्ते પ્રદીપ્ત થતાં प्रदीप्त होने पर, दोषं દોષ दोष, भेषज- ઔષધ भेषज, देश- દેશ देश, काल- કાલ काल, बल- બલ बल, शरीर- શરીર शरीर, आहार- આહાર आहार, सात्म्य- સાત્મ્ય सात्म्य, सत्त्व- સત્ત્વ सत्त्व, प्रकृति- પ્રકૃતિ प्रकृति, वयसाम् અને વયની और आयुकी, अवस्था- અવસ્થાના अवस्थाके, अन्तराणि વિશેષો भेदोंको, विकारान् च અને વિકારોને तथा विकारोंको, सम्यक् સારી રીતે भली प्रकार, प्रसमीक्ष्य જોઈને देखकर, अभ्यंग- અભ્યંગ अभ्यंग, आस्थापन- આસ્થાપન आस्थापन, अनुवासनम् અનુવાસન अनुवासन, स्नेहपानम् च તથા સ્નેહપાનનો तथा स्नेहपानका, विधिवत् વિધિપૂર્વક विधिपूर्वक, प्रयोज्यम् પ્રયોગ કરવો જોઈએ प्रयोग करना चाहिए ॥१३॥

13. After he has been relieved of the chyme-disorder and after all the morbid matter has been fully digested and the gastric fire has been re-activated, the patient should be administered systematically and with skill, inunction, corrective and unctuous enemata and the oleation therapy, having considered well the morbific factor, the drug indicated, the place, the season, the patient's vitality, his physicial condition, his diet, his habituation, his psychic make-up, his constitution, his age, as well as the disorders that have to be treated.

भवति चात्र—

आहारविध्यायतनानि चाष्टौ
सम्यक् परीक्ष्यात्महितं विदध्यात् ।
अन्यश्च यः कश्चिदिहास्ति मार्गो
हितोपयोगेषु भजेत तं च ॥ १४॥

अत्र च આ વિષયમાં इस विषयमें, भवति શ્લોક છે કે श्लोक है कि, आहारविधि- આહારવિધિવિશેષના आहारविधिविशेषके, आयतनानि च હેતુઓની आयतनकी, सम्यक् બરાબર भली प्रकारसे, परीक्ष्य પરીક્ષા કરીને परीक्षा करके, आत्महितम् માણસે પોતાનું હિત अपने लिए जो हितकर हो उसे, विदध्यात् કરવું જોઈએ करे, हितोपयोगेषु અને હિતના ઉપયોગ માટે हितके उपयोगके लिए, यः अन्यः च જે બીજો जो अन्य, कश्चित् मार्गः કોઈ માર્ગ कोई मार्ग, इह अस्ति तम् આ લોકમાં હોય તેનું इस लोकमें हो उसका, च પણ भी, भजेत સેવન કરવું જોઈએ सेवन करे ॥ १४ ॥

Here is a verse again—

14. Having examined well the eight rules concerning diet, one should secure one's own well-being; in addition whatever else is indicated here as a means in the pursuit of wholesome things one should have recourse to all such.

भोजनपरिपाकस्थानम् —

अशितं खादितं पीतं लीढं च क विपच्यते ।
एतत्त्वां धीर! पृच्छामस्तन्न आचक्ष्व बुद्धिमन् ॥१५॥

धीर ! હે ધીર हे धीर, बुद्धिमन् હે બુદ્ધિમાન ગુરુ ! हे बुद्धिमान गुरु !, अशितम् ખાધેલું अशित, खादितम् જમેલું खादित, पीतम् પીધેલું पीत, लीढम् च અને ચાટેલું लीढ, क કયે સ્થાને कहां, विपच्यते પચે છે पचता है, एतत् त्वाम् એ આપને यह आपसे, पृच्छामः અમે પૂછીએ છીએ हम पूछते हैं, तत् नः તે અમોને वह हमें, आचक्ष्व કહો कहिए ॥ १५ ॥

15. Where is the food digested, the food that is eaten, that is masticated, that is drunk, and that is licked up? O, wise one! this we would know of thee. Declare it to us, O, enlightened one!

इत्यग्निवेशप्रमुखैः शिष्यैः पृष्टः पुनर्वसुः ।
आचचक्षे ततस्तेभ्यो यत्राहारो विपच्यते ॥१६॥

इति આ પ્રમાણે इस प्रकार, अग्निवेश- प्रमुखैः અગ્નિવેશાદિ अग्निवेशादि, शिष्यैः શિષ્યોએ शिष्योंने,

पृष्टः પૂછતાં पूछने पर, पुनर्वसुः પુનર્વસુએ पुनर्वसुने, ततः ત્યારપછી उसके पीछे, तेभ्यः તેઓને उन शिष्योंको, यत्र જે સ્થાને जहां, आहारः આહાર आहार, विपच्यते પચે છે पचता है, तत् તે वह. आचचक्षे કહી દેખાડયું कहा ॥ १६ ॥

16. Having been questioned thus by the assembly of disciples headed by Agnivesa, Punarvasu enlightened them as to where food is digested.

**नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः ।**
**अशितं खादितं पीनं लीढं चात्र विपच्यते ॥१७॥**

जन्तोः પ્રાણીના प्राणियोंके, नाभिस्तन- નાભિ અને સ્તનની नाभि और स्तनोंके, अन्तरम् વચ્ચે मध्यवर्ति स्थानमें, आमाशयः આમાશય છે आमाशय है, इति એમ ऐसा, स्मृतः કહ્યું છે कहा है, अत्र આ સ્થાને यहां पर, अशितम् ચાવ્યા વિના ખાધેલું अशित, खादितम् ચાવીને ખાધેલું खादित, पीतम् પીધેલું पीत, लीढम् च અને ચાટેલું और लीढ, विपच्यते પચે છે पचता है ॥ १७ ॥

17. That part of the human body which lies between the navel and the nipple-line is called the seat of digestion. It is here that all that is eaten, masticated, drunk and licked up is digested.

**आमाशयगतः पाकमाहारः प्राप्य केवलम् ।**
**पक्वः सर्वाश्रयं पश्चाद्धमनीभिः प्रपद्यते ॥ १८ ॥**

आमाशयगतः આમાશયમાં ગયેલો आमाशयमें जा कर, आहारः આહાર आहार, केवलम् સંપૂર્ણ सम्पूर्ण रूपमें, पाकम् પચી पचा, प्राप्य જઈને हुआ, पक्वः પકવ બની परिपक्व बन कर, पश्चात् પછી पीछे, धमनीभिः ધમનીઓ દ્વારા धमनियों द्वारा, सर्वाश्रयम् સર્વ શરીરમાં सब शरीरमें, प्रपद्यते પહોંચી જાય છે पहुंच जाता है ॥ १८ ॥

18. The food that has reached the seat of digestion, being fully digested, is, in its changed form, circulated to the entire body by means of the vessels.

अध्यायार्थसंग्रहः—

**तत्र श्लोक :—**

**तस्य मात्रावतो लिङ्गं फलं चोक्तं यथायथम् ।**
**अमात्रस्य तथा लिङ्गं फलं चोक्तं विभागशः ॥१९॥**

तत्र તે વિષયમાં उस विषयमें, श्लोकः ઉપસંહારનો શ્લોક છે કે उपसंहारका श्लोक है कि, मात्रावतः માત્રાવાળા मात्रावाले, तस्य તે આહારનાં उस आहारके, लिङ्गम् લક્ષણ लक्षण, फलम् च અને ફલ और फल, यथायथम् યોગ્ય રીતે ठीक ठीक, उक्तम् કહ્યાં છે कह दिये हैं, तथा તે જ પ્રમાણે तथा, अमात्रस्य માત્રારહિત આહારનાં अमात्रावाले आहारके, लिङ्गम् લક્ષણ लक्षण, फलम् च અને ફલ और फल, विभागशः વિભાગ પાડીને पृथक् पृथक्, उक्तम् કહ્યાં છે कह दिये हैं ॥ १९ ॥

Here is the recapitulatory verse—

19. The signs and results of food eaten in measure, as well as those of food eaten out of measure, have been accurately described separately in this chapter.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने त्रिविधकुक्षीयविमानं नाम द्वितीयोऽध्यायः ॥२॥**

इति આ પ્રમાણે इस प्रकार, अग्निवेशकृते અગ્નિવેશે રચેલા अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे અને ચરકથી પ્રતિસંસ્કાર પામેલા આ શાસ્ત્રમાં और चरकके द्वारा प्रतिसंस्कृत इस शास्त्रके, विमानस्थाने વિમાનસ્થાન વિષે विमानस्थानमें, त्रिविधकुक्षीयविमानम् 'ત્રિવિધકુક્ષીયવિમાન' 'त्रिविधकुक्षीयविमान', नाम નામનો नामका, द्वितीयः બીજો दूसरा, अध्यायः અધ્યાય સંપૂર્ણ થયો अध्याय समाप्त हुआ ॥ २ ॥

१९. तस्य–तत्र (ध.)

2. Thus in the section on Specific Determination of Measure in the treatise complied by Agnivesa and revised by Caraka, the second chapter entitled the "Specific Determination of the Measure of Stomach-capacity" is completed.

## तृतीयोऽध्यायः ।

## त्रीजो अध्याय अध्याय तीसरा

## Chapter III

जनपदोद्ध्वंसनीयाध्यायोपक्रमः —

**अथातो जनपदोद्ध्वंसनीयं विमानं व्याख्यास्यामः॥१॥**

**इति ह स्माह भगवानात्रेयः ॥ २ ॥**

**अथ अतः** हवे अहींथी अब आगे, **'जनपदोद्ध्वंसनीयम् विमानम्'** 'जनपदोद्ध्वंसनीय विमान' नामना अध्यायनुं 'जनपदोद्ध्वंसनीय विमान' नामके अध्यायका, **व्याख्यास्यामः** व्याख्यान करशुं व्याख्यान करेंगे ॥ १ ॥

**भगवान्** भगवान भगवान, **आत्रेयः** आत्रेये आत्रेयने, **इति ह** आ विषयमां नीचे प्रमाणे ज इस विषयमें निम्न प्रकारसे ही, **आह स्म** कहेलुं छे कहा है ॥२॥

1. We shall now expound the chapter entitled "The Specific Determination of the Measure of Depopulation through epidemics".

2. Thus declared the worshipful Atreya.

प्रागेव जनपदोद्ध्वंसनाद्भेषजोद्धरणोपदेशः —

**जनपदमण्डले पञ्चालक्षेत्रे द्विजातिवराध्युषिते काम्पिल्यराजधान्यां भगवान् पुनर्वसुरात्रेयोऽन्तेवासिगणपरिवृतः पश्चिमे घर्ममासे गङ्गातीरे वनविचारमनुविचरञ्छिष्यमग्निवेशमब्रवीत् ॥ ३ ॥**

**द्विजातिवर-** ज्यां श्रेष्ठ द्विजो श्रेष्ठ द्विज जातियोंसे, **अध्युषिते** वसता हता एवा अधिष्ठित, **पञ्चालक्षेत्रे** पंचालक्षेत्र नामना पंचालक्षेत्रनामके, **जनपदमण्डले** जनपदमंडलमां जनपदमण्डलमें, **काम्पिल्य-** कांपिल्य नामनी काम्पिल्य नामकी, **राजधान्याम्** राजधानीनी अंदर राजधानीमें, **अन्तेवासिगण-** शिष्य गणथी शिष्योंसे, **परिवृतः** वींटायेला घिरे हुए, **आत्रेयः** आत्रेय आत्रेय, **भगवान्** भगवान भगवान, **पुनर्वसुः** पुनर्वसुए पुनर्वसु, **पश्चिमे** पाछला पिछले, **घर्ममासे** उनाळाना महिनामां ग्रीष्म मासमें, **गङ्गातीरे** गंगाने तीरे गंगाके किनारे, **वनविचारम्** वनमां विहार वनमें विहार, **अनुविचरन्** करतां करते हुए, **शिष्यम्** पोताना शिष्य अपने शिष्य, **अग्निवेशम्** अग्निवेशने अग्निवेशको, **अब्रवीत्** कह्युं कहा ॥ ३ ॥

3. The worshipful Punarvasu Atreya while on a peripatetic tour during the latter month of the hot season, attended by his entourage of disciples, through the wood-lands skirting the Ganges near the capital city of Kampilya in the populous zone of the country of Panchala, wherein resided the elite of the twice-born communities, thus observed, addressing the disciple Agnivesa.

**दृश्यन्ते हि खलु सौम्य! नक्षत्रग्रहगणचन्द्रसूर्यानिलानलानां दिशां चाप्रकृतिभूतानामृतुवैकारिका भावाः, अचिरादितो भूरपि च न यथावद्रसवीर्यविपाकप्रभावमोषधीनां प्रतिविधास्यति, तद्वियोगाच्चातङ्कप्रायता नियता ।**

**सौम्य!** हे सौम्य! हे सौम्य!, **अप्रकृति-** अस्वाभाविक स्थितिमां अस्वाभाविक स्थितिमें, **भूतानाम्** रहेला स्थित, **नक्षत्र-** नक्षत्र नक्षत्र, **ग्रह- गण-** ग्रहसमूह ग्रहसमूह, **चन्द्र-** चन्द्र चन्द्र, **सूर्य-** सूर्य सूर्य, **अनिल-** वायु

३. द्विजातिवराध्युषिते—द्विजातिवराध्युषितायाम् (क.ग.त.)

४. नक्षत्रग्रहगणचन्द्र—नक्षत्रग्रहचन्द्र (ग.)

,, चाप्रकृतिभूतानाम्—च प्रकृतिभूतानाम (च.ग.प.)

वायु, अनलानाम् અગ્નિ अग्नि, दिशाम् च અને દિશાઓના और दिशाओंके, ऋतुवैकारिकाः ઋતુવિકાર કરનારા ऋतुविकारजनक, भावाः ભાવો भाव, दृश्यन्ते हि खलु ખરેખર જોવામાં આવે છે सचमुच दिखाई देते हैं, इतः હવેથી आगे, भूः अपि પૃથ્વી પણ पृथ्वी भी, अचिरात् च થોડા વખતમાં शीघ्र ही, ओषधीनाम् ઓષધિઓના ओषधियोंके, रस- રસ रस, वीर्य- વીર્ય वीर्य, विपाक- વિપાક विपाक, प्रभावम् અને પ્રભાવ और प्रभावको, यथावत् જોઈએ તેવાં ठीक प्रकारसे, न નહિ नहीं, प्रतिविधास्यति ઉત્પન્ન કરશે उत्पन्न करेगी, तद्वियोगात् च ઓષધિઓના રસ- વીર્ય વગેરેના વિયોગથી ओषधियोंके रस आदिके अभावसे, आतङ्क- प्रायता અધિક રોગચાળો अधिक रोगका होना, नियता નક્કી થવાનો છે अवश्यभावी है;

4-(1). O, gentle one! behold the stars, the planets, the moon, the sun, the wind, the temperature and the quarters are presenting their abnormal aspect, thus portending abnormal seasonal fluctuations. As the result of this abnormality the earth will fail to produce the herbs having the right qualities of taste, potency, post-digestive effects and specific action. In consequence of this failure there will ensue of necessity a marked prevalence of disease.

**तस्मात् प्रागुद्ध्वंसात् प्राक् च भूमेर्विरसीभावादुद्धरध्वं सौम्य! भैषज्यानि यावन्नोपहतरसवीर्यविपाकप्रभावाणि भवन्ति ।**

तस्मात् તેથી इसलिए, सौम्य! હે સૌમ્ય! हे सौम्य!, उद्ध्वंसात् વિનાશ થયા विनाश होनेसे, प्राक् પહેલાં पूर्व, भूमेः અને ભૂમિ और भूमिके, विरसीभावात् વિરસ થયા रसहीन होनेसे, प्राक् च પહેલાં पूर्व, यावत् જ્યાં સુધીમાં जब तक, उपहत- હીન नष्ट, रस- રસ रस, वीर्य- વીર્ય वीर्य, विपाक- વિપાક विपाक, प्रभावाणि અને પ્રભાવવાળાં और प्रभाववाली, न भवन्ति ન થાય नहीं होती, (तावत् ત્યાં સુધીમાં तब तक,) भैषज्यानि ઔષધિઓ औषधियोंको, उद्धरध्वम् ઉખેડી લો उखाड लो;

4-(2). Therefore, well before such calamities occur and well before the earth has lost her savour. O, gentle one! collect the medicinal herbs while yet their taste, potency, post-digestive effects aud specific actions remain unvitiated.

**वयं चैषां रसवीर्यविपाकप्रभावानुपयोक्ष्यामहे ये चास्माननुकाङ्क्षन्ति, यांश्च वयमनुकाङ्क्षामः ।**

ये च અને જેઓ और जो, अस्मान् આપણને हमको, अनुकाङ्क्षन्ति ચાહે છે चाहते हैं, यान् च તથા જેને और जिनको, वयम् આપણે हम, अनुकाङ्क्षामः ચાહીએ છીએ चाहते हैं, (तेषु તેઓમાં उनमें,) वयम् च આપણે हम, एषाम् એઓનાં इनके, रस- રસ रस, वीर्य- વીર્ય वीर्य, विपाक- વિપાક विपाक, प्रभावान् અને પ્રભાવનો और प्रभावका, उपयोक्ष्यामहे ઉપયોગ કરશું उपयोग करेंगे;

4-(3). We shall thus, when the occasion arises, make use of the taste, potency, post-digestive effects and the specific action of these herbs for the benefit of those who desire us and also those whom we desire.

**न हि सम्यगुद्धृतेषु सौम्य! भैषज्येषु सम्यग्विहितेषु सम्यक् चावचारितेषु जनपदोद्ध्वंसकराणां विकाराणां किंचित् प्रतीकारगौरवं भवति ॥४॥**

४. सम्यक् चावचारितेषु–सम्यग्विचारचारितेषु (फ.)
,, अवचारितेषु–विचारितेषु (त.)
,, प्रतीकारगौरवं–प्रतिकारणैरेवं (प.)

सौम्य ! હે સૌમ્ય ! हे सौम्य !, भैषज्येषु ઔષધિઓને ओषधियोंके, सम्यक् સારી રીતે सम्यक् प्रकारसे, उद्धृतेषु ઉખેડી લઈ उखाड ले कर, सम्यक् સારી રીતે सम्यक् प्रकारसे, विहितेषु ઔષધો બનાવવામાં આવતાં औषध बना लिये जाने पर, सम्यक् અને સારી રીતે और सम्यक् प्रकारसे, अवचारितेषु च પ્રયોજવામાં આવતાં काममें लाने पर, जनपद- દેશનો जनपदके, उद्ध्वंसकराणाम् વિનાશ કરનાર विनाशकारक, विकाराणाम् વિકારોનો रोगोंके, प्रतीकार- પ્રતિકાર કરવામાં प्रतिकारमें, किंचित् જરા પણ कुछभी, गौरवम् કષ્ટ कठिनाई, न हि भवति પડતું નથી नहीं होती ॥ ४ ॥

4. Nor indeed, O, gentle one! are counter-measures to epidemics that destroy populations a difficult matter, provided the medicinal herbs are properly culled, properly prepared and properly administered.

असमानप्रकृत्यादीनां जनानां कथं युगपदेकेन व्याधिनोद्ध्वंसनमित्यग्निवेशस्य प्रश्नः—

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—उद्धृतानि खलु भगवन् ! भैषज्यानि, सम्यग्विहितानि, सम्यगवचारितानि च;[1]

एवंवादिनम् આ પ્રમાણે કહેતા इस प्रकार कहते हुए, भगवन्तम् ભગવાન भगवान, आत्रेयम् આત્રેયને आत्रेयको, अग्निवेशः અગ્નિવેશે अग्निवेशने, उवाच કહ્યું कहा, भगवन् હે ભગવાન ! हे भगवान !, भैषज्यानि ઔષધિઓ ओषधियाँ, उद्धृतानि खलु ઉખેડી લીધી છે उखाड़ ली गई हैं, सम्यक् સારી રીતે सम्यक् प्रकारसे, विहितानि તૈયાર કરેલી છે बना ली गई हैं, सम्यक् च અને સારી રીતે और सम्यक् प्रकारसे, अवचारितानि પ્રયોજેલી છે प्रयुक्त भी की गई हैं ।

5-(1). Unto the worshipful Atreya thus exhorting, Agnivesa submitted, 'O, worshipful one! the medicinal plants shall be properly culled, well-prepared and well administered according to your instructions.

अपि तु खलु जनपदोद्ध्वंसनमेकेनैव व्याधिना युगपदसमानप्रकृत्याहारदेहबलसात्म्यसत्त्ववयसां मनुष्याणां कस्माद्भवतीति ॥ ५ ॥[6]

अपि तु खलु પણ किन्तु, असमान- અસમાન भिन्न भिन्न, प्रकृति- પ્રકૃતિ प्रकृति, आहार- આહાર आहार, देह- દેહ देह, बल- બલ बल, सात्म्य- સાત્મ્ય सात्म्य, सत्त्व- સત્ત્વ सत्त्व, वयसाम् અને વયવાળાં एवं वयवाले, मनुष्याणाम् મનુષ્યો હોવા છતાં પણ मनुष्यमें होते हुए भी, एकेन एव એક જ एक ही, व्याधिना વ્યાધિથી व्याधिसे जनपद- દેશનો जनपदका, उद्ध्वंसनम् વિનાશ विनाश, युगपत् એકસાથે एकसाथ, कस्मात् શા કારણે किस कारणसे, भवति इति થાય છે ? होता है ? ॥५॥

5. But, how does the simultaneous destruction of communities, consisting as they do of individuals who differ from one onother in constitution, diet, physique, vitality, habits, psychic makeup and age, take place by the incidence of one single disease?'

तत्रात्रेयकृतं समाधानम्—

तमुवाच भगवानात्रेयः—एवमसामान्यवतामप्येभिरग्निवेश ! प्रकृत्यादिभिर्भावैर्मनुष्याणां येऽन्ये भावाः सामान्यास्तद्वैगुण्यात् समानकालाः समानलिङ्गाश्च व्याधयोऽभिनिर्वर्तमाना जनपदमुद्ध्वंसयन्ति ।

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने तम् તેને अग्निवेशको, उवाच કહ્યું कहा, अग्निवेश हे અગ્નિવેશ ! हे अग्निवेश !, एवम् એ પ્રમાણે इस प्रकार, एभिः એ इन, प्रकृत्यादिभिः પ્રકૃતિ વગેરે प्रकृत्यादि, भावैः ભાવોથી भावोंसे, असामान्यवताम् અસમાનતા-

[1]. सम्यगवचारितानि—सम्यग्विचारचारितानि (च.फ.)

[6]. असामान्यवताम्—असामान्यानाम् (ग.छ.)

વાળા असमानतावाले, **अपि** હોવા છતાં પણ होने पर भी, **मनुष्याणाम्** મનુષ્યોને मनुष्योंके, **ये अन्ये** જે બીજા जो अन्य, **भावाः** ભાવો भाव, **सामान्याः** સામાન્ય છે सामान्य हैं, **तद्वैगुण्यात्** તેઓની વિગુણતાને લઈ उनके विगुण होनेके कारण, **समानकालाः** સમાન કાળ-વાળા एकही समयवाली, **समानलिङ्गाः च** અને સમાન લક્ષણવાળા और समान लक्षणोंवाली, **व्याधयः** વ્યાધિઓ व्याधियां, **अभिनिर्वर्तमानाः** ઉત્પન્ન થઈને उत्पन्न होती हुई, **जनपदम्** દેશનો जनपदका, **उद्ध्वंसयन्ति** વિનાશ કરે છે नाश करती हैं ।

6-(1). Unto him replied the worshipful Atreya, 'O, Agnivesa ! though a community may be heterogeneous in respect of the constitution etc., of its individual members, there are other common factors which being adversely affected, will cause simultaneons outbreak of diseases having similar symptoms. It is these that devastate whole populations.

**ते तु खल्विमे भावाः सामान्या जनपदेषु भवन्ति; तद्यथा—वायुः, उदकं, देशः, काल इति॥६॥**

**ते तु खलु** અને તે वे, **इमे** આ ये, **भावाः** ભાવો भाव, **जनपदेषु** દેશોમાં जनपदोंमें, **सामान्याः** સામાન્ય सामान्य, **भवन्ति** હોય છે होते हैं, **तत् यथा** જેમકે जैसे कि, **वायुः** વાયુ वायु, **उदकम्** જલ जल, **देशः** દેશ देश, **कालः इति** અને કાલ और काल ॥ ६ ॥

6. The factors that affect a people in common are— the winds, the waters, the country and the seasons.

अनारोग्यकरस्य वातस्य लक्षणम्—

**तत्र वातमेवंविधमनारोग्यकरं विद्यात्; तद्यथा—यथर्तुविषममतिस्तिमितमतिचलमतिपरुषमतिशीतमत्युष्णमतिरूक्षमत्यभिष्यन्दिनमतिभैरवारावमतिप्रतिहतपरस्परगतिमतिकुण्डलिनमसात्म्यगन्धबाष्पसिकतापांशुधूमोपहतमिति (१);**

**तत्र** તેમાં वहां, **एवंविधम्** આ પ્રકારના इस प्रकारके, **वातम्** વાયુને वायुको, **अनारोग्यकरम्** અનારોગ્ય કરનારો अस्वास्थ्यकारक, **विद्यात्** જાણવો जानना चाहिए. **तत् यथा** જેમકે जैसेकि. **यथर्तुविषमम्** ઋતુ-વિપરીત ऋतुके प्रतिकूल. **अतिस्तिमितम्** અતિ નિશ્ચલ अति निश्चल, **अतिचलम्** અતિ વેગવાન અતિ वेगवान, **अतिपरुषम्** અતિ કઠોર अति कठोर, **अतिशीतम्** અતિ શીતલ अति शीत, **अत्युष्णम्** અતિ ઉષ્ણ अति उष्ण, **अतिरूक्षम्** અતિ રૂક્ષ अति रूक्ष, **अत्यभिष्यन्दिनम्** અતિ અભિષ્યન્દી अति अभिष्यन्दी, **अतिभैरवारावम्** અતિ ભયંકર અવાજ કરનાર अति भयानक शब्दयुक्त, **अतिप्रतिहतपरस्परगतिम्** પરસ્પર અત્યંત અથડાતી ગતિવાળો परस्पर अत्यधिक टकराती गतिवाला, **अतिकुण्डलिनम्** અતિ કૂંડાળાં કરતો अति घुमेड़वाला, **असात्म्य-** અસાત્મ્ય असात्म्य, **गन्ध-** ગન્ધ गन्ध, **बाष्प-** બાફ बाष्प, **सिकता-** રેતી रेत, **पांशु-** ધૂળ धूलि, **धूम-** અને ધૂમાડાથી और धुंएंसे, **उपहतम् इति** દૂષિત થયેલો दूषित हुआ (१);

7-(1). Of these, the wind, if of the following description, is to be known as disease-inducing—viz., unseasonal, totally becalmed, violently blowing, exceedingly rough, intensely cold, intensely hot, excessively dry, excessively humid, fearfully clamorous, blowing from contrary directions and clashing with itself, extremely rotatory (whirlwind), and charged with unwholesome odors, moisture, sand, dust and smoke.

अनारोग्यकरस्य उदकस्य लक्षणम्—

**उदकं तु खल्वत्यर्थविकृतगन्धवर्णरसस्पर्शं**

७-(१). अतिचलम्–अतिबलम् (प.)

७-(१). अत्यभिष्यन्दिनम्–अनभिष्यन्दिनम् (प.)

**क्लेदबहुलमपक्रान्तजलचरविहङ्गमुपक्षीणजलेशयमप्रीतिकरमपगतगुणं विद्यात् (२);**

**अत्यर्थविकृत-** અતિશય વિકૃત अति दूषित, **गन्ध-** ગન્ધ गन्ध, **वर्ण-** વર્ણ वर्ण, **रस-** રસ रस, **स्पर्शम्** અને સ્પર્શવાળું एवं स्पर्शसेयुक्त, **क्लेदबहुलम्** બહુ ક્લેદવાળું अति क्लेदयुक्त, **अपक्रान्त- जलचर- विहङ्गम्** જેમાંથી જલચર પક્ષીઓ જતાં રહ્યાં હોય એવા जिसे छोड कर जलचर पक्षी चले गये हों ऐसे, **उपक्षीण-जलेशयम्** જેમાં જલચર પ્રાણીઓ ક્ષીણ થયેલ છે એવાં जिसमें जलचर प्राणियों क्षीण हुए हों ऐसे, **अप्रीतिकरम्** અને અપ્રીતિ કરનાર और अप्रीतिकारक, **खलु उदकम् तु** જળને તો जलको तो, **अपगत- गुणम्** ગુણ વગરનું नष्ट गुणोंवाला, **विद्यात्** જાણવું जानना चाहिए (२);

7-(2). The water of the following description is to be known as bereft of virtue: having an extremely aberrant smell, color, taste and touch; abounding with putrescent matter; deserted by aquatic birds; in which the aquatic creatures are atrophied and which is unpleasant.

अनारोग्यकरस्य देशस्य लक्षणम्—

**देशं पुनः प्रकृतिविकृतवर्णगन्धरसस्पर्शं क्लेदबहुलमुपसृष्टं सरीसृपव्यालमशकशलभमक्षिकामूषकोलूकश्माशानिकशकुनिजम्बूकादिभिस्तृणोलूपोपवनवन्तं प्रतानादिबहुलमपूर्ववदवपतितशुष्कनष्टशस्यं धूम्रपवनं प्रध्मातपतत्रिगणमुत्क्रुष्टश्वगणमुद्भ्रान्तव्यथितविविधमृगपक्षिसङ्घमुत्सृष्टनष्टधर्मसत्यलज्जाचारशीलगुणजनपदं शश्वत्क्षुभितोदीर्णसलिलाशयं प्रततोल्कापातनिर्घातभूमिकम्पमतिभयारावरूपं रूक्षताम्रारुणसिताभ्रजालसंवृतार्कचन्द्रतारकमभीक्ष्णं ससंभ्रमोद्वेगमिव सत्रासरुदितमिव सतमस्कमिव गुह्यकाचरितमिवाक्रन्दितशब्दबहुलं चाहितं विद्यात् (३);**

**प्रकृतिविकृत-** જેનાં વિકૃત થયાં છે સ્વાભાવિક जिसके विकृत हुए हैं स्वाभाविक, **वर्ण-** વર્ણ वर्ण, **गन्ध-** ગન્ધ गन्ध, **रस-** રસ रस, **स्पर्शम्** અને સ્પર્શ એવા और स्पर्श ऐसे, **क्लेदबहुलम्** બહુ ક્લેદયુક્ત बहुत क्लेदयुक्त, **सरीसृप-** સર્પ सांप, **व्याल-** હિંસક પશુઓ हिंसक पशु, **मशक-** મસલાં मशक, **शलभ-** તીડડાં पतंग, **मक्षिका** માખી मक्खी, **मूषक-** ઉંદર चूहा, **उलूक-** ઘુવડ उल्लू, **श्माशानिकशकुनि-** ગીધ गीध, **जम्बूकादिभिः** શિયાળ વગેરેથી गीदड़ आदिसे, **उपसृष्टम्** વ્યાપ્ત व्याप्त, **तृण-** ઘાસ घास, **उलप-** અને ઉલૂપ (ઘાસની એક જાત) નાં और फूससे, **उपवनवन्तम्** ઉપવનોવાળા भरे उपवनवाले, **प्रतानादि-** વિસ્તૃત વેલા વગેરે जहां विस्तृत लता आदि, **बहुलम्** બહુ હોય એવા बहुत हों ऐसे, **अपूर्ववत्** અપૂર્વ લાગતા जैसा पहिले कभी नहीं हुआ वैसे, **अवपतित-** પડી ગયેલાં गिरे हुए, **शुष्क-** સૂકાઈ ગયેલાં सुखे हुए, **नष्ट-** અને નષ્ટ થયેલાં और नष्ट हुए, **शस्यम्** અનાજવાળા शस्यवाले, **धूम्रपवनम्** ધૂમાડા જેવા પવનવાળા धूमयुक्त वायुवाले, **प्रध्मात-** નિરંતર અવાજ કરતા निरन्तर शब्द करते, **पतत्रिगणम्** પક્ષીઓના સમૂહવાળા पक्षियोंके समूहवाले, **उत्क्रुष्ट** ઊંચેથી રોતા जोरसे रोते, **श्वगणम्** કૂતરાઓના સમૂહવાળા कुत्तेके समूहवाले, **उद्भ्रान्त-** ગભરાઈ દોડતા ફરતા घबरा कर दोड़ते फिरते, **व्यथित-** અને દુ:ખી થતા और दुःखी होते, **विविध-** અનેક પ્રકારનાં नाना प्रकारके, **मृगपक्षि-** પશુ અને પક્ષીઓના पशु और पक्षियोंके, **सङ्घम्** સમૂહવાળા समूहवाले, **उत्सृष्ट-** તજેલ छोड़ दिये, **नष्ट-** અને નાશ પામેલ છે और नष्ट हो गये हैं, **धर्म-** ધર્મ धर्म, **सत्य-** સત્ય सत्य, **लज्जा-** લજ્જા लज्जा, **आचार-** આચાર आचार, **शील-** શીલ शील, **गुण-** અને ગુણો और गुण, **जनपदम्** જેમાં એવાં શહેરોવાળા जिनमें ऐसे शहरोंवाले, **शश्वत्** નિરંતર निरंतर, **क्षुभित-** ક્ષોભ પામેલાં चंचल, **उदीर्ण-** અને મોટાં મોજાંવાળાં एवं बड़े तरंगोवाले, **सलिलाशयम्** જલાશયો જ્યાં છે એવા जहां पर जलाशय हैं ऐसे, **प्रतत-** નિરંતર निरन्तर, **उल्कापात-** ઉલ્કાપાત उल्कापात, **निर्घात-** વજ્રપાત वज्रा-

७-(२). उपक्षीणजलेशयम्—उपक्षीणजलाशयम् (ध.प.)
७-(३). प्रकृतिविकृतवर्ण°—विकृतवर्ण° (क.ध.च.)
,, तृणोलूपोपवनवन्तं—तृणोलूपोपवनलताप्रतानादिबहुलम् (फ.)
,, प्रतानादि—लताप्रतानादि (घ. छ. ज. त.)
,, °लज्जाचारशीलगुणजनपदं—°लज्जागुणजनपदं (ख.)
,, शश्वत्क्षुभितोदीर्णसलिलाशयं—सस्वनक्षुभितोदीर्णसलिलाशयम् (ध.)

दिका गिरना, **भूमिकम्पम्** અને ધરતીકંપ જ્યાં થાય છે એવા एवं भूकम्प आदि जहां पर होते हों ऐसे, **अति-भय-** અતિ ભયજનક अति भयानक, **आरावरूपम्** શબ્દ અને દેખાવવાળા शब्द तथा दर्शनवाले, **रूक्ष-** રુક્ષ रूक्ष, **ताम्र-** તામ્રરંગી ताम्र, **अरुण-** લાલ रक्त, **सित-** અને ધોળાં श्वेत, **अभ्रजालसंवृत-** વાદળોથી ઢંકાયેલા बादलके समूहोंसे आच्छादित, **अर्क-** સૂર્ય सूर्य, **चन्द्र-** ચન્દ્ર चन्द्र, **तारकम्** અને તારાઓવાળા और तारेवाले, **अभीक्ष्णम्** વારંવાર बारबार, **ससंभ्रमोद्वेगम् इव** જાણે સંભ્રમ અને ઉદ્વેગ-વાળો હોય એવા जहां घबराहट और बेचैनी फैली हुई हो ऐसे, **सत्रासरुदितम् इव** જાણે ત્રાસ અને રુદન સહિત હોય એવા त्रास या रोदन युक्तसा हो ऐसे, **सतमस्कम् इव** જાણે અંધકારયુક્ત હોય એવા अन्धकारयुक्तसा हो ऐसे, **गुह्यकाचरितम् इव** જ્યાં જાણે યક્ષો ફરતા હોય એવા यक्ष आदि देवयोनियोंसे आक्रान्तसा हो ऐसे, **आक्रन्दित-** અને આક્રંદના और रोनेका, **शब्दबहुलम् च** બહુ અવાજવાળા शब्द जहां अधिक हो ऐसे, **देशम् पुनः** દેશને देशको, **अहितम्** અહિત अस्वास्थ्यकारक, **विद्यात्** જાણવો जानना चाहिए (२);

7-(3). The country of the following description is to be known as unwholesome; having color, odor, taste and touch that are unnatural; excessively damp; abounding in serpents, beasts of prey, mosquitoes, locusts, flies, mice, owls, birds and animals such as the jackal and abounding in woods of weeds and Ulupa grass; abounding in creepers where crops have either fallen, withered or been destroyed in an unprecedented manner; where the winds are smoky; where the sound of birds is unceasing; where the baying of dogs always assails the ears; where herds of animals and flocks of birds of various kinds are always in a state of alarm and pain; where amidst the people, morality, truth, modesty, custom, character and virtue have either declined or been given up; where the waters are always agitated and upheaving; which is frequently subjected to the incidence of meteorites, thunderbolts and earthquakes; where nature is full of menacing sounds and sights; where the sun, the moon and the stars are frequently covered by dry, coppery, ruddy and grey clouds and which lastly, is as if full of constant alarm and lamentation, crying, fright, and darkness as if visited by gnomes, and as if abounding in sounds of lamentation.

अनारोग्यकरस्य कालस्य लक्षणम्—

**कालं तु खलु यथर्तुलिङ्गाद्विपरीतलिङ्गमतिलिङ्गं हीनलिङ्गं चाहितं व्यवस्येत् (४);**

**यथर्तुलिङ्गात्** ઋતુનાં લક્ષણોથી ऋतुके लक्षणोंसे, **विपरीतलिङ्गम्** વિપરીત લક્ષણવાળા विपरीत लक्षणोंवाले, **हीनलिङ्गम् च** અને ઓછાં લક્ષણોવાળા और कम लक्षणों-वाले, **कालम्** કાળને कालको, **तु खलु** તો तो, **अहितम्** અહિત अस्वास्थ्यकारक, **व्यवस्येत्** માનવો जानना चाहिए (४);

7-(4). A season which is of the following description is to be known as unwholesome; evincing characteristics that are opposite to normal; or evincing its characteristics in an excessive or deficient degree.

**इमानेवंदोषयुक्तांश्चतुरो भावाञ्जनपदोद्ध्वंसकरान् वदन्ति कुशलाः; अतोऽन्यथाभूतांस्तु हितानाचक्षते ॥ ७ ॥**

**कुशलाः** કુશળ વૈદ્યો बुद्धिमान वैद्य, **एवं-दोष-युक्तान्** આ પ્રમાણેના દોષવાળા इन दोषोंसे युक्त, **इमान्** આ

इन, **चतुरः** ચારે चार, **भावान्** ભાવોને भावोंको, **जनपद-** દેશના जनपदके, **उद्ध्वंसकरान्** વિનાશક विनाशक, **वदन्ति** કહે છે कहते हैं, **अतः** અને એથી इनसे, **अन्यथा-भूतान्** ઉલટા ભાવોને विपरीत लक्षणवालोंको, **हितान्** હિતકારક हितकारक, **आचक्षते** કહે છે कहते हैं ॥ ७ ॥

7. The learned declare these very four factors when possessed of the morbidity described above, to be destructive of populations; when not so blemished, they are said to be wholesome.

तत्र सामान्यप्रतीकारः—

**विगुणेष्वपि खल्वेतेषु जनपदोद्ध्वंसकरेषु भावेषु भेषजेनोपपाद्यमानानामभयं भवति रोगेभ्य इति ॥ ८ ॥**

**जनपद**-દેશનો जनपदके, **उद्ध्वंसकरेषु** વિનાશ કરનાર विनाशक, **एतेषु** આ इन, **भावेषु** ભાવો भावोंके, **विगुणेषु** વિકૃતિ પામ્યા હોય ત્યારે विकृत होने पर, **अपि खलु** પણ भी, **भेषजेन** ઔષધોથી औषधोंसे, **उपपाद्यमानानाम्** ઉપચાર પામતા મનુષ્યોને चिकित्सित होते हुए मनुष्योंको, **रोगेभ्यः** રોગોથી रोगोंसे, **अभयम् भवति इति** ભય રહેતો નથી भय नहीं रहता ॥ ८ ॥

8. But even when these depopulating factors have turned inauspicious, there is no fear of diseases to those persons who are served with medicines that have been culled beforehand.

वैगुण्यमापन्नानां देशादीनामुत्तरोत्तरं गरीयस्त्वम्—

**भवन्ति चात्र**—

**वैगुण्यमुपपन्नानां देशकालानिलाम्भसाम् ।**
**गरीयस्त्वं विशेषेण हेतुमत् संप्रवक्ष्यते ॥ ९ ॥**

**अत्र च** આ વિષયમાં इस विषयमें, **भवन्ति** શ્લોક છે કે श्लोक हैं कि, **वैगुण्यम्** વિકૃતિ विकृत, **उपपन्नानाम्** પામેલા બને हुए, **देश-** દેશ देश, **काल-** કાલ काल, **अनिल-** વાયુ वायु, **अम्भसाम्** અને જલ એઓમાંથી और जल इनमेंसे, **विशेषेण** જેની જેવી વિશેષ રૂપે जिसकी जिससे विशेष रूपसे, **गरीयस्त्वम्** પ્રધાનતા હોય છે તે प्रधानता होती है वह, **हेतुमत्** કારણપૂર્વક कारणपूर्वक, **संप्रवक्ष्यते** કહેવામાં આવશે कहा जायगा ॥ ९ ॥

Here are verses again—

9. We shall now indicate, assigning reasons, the ascending scale of importance among the four factors of country, season, wind and water that have turned insalubrious.

**वाताज्जलं जलाद्देशं देशात् कालं स्वभावतः ।**
**विद्याद्दुष्परिहार्यत्वाद्गरीयस्तरमर्थवित् ॥ १० ॥**

**अर्थवित्** તત્ત્વજ્ઞ વૈદ્ય तत्त्ववेत्ता वैद्य, **स्वभावतः** સ્વભાવથીજ स्वभावसे, **दुष्परिहार्यत्वात्** છોડી નહિ શકાવાને લીધે दुष्परिहार्य होनेके कारण, **वातात्** વાયુથી वायुसे, **जलम्** જલને जलको, **जलात्** જલથી जलसे, **देशम्** દેશને देशको, **देशात्** અને દેશથી और देशसे, **कालम्** કાલને कालको, **गरीयस्तरम्** વધારે મોટો અધિક મુખ્ય, **विद्यात्** જાણવો समझे ॥ १० ॥

10. The man of understanding will know that the water is more important than wind, and country more important than the water, and season yet more important than country by virtue of their degree of indispensability.

**वाय्वादिषु यथोक्तानां दोषाणां तु विशेषवित् ।**
**प्रतीकारस्य सौकर्ये विद्याल्लाघवलक्षणम् ॥ ११ ॥**

**विशेषवित्** વિશેષ જાણનાર વૈદ્ય विशेषज्ञ वैद्य, **तु** તો तो, **वाय्वादिषु** વાયુ વગેરેમાં वायु आदिमें, **यथोक्तानाम्** કહ્યા પ્રમાણેના पूर्वोक्त, **दोषाणाम्** દોષોમાં

१०. विद्याद् दुष्परिहार्यत्वाद्गरीयस्तरमर्थवित्–विद्यादपरिहार्यत्वाद्गरीयः परमर्थवित् (च. द. ध.)

दोषोंके, प्रतीकारस्य પ્રતીકારની प्रतिकारकी, सौकर्ये સુગમતાથી सुगमतासे, लाघवलक्षणम् લઘુતાનું લક્ષણ लघुताका लक्षण, विद्यात् જાણવું जाने ॥११॥

11. The specialist should know that the above-mentioned aberrations of wind and the other factors are progressively easy of treatment in the order mentioned.

जनपदोद्ध्वंसे साधारणी चिकित्सा—

**चतुर्ष्वपि तु दुष्टेषु कालान्तेषु यदा नराः ।**
**भेषजेनोपपाद्यन्ते न भवन्त्यातुरास्तदा ॥ १२ ॥**

कालान्तेषु કાળસુધીના कालपर्यन्त, चतुर्षु अपि ચારે પણ चारोंके भी, दुष्टेषु દૂષિત થતાં दूषित होने पर, यदा જ્યારે जब, नराः પુરુષોનો मनुष्योंकी, भेषजेन ઔષધથી औषधसे, उपपाद्यन्ते ઉપચાર કરવામાં આવે છે चिकित्सा की जाती है, तदा ત્યારે तब, आतुराः न भवन्ति તેઓ રોગી રહેતા નથી वे रोगी नहीं रहते ॥ १२ ॥

12. Even if all the four factors including Time, become vitiated, as long as men are sustained by medicines, so long will they remain free of disease.

**येषां न मृत्युसामान्यं सामान्यं न च कर्मणाम् ।**
**कर्म पञ्चविधं तेषां भेषजं परमुच्यते ॥ १३ ॥**

येषाम् જેઓમાં जिनमें, मृत्युसामान्यम् મૃત્યુજનક દૈવની સમાનતા मृत्युजनक दैवकी समानता, न નથી હોતી नहीं होती, कर्मणाम् च અને મૃત્યુજનક કર્મોની और मृत्युजनक कर्मोंकी, सामान्यम् સમાનતા समानता, न નથી હોતી नहीं होती, तेषाम् તેઓને માટે उनके लिए, पञ्चविधम् પાંચ પ્રકારનું पांच प्रकारका, कर्म કર્મ कर्म, परम् પરમ श्रेष्ठ, भेषजम् ઔષધ औषध, उच्यते કહેવાય છે कहा जाता है ॥१३॥

13. In case of such members of the community as are neither destined to die at the same time, nor have the compulsion of common action, the quinary purification-procedure (consisting of emetics, purgatives, dry and unctuous enemata and errhines), is said to be the best of medicaments.

**रसायनानां विधिवच्चोपयोगः प्रशस्यते ।**
**शस्यते देहवृत्तिश्च भेषजैः पूर्वमुद्धृतैः ॥ १४ ॥**

रसायनानाम् રસાયનોનો रसायनोंका, विधिवत् વિધિપૂર્વક विधिपूर्वक, उपयोगः च ઉપયોગ પણ उपयोग भी, प्रशस्यते પ્રશસ્ત છે प्रशस्त है, पूर्वम् पूर्वे प्रथम, उद्धृतैः સંગ્રહેલાં संगृहीत, भेषजैः ઔષધોથી औषधोंसे, देहवृत्तिः च શરીરનું પરિપાલન પણ देहका पोषण करना भी, शस्यते પ્રશસ્ત છે श्रेष्ठ है ॥१४॥

14. For them, moreover, the rightful use of vitalising medications is recommended; the maintenance of the body by means of the medicinal herbs culled beforehand is also commended.

**सत्यं भूते दया दानं बलयो देवतार्चनम् ।**
**सद्वृत्तस्यानुवृत्तिश्च प्रशमो गुप्तिरात्मनः ॥ १५ ॥**
**हितं जनपदानां च शिवानामुपसेवनम् ।**
**सेवनं ब्रह्मचर्यस्य तथैव ब्रह्मचारिणाम् ॥ १६ ॥**
**संकथा धर्मशास्त्राणां महर्षीणां जितात्मनाम् ।**
**धार्मिकैः सात्त्विकैर्नित्यं सहास्या वृद्धसंमतैः ॥ १७ ॥**
**इत्येतद्भेषजं प्रोक्तमायुषः परिपालनम् ।**
**येषामनियतो मृत्युस्तस्मिन् काले सुदारुणे ॥ १८ ॥**

सत्यम् સત્ય सत्य, भूते दया પ્રાણીઓ પર દયા प्राणियों पर दया, दानम् દાન दान, बलयः બલિદાન बलि, देवतार्चनम् દેવતાઓનું પૂજન देवताओंकी पूजा, सद्- वृत्तस्य સદાચરણનું सद्वृत्तका, अनुवृत्तिः च પાલન अनुष्ठान, प्रशमः પ્રશમ विषयोंसे शान्ति, आत्मनः પોતાનું अपनी, गुप्तिः च રક્ષણ रक्षा, शिवानाम् કલ્યાણકારક कल्याणकारी, जनपदानाम् च દેશોનું देशोंका, हितम् હિતકારી हित-

१८. येषामनियतो—येषां न नियतो (ग.)

कर, उपसेवनम् સેવન सेवन, ब्रह्मचर्यस्य બ્રહ્મચર્યનું ब्रह्मचर्यका, तथा एव તેમજ एवं, ब्रह्मचारिणाम् બ્રહ્મચારીઓની ब्रह्मचारियोंका, सेवनम् સેવા सेवन, धर्मशास्त्राणाम् ધર્મશાસ્ત્રોની धर्मशास्त्रोंकी, जितात्मनाम् તથા જિતેન્દ્રિય जितेन्द्रिय, महर्षीणाम् મહર્ષિઓની महर्षियोंकी, संकथाः કથાઓ कथा करना, वृद्धसंमतैः વૃદ્ધ પુરુષોએ માન્ય કરેલ वृद्ध जनोंसे संमत, धार्मिकैः ધાર્મિક धार्मिक, सात्त्विकैः सह અને સાત્ત્વિક જનોની સાથે सात्त्विक पुरुषोंके साथ, नित्यम् નિત્ય नित्य, आस्या બેઠક वैठना, इति એ પ્રમાણે इस प्रकार, एतत् આ यह सब, तस्मिन् તે उस, सुदारुणे અતિ ભયંકર अति कठिन, काले સમયે समयमें, येषाम् જેઓનું जिनकी, मृत्युः મૃત્યુ मृत्यु, अनियतः અનિશ્ચિત છે अनिश्चित है, (तेषाम् તેઓના उनके), आयुषः આયુષ્યનું आयुकी, परिपालनम् પરિપાલન કરનાર रक्षा करनेवाली, भेषजम् આ ઔષધ भेषज, प्रोक्तम् કહ્યું છે कही गई है ॥१५-१८॥

15-18. Truthfulness, compassion for creatures, charity, sacrifices, worship of the gods, the observance of right conduct, tranquility, (prophylactic) protection of oneself and seeking one's own good, residing in a wholesome country, the keeping of continence and the company of the continent, consulting the scriptures and the great self-restrained sages, constant association with the righteous, the well-dispositioned and those who are approved of by the elders—all this with a view to preserving life, has been indicated as "medicine" to those who are not destined to die in that terrible time'.

वाय्वादीनां वैगुण्योत्पत्तौ हेतुः—

**इति श्रुत्वा जनपदोद्ध्वंसने कारणानि पुनरपि भगवन्तमात्रेयमग्निवेश उवाच—अथ खलु भगवन्! कुतोमूलमेषां वाय्वादीनां वैगुण्यमुत्पद्यते? येनोपपन्ना जनपदमुद्ध्वंसयन्तीति ॥ १९ ॥**

इति આ પ્રમાણે इस प्रकार, जनपद- દેશના देशके, उद्ध्वंसने વિનાશ વિષેનાં विनाशके, कारणानि કારણો कारणोंको, श्रुत्वा સાંભળીને सुन कर, अग्निवेशः અગ્નિવેશે अग्निवेशने, भगवन्तम् ભગવાન भगवान, आत्रेयम् આત્રેયને आत्रेयको, पुनः अपि ફરીને પણ फिर भी, उवाच કહ્યું कहा, अथ खलु भगवन् હે ભગવાન ! हे भगवन्, एषाम् એ इन, वाय्वादीनाम् વાયુ વગેરેનું वायुआदिकी, वैगुण्यम् વિકૃતપણું विकृतता, कुतोमूलम् કયા કારણે किस कारणसे, उत्पद्यते ઉત્પન્ન થાય છે उत्पन्न होती है, येन જેનાથી जिससे, उपपन्नाः વિકૃત થઈ તેઓ विकृत हो करके, जनपदम् દેશને जनपदका, उद्ध्वंसयन्ति इति વિનાશ કરે છે नाश करते हैं ॥ १९ ॥

19. On being thus apprised of the causes that bring about mass-destruction of communities, Agnivesa questioned the worshipful Atreya once again— "Now tell us, O, Lord! what makes the wind etc., to become inclement, through which inclemency they tend to destroy populations".

**तमुवाच भगवानात्रेयः—सर्वेषामप्यग्निवेश! वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्मः, तन्मूलं वाऽसत्कर्म पूर्वकृतं; तयोर्योनिः प्रज्ञापराध एव ।**

भगवान् ભગવાન भगवान, आत्रेयः આત્રેયે आत्रेयने, तम् તેને उसे, उवाच કહ્યું कहा, अग्निवेश! હે અગ્નિવેશ! हे अग्निवेश! सर्वेषाम् अपि સર્વેય सभी, वाय्वादीनाम् વાયુ વગેરેની वायु आदिकी, यत् જે जो, वैगुण्यम् વિગુણતા विगुणता, उत्पद्यते ઉત્પન્ન થાય છે उत्पन्न होती है, तस्य તેનું उसका, मूलम् મૂળ मूल, अधर्मः અધર્મ છે अधर्म है, तन्मूलम् वा અને તેનું મૂળ और उसका मूल, पूर्वकृतम् પૂર્વે કરેલું पूर्व जन्ममें

२०-(१). वाऽसत्कर्म—चासत्कर्म (च. ध.)

**किया हुआ, असत् कर्म** અસત્ કર્મ છે **असत् कर्म है, तयोः** તેઓની **उन दोनोंका, योनिः** ઉત્પત્તિનું કારણ **उत्पत्तिकारण, प्रज्ञापराधः एव** પ્રજ્ઞાપરાધ જ છે **प्रज्ञापराध ही है;**

20-(1). The worshipful Atreya answered him—'O Agnivesa! the deterioration affecting the wind, etc., has its origin in transgression, or, in the alternative, in unrighteous deeds performed in a former existence; of both, the source is volitional transgression alone.

**तद्यथा—यदा वै देशनगरनिगमजनपदप्रधाना धर्ममुत्क्रम्याधर्मेण प्रजां वर्तयन्ति, तदाश्रितोपाश्रिताः पौरजनपदा व्यवहारोपजीविनश्च तमधर्ममभिवर्धयन्ति, ततः सोऽधर्मः प्रसभं धर्ममन्तर्धत्ते, ततस्तेऽन्तर्हितधर्माणो देवताभिरपि त्यज्यन्ते;**

**तत् यथा** જેમકે **जैसेकि, यदा वै** જ્યારે **जब, देश-** દેશ **देश, नगर-** નગર **नगर, निगम-** પુરી **नगरी, जनपद-** અને શહેરના **और जनपदके, प्रधानाः** મુખ્ય પુરુષો **मुखिया, धर्मम्** ધર્મનું **धर्मका, उत्क्रम्य** ઉલ્લંઘન કરી **अतिक्रमण करके, अधर्मेण** અધર્મમાં **अधर्मपूर्वक, प्रजाम्** પ્રજામાં **प्रजामें, वर्तयन्ति** વર્તન ચલાવે છે **बरताव करते हैं, तदा** ત્યારે **तब, आश्रित-** તેઓના આશ્રિત **तब उनके आश्रित, उपाश्रिताः** અને ઉપાશ્રિત **और उपाश्रित, पौर- जनपदाः** નગર- ગ્રામવાસીઓ **नगर- ग्रामवासी लोग, व्यवहार-** તથા વેપાર પર **तथा व्यापार करके, उपजीविनः च** જીવનારા **जीवननिर्वाह करनेवाले, तम्** તે **उस, अधर्मम्** અધર્મને **अधर्मको, अभिवर्धयन्ति** વધારે છે **बढ़ाते हैं, ततः** તે કારણથી **इस लिए, सः** તે **वह, अधर्मः** અધર્મ **अधर्म, धर्मम्** ધર્મને **धर्मको, प्रसभम्** હઠથી **बलपूर्वक, अन्तर्धत्ते** અદૃશ્ય કરે છે **लुप्त कर देता है, ततः** ત્યારે **उसके बाद, अन्तर्हित-** લોપ પામેલા **लुप्त, धर्माणः** ધર્મવાળા **धर्मवाले, ते** તેઓ **वे, देवताभिः** દેવતાઓથી **देवताओंसे, अपि** પણ **भी, त्यज्यन्ते** તજાય છે **छोड़ दिये जाते हैं;**

20-(2). Thus when the ruling authorities of the country, cities, trade-guilds etc., govern the people irresponsibly by transgressing the law, then their subordinates and under-subordinates, the towns-folk and the village-folk, as well as those who earn a living by practising professions, tend to promote the growth of lawlessness. In the result, disorder, perforce swallows up all order. Thereafter these people, from whom the law has become a fugitive, are given up even by the gods.

**तेषां तथाऽन्तर्हितधर्मणामधर्मप्रधानानामपक्रान्तदेवतानामृतवो व्यापद्यन्ते; तेन नापो यथाकालं देवो वर्षति न वा वर्षति विकृतं वा वर्षति, वाता न सम्यगभिवान्ति, क्षितिर्व्यापद्यते, सलिलान्युपशुष्यन्ति, ओषधयः स्वभावं परिहायापद्यन्ते विकृतिं; तत उद्ध्वंसन्ते जनपदाः स्पृश्याभ्यवहार्यदोषात् ॥ २० ॥**

**तथा** તે પ્રમાણે **उसी प्रकार, अन्तर्हित-** લોપ પામેલ **लुप्त, धर्मणाम्** ધર્મવાળા **धर्मवाले, अधर्म-** અધર્મની **अधर्मकी, प्रधानानाम्** પ્રધાનતાવાળા **प्रधानतावाले, अपक्रान्त- देवतानाम्** દેવતાઓનો ત્યાગ કરનારા **देवताओंका त्याग करनेवाले, तेषाम्** એ દેશોની **उन देशोंकी, ऋतवः** ઋતુઓ **ऋतुएं, व्यापद्यन्ते** વિકૃત થાય છે **विकृत हो जाती हैं, तेन** તેથી **उससे, देवः** ઇન્દ્ર **इन्द्रदेव, यथाकालम्** યોગ્ય સમયે **कालानुसार, अपः न वर्षति** વરસાદ વરસાવતો નથી **जल नहीं बरसाते, न वा वर्षति** અથવા તદ્દન વરસતો નથી **अथवा सर्वथा नहीं**

२०-२). वर्तयन्ति—प्रवर्तयन्ति (च.)

,, पौरजनपदा—पौरजानपदा (ज.)

२०. तेन नापो—तेनापो (द.)

,, विकृतं वा वर्षति—विकृता वा वर्षति (ख.)

,, स्पृश्याभ्यवहार्यदोषात्—स्पर्शाभ्यवहार्यदोषात् (ध.)

बरसाते, विकृतम् वा के विकृत अथवा विकृत, वर्षति वृष्टि करे छे बरसाते हैं, वाताः पवन वायु, सम्यक् सारी रीते अच्छे प्रकारसे, न अभिवान्ति वाता नथी नहीं बहते, क्षितिः पृथ्वी भूमि, व्यापद्यते विकृत थई जाय छे विकृत हो जाती है, सलिलानि जल जल, उपशुष्यन्ति सुकाई जाय छे सूख जाते हैं, ओषधयः ओषधिओ ओषधियां, स्वभावम् पोतानो स्वभाव अपने स्वभावको, परिहाय छोडीने छोड़ कर, विकृतिम् विकृति विकृत, आपद्यन्ते पामे छे बन जाती हैं, ततः ते कारणथी उस लिए, स्पृश्य- स्पर्श करवाना पदार्थो स्पृश्य पदार्थों, अभ्यवहार्य- अने खावाना पदार्थोना और भोज्य पदार्थोंके, दोषात् दोषथी दोषसे, जनपदाः जनपदो जनपद, उद्ध्वंसन्ते नाश पामे छे नष्ट हो जाते हैं ॥२०॥

20. It is then that the seasons change adversely for these people, from whom the law has receded, whose actions have become unlawful and who are forsaken of the gods. On account of this, the heavens rain, not in season, or never at all, or abnormally; the winds do not blow rightly, the earth is afflicted, the waters dry up, the herbs lose their true properties and suffer deterioration. In consequence, the people perish as the result of infectious contact or ingestion.

शस्त्रादिप्रभवस्य जनपदोद्ध्वंसस्याधर्म एव हेतुः—

**तथा शस्त्रप्रभवस्यापि जनपदोद्ध्वंसस्याधर्म एव हेतुर्भवति। येऽतिप्रवृद्धलोभक्रोधमोहमानास्ते दुर्बलानवमत्यात्मस्वजनपरोपघाताय शस्त्रेण परस्परमभिक्रामन्ति, परान् वाऽभिक्रामन्ति, परैर्वाऽभिक्रम्यन्ते ॥२१॥**

तथा तेज प्रमाणे उसी प्रकार, शस्त्रप्रभवस्य शस्त्रथी थता शस्त्रसे उत्पन्न, जनपद- देशना जनपदके, उद्ध्वंसस्य विनाशनुं विनाशका, अपि पण भी, अधर्मः अधर्म अधर्म, एव ज ही, हेतुः कारण कारण, भवति छे है, ये जेओ जो, अतिप्रवृद्ध- अतिशय वधेल अति बढ़े हुए, लोभ- लोभ लोभ, क्रोध- क्रोध क्रोध, मोह- मोह मोह, मानाः अने अभिमानवाळा होय छे एवं अभिमानवाले हैं, ते तेओ वे, दुर्बलान् नबळाओनी निर्बल पुरुषोंका, अवमत्य अवज्ञा करी तिरस्कार करके, आत्म- पोतानां अपने, स्वजन स्वजनो स्वजन, पर- अने बीजाओना और दूसरोंके, उपघाताय नाश माटे नाशके लिए, शस्त्रेण शस्त्रथी शस्त्रद्वारा, परस्परम् परस्पर आपसमें, अभिक्रामन्ति आक्रमण करे छे आक्रमण करते हैं, परान् वा अथवा शत्रुओ उपर अथवा शत्रुओं पर, अभिक्रामन्ति आक्रमण करे छे चढाई करते हैं, परैः वा अथवा शत्रुओथी अथवा शत्रुओंसे, अभिक्रम्यन्ते आक्रमण पामे छे आक्रान्त होते हैं ॥ २१ ॥

21. In the same manner, it is unrighteousness alone that is the cause of the destruction of peoples by armaments. Those who are moved by extravagant greed, anger, folly, or arrogance despising the weak for the destruction of themselves, their people and the enemy, come into armed conflict either among themselves or with others or they themselves are attacked by others.

**रक्षोगणादिभिर्वा विविधैर्भूतसङ्घैस्तमधर्ममन्यद्वाऽप्यपचारान्तरमुपलभ्याभिहन्यन्ते ॥ २२ ॥**

---

२१. °प्रभवस्यापि जनपदोद्ध्वंसस्याधर्म एव हेतुर्भवति—°प्रभवस्यापि अधर्म एव हेतुर्भवति (ख.)

„ क्रोध—रोष (ब. न.)

„ °क्रोधमोहमानास्ते—°क्रोधमानास्ते (च.)

२२. अस्मादनन्तरम्—

निश्चितोपि हि मृत्युः स्याद्येषां भावी स नश्यति ।
वृत्तैरमीभिः पूर्वोक्तैरभाविनि तु का कथा ॥

इत्यधिकः पाठः (य. प.) पुस्तकयोः ।

**तम्** તે उस, **अधर्मम्** અધર્મ अधर्म, **अन्यत् वा** અથવા બીજો કોઈ या अन्य किसी, **अपचारान्तरम्** અપચાર अपचारको, **उपलभ्य** પ્રાપ્ત કરીને पाकर, **रक्षोगणादिभिः** રાક્ષસોના ગણ વગેરેથી राक्षस आदिसे, **विविधैः** અથવા વિવિધ अथवा नाना प्रकारके, **भूतसङ्घैः वा** ભૂતસમુદાયોથી भूतसमूहोंसे, **अभिहन्यन्ते** તેઓ હણાય છે वे मारे जाते हैं ॥ २२ ॥

22. Again it is on account of unrighteousness or some other transgression that the various kinds of diabolic powers, such as the order of the Rakshasas, assail and destroy a people.

अभिशापप्रभवस्याप्यधर्म एव हेतुः —

**तथाऽभिशापप्रभवस्याप्यधर्म एव हेतुर्भवति। ये लुप्तधर्माणो धर्मादपेतास्ते गुरुवृद्धसिद्धर्षिपूज्यानवमत्याहितान्याचरन्ति;**

**तथा** તે જ પ્રમાણે इस प्रकार, **अभिशाप** અભિશાપથી अभिशापसे, **प्रभवस्य** ઉત્પન્ન થયેલા દેશવિનાશનું उत्पन्न हुए देशके उद्ध्वंसका, **अपि** પણ भी, **अधर्मः** અધર્મ अधर्म, **एव** જ ही, **हेतुः** કારણ कारण, **भवति** હોય છે होता है, **ये** જેઓ जो, **लुप्तधर्माणः** લુપ્ત ધર્મવાળા लुप्त धर्मवाले, **धर्मात्** ધર્મથી धर्मसे, **अपेताः** હીન છે हट गये हैं, **ते** તેઓ वे, **गुरु-** ગુરુ गुरु, **वृद्ध-** વૃદ્ધ वृद्ध, **सिद्ध-** સિદ્ધ सिद्ध, **ऋषि-** ઋષિ ऋषि, **पूज्यान्** અને પૂજ્યોની और पूज्योंका, **अवमत्य** અવજ્ઞા કરીને तिरस्कार करके, **अहितानि** અહિત अहित कर्म, **आचरन्ति** આચરણ કરે છે करते हैं;

23-(1). Likewise the destruction that springs from a curse has unrighteousness for its motive-force. It is those who are guilty of dereliction of duty that by disrespecting the preceptors, elders, adepts, seers and the worshipful ones, act injuriously to themselves.

**ततस्ताः प्रजा गुर्वादिभिरभिशप्ता भस्मतामुपयान्ति प्रागेवानेकपुरुषकुलविनाशाय,**

**ततः** તેથી उससे, **अनेकपुरुष—** અનેક પુરુષોના अनेक पुरुषोंके, **कुल-** કુળના कुलके, **विनाशाय** નાશને માટેનો विनाशके लिए, **गुर्वादिभिः** ગુરુ વગેરેનો गुरु आदि द्वारा, **अभिशप्ताः** શાપ પામી शाप दिये जानेपर, **ताः** તે वे, **प्रजाः** પ્રજા लोग, **प्राक् एव** તરત शीघ्र ही, **भस्मताम्** ભસ્મ नष्ट, **उपयान्ति** થઈ જાય છે हो जाते हैं,

23-(2). Being cursed by these preceptors and others to perish in company with their kith and kin, they are soon reduced to ashes.

**नियतप्रत्ययोपलम्भादनियताश्चापरे ॥ २३ ॥**

**अपरे च** અને બીજા ચોક્કસ પુરુષો और दूसरे विशेष पुरुष, **नियत-प्रत्य**ેકને प्रत्येकको, **प्रत्यय—**શાપની शापकी, **उपलम्भात्** પ્રાપ્તિથી प्राप्तिसे, **अनियताः** છૂટા છૂટા पृथक् पृथक्, ( **भस्मताम्** નાશ नाशको, **उपयान्ति** પ્રાપ્ત થાય છે प्राप्त होते हैं) ॥ २३ ॥

23. It follows that others that survive must be of indeterminate life-span from the perception of the cause of such predetermination of the life-span.

कृतत्रेताद्वापरकलिषु क्रमेण धर्मस्य मनुष्याणामायुषश्च ह्रासः —

**प्रागपि चाधर्मादृते नाशुभोत्पत्तिरन्यतोऽभूत्।**

**प्राक् अपि** પૂર્વે પણ पहिले कालमें भी, **अधर्मात्** અધર્મ अधर्मके, **ऋते** સિવાય बिना, **अशुभोत्पत्तिः** અશુભની ઉત્પત્તિ अशुभकी उत्पत्ति, **अन्यतः** બીજા કોઈ કારણથી अन्य किसी कारणसे, **न अभूत्** થઈ ન હતી नहीं हुई;

24-(1). Even in ancient times, calamities never resulted from any factor other than unrighteousness.

२३. नियतप्रत्ययोपलम्भादनियताश्चापरे-नियतप्रत्ययोपलम्भान्नियताः अनियतप्रत्ययोपलम्भादनियताश्चापरे (च. ह्य. प.)

**आदिकाले ह्यदितिसुतसमौजसोऽतिविमलविपुलप्रभावाः प्रत्यक्षदेवदेवर्षिधर्मयज्ञविधिविधानाः शैलसारसंहतस्थिरशरीराः प्रसन्नवर्णेन्द्रियाः पवनसमबलजवपराक्रमाश्चारुस्फिचोऽभिरूपप्रमाणाकृतिप्रसादोपचयवन्तः सत्यार्जवानृशंस्यदानदमनियमतपउपवासब्रह्मचर्यव्रतपरा व्यपगतभयरागद्वेषमोहलोभक्रोधशोकमानरोगनिद्रातन्द्राश्रमक्लमालस्यपरिग्रहाश्च पुरुषा बभूवुरमितायुषः। तेषामुदारसत्त्वगुणकर्मणामचिन्त्यरसवीर्यविपाकप्रभावगुणसमुदितानि प्रादुर्बभूवुः शस्यानि सर्वगुणसमुदितत्वात् पृथिव्यादीनां कृतयुगस्यादौ।**

**हि** કારણ કે क्योंकि, **आदिकाले** આદિ કાળમાં आदिकालमें, **पुरुषाः** પુરુષો पुरुष, **अदितिसुत**- અદિતિના પુત્રો देवताओंके, **सम**- સમાન समान, **ओजसः** ઓજસવાળા ओजवाले, **अतिविमल**- અતિ નિમલ अति निर्मल, **विपुल**- તથા વિપુલ तथा विपुल, **प्रभावाः**- પ્રભાવવાળા प्रभाववाले, **प्रत्यक्ष**- પ્રત્યક્ષ છે प्रत्यक्ष हैं, **देव**- દેવ देव, **देवर्षि** દેવર્ષિ देवर्षि, **धर्म**- ધર્મ धर्म, **यज्ञ**-યજ્ઞ यज्ञ, **विधि**-વિધિ विधि, **विधानाः** અને અનુષ્ઠાન જેઓને એવા तथा अनुष्ठान जिन्हें ऐसे, **शैलसार**- પર્વત જેવા સારવાળા पर्वतके सदृश सारयुक्त, **संहत**- સારા બાંધાના सुघटित, **स्थिर**- સ્થિર स्थिर, **शरीराः**- શરીરવાળા शरीरवाले, **प्रसन्न**- નિર્મળ निर्मल, **वर्ण**- વર્ણ वर्ण, **इन्द्रियाः** અને ઇન્દ્રિયોવાળા और इन्द्रियोंसे युक्त, **पवनसम**- પવનના સમાન वायुके समान, **बल**- બલ बल, **जव**- વેગ वेग, **पराक्रमाः** અને પરાક્રમવાળા और पराक्रमवाले, **चारुस्फिचः** સુંદર નિતંબવાળા सुंदर नितम्बवाले, **अभिरूप**- મનોહર मनोहर, **प्रमाण**- પ્રમાણ प्रमाण, **आकृति**- આકૃતિ आकृति, **प्रसाद**- પ્રસાદ प्रसन्नता, **उपचयवन्तः** અને પુષ્ટિવાળા पुष्टिवाले, **सत्य**- સત્ય सत्य, **आर्जव**- સરલતા सरलता, **आनृशंस्य**- અક્રૂરતા अक्रूरता, **दान**- દાન दान, **दम**- દમ दम, **नियम**- નિયમ नियम, **तपः**- તપ तप, **उपवास**- ઉપવાસ उपवास, **ब्रह्मचर्य**- બ્રહ્મચર્ય ब्रह्मचर्य, **व्रत**- અને વ્રતમાં और व्रतमें, **पराः** પરાયણ परायण, **व्यपगत**- જતાં રહ્યાં છે दूर हुए हैं, **भय**- ભય भय, **राग**- રાગ राग, **द्वेष**- દ્વેષ द्वेष, **मोह**- મોહ मोह, **लोभ**- લોભ लोभ, **क्रोध**- ક્રોધ क्रोध, **शोक**- શોક शोक, **मान**- અભિમાન अभिमान, **रोग**- રોગ रोग, **निद्रा**-નિદ્રા निद्रा, **तन्द्रा**- તન્દ્રા तन्द्रा, **श्रम**- શ્રમ श्रम, **क्लम**- કલમ क्लम, **आलस्य**- આળસ आलस्य, **परिग्रहाः** અને મમતા જેઓનાં એવા और ममता जिनके ऐसे, **अमितायुषः च** અને અમાપ આયુષ્યવાળા और अपरिमित आयुवाले, **बभूवुः** હતા थे, **कृतयुगस्य** સત્ય યુગની सत्ययुगके, **आदौ** શરૂઆતમાં प्रारम्भमें, **पृथिव्यादीनाम्** પૃથ્વી વગેરેના पृथिवी आदिके, **सर्वगुण**- સર્વ ગુણોથી सब गुणोंसे, **समुदितत्वात्** યુક્ત હોવાથી युक्त होनेके कारण, **उदार**- ઉદાર उदार, **सत्त्व**- મન मन, **गुण**- ગુણ गुण, **कर्मणाम्** અને કર્મવાળા और कर्मवाले, **तेषाम्** તેઓને માટે उन पुरुषोंके लिए, **अचिन्त्य**- અચિન્ત્ય अचिन्त्य, **रस**- રસ रस, **वीर्य**- વીર્ય वीर्य, **विपाक**- વિપાક विपाक, **प्रभाव**- પ્રભાવ प्रभाव, **गुण**- અને ગુણથી और गुणोंसे, **समुदितानि** યુક્ત युक्त, **शस्यानि** અનાજો शस्य, **प्रादुर्बभूवुः** ઉત્પન્ન થયાં હતાં उत्पन्न हुए थे;

24-(2). In the primal age men were endowed with vitality equal to that of the sons of Aditi, exceedingly blameless and unhampered in their powers, had direct knowledge of the gods, the god-like sages, the divine law, the sacrifices, the sacrificial injunctions and the ritual, possessed bodies that were compact and firm like adamant, clear senses and complexions, speed, strength and prowess like those of the wind; they were callipygian and their stature, lineaments, carriage and build accorded with their forms; they were devoted to truth, rectitude,

२४. अतिविमलविपुल°—अतिवल° (फ.)
,, शैलसार°—शैलेन्द्रसार° (घ. ज.)
,, °समबलजव—°समजव (ख.)
,, तेषामुदारसत्त्वगुणकर्मणामचिन्त्यरस°—उदारसत्त्वगुणैः कर्मणां कर्मणां चाचिन्त्यत्वाद्रस° (च. थ.)

compassion, charity, self-restraint, moral discipline, spiritual endeavour, fasting, continence and religious vows; they were free from fear, desire, aversion, infatuation, greed, anger, despondency, pride, disease, sleep, indolence, fatigue, langour, sloth and the spirit of acquisition; and lastly they were endued with unlimited longevity. For the benefit of these people of heroic minds, qualities and deeds, the crops were replete with wonderful taste, potency, post-digestive effect, specific action and virtue; for the earth during the dawn of the golden age was charged to the full with all excellent qualities.

**भ्रश्यति तु कृतयुगे केषांचिदत्यादानात् सांपन्निकानां सत्त्वानां शरीरगौरवमासीत्, शरीरगौरवाच्छ्रमः, श्रमादालस्यम्, आलस्यात् संचयः, संचयात् परिग्रहः, परिग्रहाल्लोभः प्रादुरासीत् कृते।**

कृतयुगे तु સત્યયુગનો કેટલોક કાળ सत्ययुगके कुछ कालके, भ्रश्यति વ્યતીત થતાં व्यतीत होने पर, कृते સત્યયુગના બાકીના ભાગમાં सत्ययुगके शेषमें, केषांचित् કેટલાક कई, सांपन्निकानाम् સંપત્તિયુક્ત ऐश्वर्यशाली, सत्त्वानाम् પુરુષોને पुरुषोंके, अत्यादानात् અતિશય ભોજનથી अधिक भोजनसे, शरीरगौरवम् તેઓનાં શરીરનું ભારેપણું उनके शरीरमें भारीपन, आसीत् થઈ ગયું आ गया, शरीरगौरवात् શરીરના ભારેપણાથી शरीरके भारीपनसे, श्रमः શ્રમ श्रम, श्रमात् શ્રમથી श्रमसे, आलस्यम् આળસ आलस्य, आलस्यात् આળસથી आलस्यसे, संचयः સંચય संचय, संचयात् સંચયથી संचयसे, परिग्रहः મમતા ममता, परिग्रहात् અને મમતાથી और ममतासे, लोभः લોભ लोभ, प्रादुरासीत् ઉત્પન્ન થયો उत्पन्न हुआ;

24-(3). As the first age wore on, those who were better circumstanced became heavy of body by over-indulgence; this heaviness of body bred lassitude; lassitude gave rise to indolence; indolence created the need for accumulation of goods; accumulation necessitated acquisition; the spirit of acquisition engendered greed. All this came to pass long ago in the First Age.

**ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम्, अनृतवचनात् कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोकचिन्तोद्वेगादयः प्रवृत्ताः। ततस्त्रेतायां धर्मपादोऽन्तर्धानमगमत्। तस्यान्तर्धानात् युगवर्षप्रमाणस्य पादह्रासः, पृथिव्यादेश्च गुणपादप्रणाशोऽभूत्। तत्प्रणाशकृतश्च शस्यानां स्नेहवैमल्यरसवीर्यविपाकप्रभावगुणपादभ्रंशः। ततस्तानि प्रजाशरीराणि हीयमानगुणपादैराहारविहारैरयथापूर्वमुपष्टभ्यमानान्यग्निमारुतपरीतानि प्राग्व्याधिभिर्ज्वरादिभिराक्रान्तानि। अतः प्राणिनो ह्रासमवापुरायुषः क्रमश इति ॥ २४ ॥**

ततः ત્યાર પછી उसके पीछे, त्रेतायाम् ત્રેતાયુગમાં त्रेतामें, लोभात् લોભથી लोभसे, अभिद्रोहः અભિદ્રોહ अभिद्रोह, अभिद्रोहात् અભિદ્રોહથી अभिद्रोहसे, अनृतवचनम् અસત્ય વચન असत्य बोलना, अनृतवचनात् અને અસત્ય વચનથી और असत्य बोलनेसे, काम- કામ काम, क्रोध ક્રોધ क्रोध, मान- અભિમાન अभिमान, द्वेष- દ્વેષ द्वेष, पारुष्य- કઠોરતા कठोरता, अभिघात- પ્રહાર

२४. सांपन्निकानां सत्त्वानां शरीरगौरवम्—साम्पन्निकानां शरीरगौरवम् (ख.)
,, शरीरगौरवात्—सत्त्वानां गौरवात् (द.)
,, प्रादुरासीत् कृते—प्रादुरासीत् (क.)
,, ,, —प्रादुर्भूतः (घ. ज.)

२४. पृथिव्यादेश्च—पृथिव्यादीनां च (क. ख. घ.)
,, हीयमानगुणपादैः—हीयमानगुणपादैर्हीयमानगुणैश्च (छ.)
,, हीयमानगुणपादै....मारुतपरीतानि—हीयमानानि हीयमानगुणपादैर्हीयमानगुणैराहारविहारैरयथापूर्वमुपष्टभ्यमानान्यग्निमारुतपरीतानि (घ.)

चोट, भय- ભય भय, ताप- તાપ ताप, शोक- શોક शोक, चिन्ता- ચિન્તા चिन्ता, उद्वेगादयः તથા ઉદ્વેગ વગેરે एवं उद्वेग आदि, प्रवृत्ताः ચાલુ થયાં प्रवृत्त हुए, ततः ते કારણથી उस कारणसे, त्रेतायाम् त्रेता- માં त्रेतामें, धर्मपादः ધર્મનો એક પાદ धर्मका एक पाद, अन्तर्धानम् અદશ્ય लुप्त, अगमत् થયો हो गया, तस्य તેના उसके, अन्तर्धानात् અદશ્ય થવાથી लुप्त होनेसे, युगवर्ष- યુગના વર્ષના युगवर्षके, प्रमाणस्य પ્રમાણનો प्रमाणका, पादह्रासः ચતુર્થાંશ ઓછો થયો चतुर्थांश कम हो गया, पृथिव्यादेः च અને પૃથ્વી વગેરેના और पृथ्वी आदि भूतोंके, गुणपाद- ગુણનો ચતુર્થાંશ गुणोंका चतुर्थांश, प्रणाशः નાશ कम, अभूत् પામ્યો हो गया, तत्प्रणाशकृतः च અને તે નાશને લીધે और उस कमीके कारण, शस्यानाम् અનાજનાં शस्योंके, स्नेह- સ્નેહ स्नेह, वैमल्य- નિર્મળતા स्वच्छता, रस- રસ रस, वीर्य- વીર્ય वीर्य, विपाक- વિપાક विपाक, प्रभाव- પ્રભાવ प्रभाव, गुणपाद- અને ગુણનો ચોથો ભાગ और गुणका चतुर्थांश, भ्रंशः ઓછાં થયાં कम हो गया, ततः ત્યારપછી इसके पीछे, तानि તે वे, हीयमान- ઓછા થતા कम हुए, गुणपादैः ચતુર્થાંશ ગુણવાળા चतुर्थांश गुणवाले, आहारविहारैः આહારવિહારોથી आहारविहारों द्वारा, अयथापूर्वम् અગાઉની પેઠે ન पूर्वकी भांति न, उपष्टभ्य- मानानि રક્ષાતાં प्रतिपालित होते हुए, अग्नि- અગ્નિ अग्नि, मारुत- તથા પવનથી और वायुसे, परीतानि ઘેરાયેલાં आक्रान्त हुए, प्रजाशरीराणि પ્રજાનાં શરીરો પર प्रजाके शरीर, प्राक् પ્રથમ प्रथम, ज्वरादिभिः જ્વર વગેરે ज्वरादि, व्याधिभिः વ્યાધિઓએ रोगोंसे, आक्रान्तानि આક્રમણ કર્યું आक्रान्त हुए, अतः એથી इस लिए, प्राणिनः પ્રાણીઓ प्राणी, क्रमशः ક્રમે ક્રમે क्रमशः, आयुषः આયુષ્યનો आयुके, ह्रासम् હ્રાસ ह्रासको, अवापुः इति પામ્યાં प्राप्त हुए ॥ २४ ॥

24. Thereafter the bodies of human beings, failing to receive sustenance as before from the progressively deteriorating quality of food and exercise and afflicted by heat and wind, soon succumbed to the attacks of fevers and other diseases. Thus there was a gradual decline in the life-span enjoyed by successive generations. Thereafter in the second or Silver Age greed brought malice in its wake; malice led to falsehood; falsehood let loose lust, anger, vanity, hatred, cruelty, aggression, fear, affliction, grief, anxiety, distress and the like. Consequently in the second age, virtue found it self deprived of a quarter of its plenitude. From this quarterly loss in virtue, there followed a similar deterioration in the duration of the succeeding age and in the beneficient power of the Earth and the other elements. It is in consequence of this deterioration that there took place a corresponding deterioration in the sap, purity, taste, potency, post-digestive effects, specific action and quality of herbs.

भवतश्चात्र—

युगे युगे धर्मपादः क्रमेणानेन हीयते ।
गुणपादश्च भूतानामेवं लोकः प्रलीयते ॥ २५॥

अत्र च આ વિષયમાં इस विषयमें, भवतः બે શ્લોક છે કે दो श्लोक हैं कि, युगे युगे યુગે યુગે प्रत्येक युगमें, धर्मपादः ધર્મનો ચોથો ભાગ धर्मका चतुर्थांश, भूतानाम् અને પાંચ મહા ભૂતોના और पृथ्वी आदि भूतोंके, गुणपादः च ગુણનો પણ ચોથો ભાગ गुणोंकाभी चतुर्थांश, अनेन આ इस, क्रमेण ક્રમે क्रमसे, हीयते ઓછો થતો જાય છે कम हो जाता है, एवम् આવી રીતે इस प्रकार, लोकः લોકનો संसारका, प्रलीयते પ્રલય થાય છે प्रलय होता है ॥२५॥

Here are two verses again—

25. In this manner righteousness

dwindles in each succeeding age by one quarter and the proto-elements too suffer similar deterioration, till eventually the world comes to dissolution.

संवत्सरशते पूर्णे याति संवत्सरः क्षयम् ।
देहिनामायुषः काले यत्र यन्मानमिष्यते ॥२६॥

यत्र काले જે કાળે जिस समयमें, देहिनाम् દેહધારીઓનાં मनुष्योंकी, आयुषः यत् આયુષ્યનું જે आयुका जो, मानम् માપ मान, इष्यते માનવામાં આવે છે कहा है. (तत्र તેમાં उस कालमें,) संवत्सरशते સોમા ભાગનાં વર્ષ संवत्सरोंमें सौवें भागके, पूर्णे પૂરાં થતાં पूर्ण होने पर; संवत्सरः એક વર્ષ आयुमें एक वर्षकी, क्षयम् ઓછું कमी, याति થાય છે हो जाती है ॥ २६ ॥

26. When a hundredth part of the length of an age is past then the life-span of creatures gets less by one year. This is said with reference to the normal determination of life-span in a given age.

इति विकाराणां प्रागुत्पत्तिहेतुरुक्तो भवति ॥२७॥

इति આ પ્રમાણે इस प्रकारसे, विकाराणाम् વિકારોની रोगोंकी, प्रागुत्पत्ति- પૂર્વોત્પત્તિનું पूर्व उत्पत्ति-का, हेतुः કારણ हेतु, उक्तः भवति કહેવાયું છે कहा है ॥२७॥

27. Thus we have narrated the history of the primogenesis of diseases'.

एवंवादिनं भगवन्तमग्निवेश उवाच-किन्नु खलु भगवन्! नियतकालप्रमाणमायुः सर्वं न वेति॥२८॥

एवंवादिनम् આ પ્રમાણે કહેતા इस प्रकार कहते हुए, भगवन्तम् ભગવાન આત્રેયને भगवान आत्रेयको, अग्निवेशः અગ્નિવેશે अग्निवेशने, उवाच પૂછ્યું कहा, भगवन् હે ભગવાન! हे भगवन्!, किम् नु खलु શું क्या, सर्वम् સર્વ सब, आयुः આયુષ્ય आयु, नियत- निश्चित, कालप्रमाणम् કાલના પ્રમાણવાળું कालके प्रमाणवाली, न वा इति છે કે નહિ! है या नहीं!॥ २८ ॥

28. Unto the worshipful Atreya, discoursing thus, Agnivesa addressed the following question, 'What, indeed, is the true position as regards the period of life? Is it in every case predetermined, or is it not so?'

आयुषः नियतत्वे अनियतत्वे च युक्तिः—

तं भगवानुवाच—
इहाग्निवेश! भूतानामायुर्युक्तिमपेक्षते ।
दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम् ॥२९॥

तम् તેને उससे, भगवान् ભગવાને भगवानने, उवाच કહ્યું कहा, अग्निवेश! હે અગ્નિવેશ! हे अग्निवेश!, इह અહીં यहाँ, भूतानाम् પ્રાણીઓનું प्राणियोंकी, आयुः આયુષ્ય आयु, युक्तिम् દૈવ અને પુરુષાર્થના યોગની दैव और पुरुषार्थके योगकी, अपेक्षते અપેક્ષા રાખે છે अपेक्षा रखती है, हि કેમકે क्योंकि, अस्य એનું इसका, बलाबलम् બળાબળ बलाबल, दैवे દૈવ दैव, पुरुषकारे च અને પુરુષાર્થમાં और पुरुषार्थमें, स्थितम् રહેલું છે स्थित है ॥२९॥

Unto him the master replied—

29. 'This matter of the life-span of creatures depends on the consideration of the following factors— life, as regards both its strength and weakness, is determined by destiny as well as human effort.

दैवमात्मकृतं विद्यात् कर्म यत् पौर्वदैहिकम् ।
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥३०॥

पौर्वदैहिकम् પૂર્વ દેહમાં पूर्वदेहमें, आत्मकृतम् પોતે કરેલું स्वयं किया हुआ, यत् જે जो, कर्म કર્મ છે कर्म है, (तत् તેને उसको), दैवम् દૈવ दैव, विद्यात्

२८. भगवन्तम्—भगवन्तमात्रेयम् (छ.)

२९. तं भगवानुवाच—भगवानुवाच (ष.)

और दूसरा, यत् જે जो, इह આ જન્મમાં इस जन्ममें, क्रियते કરવામાં આવે છે किया जाता है, तत् તેને उसको, पुरुषकारः પુરુષાર્થ पुरुषार्थ, स्मृतः માન્યો છે माना है ॥ ३० ॥

30. 'Destiny' is to be known as one's own actions done in the former life, while by 'effort' is meant one's activity in this life.

**बलाबलविशेषोऽस्ति तयोरपि च कर्मणोः।**
**दृष्टं हि त्रिविधं कर्म हीनं मध्यममुत्तमम् ॥ ३१॥**

तयोः अपि च તે બેઉ उन दोनों, कर्मणोः કર્મોનાં कर्मोंके, बलाबल- બળાબળનો बलाबलका, विशेषः ભેદ भेद, अस्ति છે है, हि કેમકે क्योंकि, हीनम् હીન हीन, मध्यमम् મધ્યમ मध्यम, उत्तमम् અને ઉત્તમ और उत्तम, कर्म એમ કર્મ इस तरह कर्म, त्रिविधम् ત્રણ પ્રકારનું तीन प्रकारका, दृष्टम् દેખવામાં આવે છે देखा गया है ॥ ३१॥

31. Concerning these two kinds of activity, there are various degrees of strength and weakness; for we see that action is of three kinds—mild, moderate and strong.

**तयोरुदारयोर्युक्तिर्दीर्घस्य च सुखस्य च।**
**नियतस्यायुषो हेतुर्विपरीतस्य चेतरा ॥ ३२॥**
**मध्यमा मध्यमस्येष्टा कारणं शृणु चापरम्।**

उदारयोः ઉત્તમ उत्तम, तयोः તે બે પ્રકારનાં કર્મોનો उन दोनों प्रकारके कर्मोंका, युक्तिः યોગ योग, दीर्घस्य દીર્ઘ दीर्घ, सुखस्य સુખનું सुखका, नियतस्य च અને નિયત और नियत, आयुषः આયુનું आयुका, हेतुः કારણ છે कारण है, इतरा च અને એથી વિપરીત યોગ और इससे विपरीत योग, विपरीतस्य વિપરીત આયુનું કારણ છે विपरीत आयुका कारण है, मध्यमा મધ્યમ યોગને मध्य योगको, मध्यमस्य મધ્યમ આયુનું કારણ मध्यम आयुका कारण, इष्टा માનેલ છે माना है, अपरम् બીજું दूसरा, कारणम् કારણ પણ कारण भी, शृणु સાંભળો सुनो ॥ ३२½॥

32-32½. When both types of action (destiny and effort) are of the best character, then they make for long, happy and certain life; the reverse is the case when both types of action are of the reverse character; when they are moderate, then the life too is moderate. Now listen to a further consideration.

**दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ॥ ३३॥**
**दैवेन चेतरत् कर्म विशिष्टेनोपहन्यते।**
**दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः ॥ ३४॥**

पुरुषकारेण પ્રબળ પુરુષાર્થથી प्रबल पुरुषार्थसे, दुर्बलम् દુર્બળ दुर्बल, दैवम् દૈવ दैव, उपहन्यते પરાભવ પામે છે पराभूत होता है, विशिष्टेन दैवेन च અને પ્રબળ દૈવથી और प्रबल दैवसे, इतरत् कर्म દુર્બળ પુરુષાર્થ दुर्बल पुरुषार्थ, उपहन्यते પરાભવ પામે છે पराभूत होता है, यत् જે जिसको, दृष्ट्वा જોઈને देख कर, एके કેટલાક कुछ लोग, आयुषः આયુનું आयुका, मानम् પ્રમાણ प्रमाण, नियतम् દૈવથી નિયત दैवसे नियत, मन्यन्ते માને છે मानते हैं ॥ ३३-३४ ॥

33-34. Thus if destiny is weak, it admits of being overcome by effort; conversely, destiny that is powerful will render weak effort nugatory. Some people, observing only this last, rush to the conclusion that all life is predetermined.

**कर्म किंचित् क्वचित् काले विपाके नियतं महत्।**
**किंचित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते ॥ ३५॥**

किंचित् કોઈક कोई, महत् પ્રબળ प्रबल, कर्म કર્મ कर्म, क्वचित् काले કોઈ સમયે किसी समयमें,

**विपाके** વિપાકમાં विपाकमें, **नियतम्** નિશ્ચિત હોય છે निश्चित होता है, **अकाल- नियतम्** અનિશ્ચિત વિપાકકાળવાળુ અનિશ્ચિત विपाककालवाला, **किंचित्** કોઈ કર્મ कोई कर्म, **तु** તો तो, **प्रत्ययैः** કારણોથી कारणोंसे, **प्रतिबोध्यते** ફલ આપવામાં તત્પર કરવામાં આવે છે फलोन्मुख किया जाता है ॥ ३५ ॥

35. There are some powerful actions whose fructification takes place at a predetermined time; but there is another kind of action, whose fructification is not predetermined and lies latent till roused to activity by suitable conditions.

आयुषोऽनियतत्वसाधनम्—

**तस्मादुभयदृष्टत्वादेकान्तग्रहणमसाधु। निदर्शनमपि चात्रोदाहरिष्यामः—यदि हि नियतकालप्रमाणमायुः सर्वं स्यात्, तदाऽऽयुष्कामाणां न मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनाद्याः क्रिया इष्टयश्च प्रयुज्येरन्; नोद्भ्रान्तचण्डचपलगोगजोष्ट्रखरतुरगमहिषादयः पवनादयश्च दुष्टाः परिहार्याः स्युः, न प्रपातगिरिविषमदुर्गाम्बुवेगाः, तथा न प्रमत्तोन्मत्तोद्भ्रान्तचण्डचपलमोहलोभाकुलमतयः, नारयः, न प्रवृद्धोऽग्निः, न च विविधविषाश्रयाः सरीसृपोरगादयः, न साहसं, नादेशकालचर्या, न नरेन्द्रप्रकोप इति; एवमादयो हि भावा नाभावकराः स्युः, आयुषः सर्वस्य नियतकालप्रमाणत्वात्। न चानभ्यस्ताकालमरणभयनिवारकाणामकालमरणभयमागच्छेत् प्राणिनां, व्यर्थाश्चारम्भकथाप्रयोगबुद्धयः स्युर्महर्षीणां रसायनाधिकारे, नापीन्द्रो नियतायुषं शत्रुं वज्रेणाभिहन्यात्, नाश्विनावार्तं भेषजेनोपपादयेतां, न महर्षयो यथेष्टमायुस्तपसा प्राप्नुयुः, न च विदितवेदितव्या महर्षयः ससुरेशाः सम्यक् पश्येयुरुपदिशेयुराचरेयुर्वा।**

३६. भेषजेनोपपादयेतां–भेषजेनोपचरेताम् (च. थ.)
,, महर्षयः ससुरेशाः सम्यक्–ससुरेशा रसायनादीनि सम्यक (थ. त.)

**तस्मात्** તેથી इस लिए, **उभयदृष्टत्वात्** બન્ને પ્રકારનાં દષ્ટાંત દેખાતાં હોવાથી दोनों प्रकारके दृष्टान्त मिलनेसे, **एकान्त-** એક પક્ષનો જ एक पक्षका ही, **ग्रहणम्** સ્વીકાર કરવો ग्रहण करना, **असाधु** ઠીક નથી ठीक नहीं, **अत्र च** આ વિષયમાં इस विषयमें, **निदर्शनम्** ઉદાહરણ दृष्टान्त, **अपि** પણ भी, **उदाहरिष्यामः** આપીએ છીએ देते हैं, **यदि** જો यदि, **सर्वम्** સર્વ सब, **आयुः** આયુષ્ય आयु, **नियत-** નિશ્ચિત निश्चित, **कालप्रमाणम्** કાલના પ્રમાણવાળું कालके प्रमाणवाली, **हि स्यात्** હોય हो, **तदा** તો तो, **आयुष्कामाणाम्** આયુષ્યની કામનાવાળાઓ માટે आयुकी कामना रखनेवालोंके लिए, **मन्त्र-** મન્ત્ર मन्त्र, **ओषधि-** ઔષધિ ओषधि, **मणि-** મણિ मणि, **मङ्गल-** મંગળ मंगल, **बलि-** બલિદાન बलिदान, **उपहार-** ઉપહાર उपहार, **होम-** હોમ होम, **नियम-** નિયમ नियम, **प्रायश्चित्त-** પ્રાયશ્ચિત્ત प्रायश्चित्त, **उपवास-** ઉપવાસ उपवास, **स्वस्त्ययन-** સ્વસ્તિવાચન स्वस्तिवाचन, **प्रणिपात-** પ્રણામ प्रणाम, **गमनाद्याः** તીર્થગમન વગેરે तीर्थगमन आदि, **क्रियाः** ક્રિયાઓ क्रियायें, **इष्टयः च** અને ઇષ્ટિઓ और इष्टियां **न प्रयुज्येरन्** ન કરવામાં આવે न की जायें, **उद्भ्रान्त-** ગભરાટથી આમ તેમ દોડતા घबराये हुए, **चण्ड-** ચંડ चण्ड, **चपल-** અને ચપલ चपल, **गो-** ગાય गाय, **गज-** હાથી हाथी, **उष्ट्र-** ઊંટ ऊंट, **खर-** ગધેડાં गधे, **तुरग-** ઘોડા घोडा, **महिषादयः** ભેંસ વગેરે भैंस आदि, **दुष्टाः** તથા દુષ્ટ दूषित, **पवनादयः च** પવન વગેરે वायु आदिसे, **न परिहार्याः स्युः** તજવા લાયક ન રહે नहीं बचा जाय, **प्रपात-** જલધોધ जलप्रपात, **गिरि-** પર્વતના पर्वतके, **विषम-** વિષમ विषम, **दुर्ग-** દુર્ગમ માર્ગો दुर्गम मार्गों, **अम्बु-वेगाः** અને જલના વેગ और जलके वेगों, **न** ન नहीं, **तथा** તથા तथा, **प्रमत्त-** પ્રમાદયુક્ત प्रमादयुक्त, **उन्मत्त-** ઉન્માદયુક્ત उन्मत्त, **उद्भ्रान्त-** અસ્થિર उद्भ्रान्त, **चण्ड-** ચંડ चण्ड, **चपल-** ચપલ अस्थिर, **मोह-** મોહ मोह, **लोभ-** તથા લોભથી तथा लोभसे, **आकुलमतयः** આકુળ મતિવાળા आकुल बुद्धिवाले, **न** ન नहीं, **अरयः** શત્રુઓ शत्रु, **न** ન नहीं, **प्रवृद्धः** વધી ગયેલો बढ़ी हुई, **अग्निः** અગ્નિ अग्नि, **न** ન नहीं, **विविध-** વિવિધ પ્રકારનાં नाना प्रकारके, **विष-** ઝેરના विषोंके, **आश्रयाः** આશ્રયરૂપ आश्रयरूप, **सरीसृप-** વક્ર ગતિવાળા रींगनेवाले, **उरगादयः** સર્પ વગેરે सांप आदि, **च न** ન नहीं, **साहसम्** સાહસ

साहस, न ન नहीं, **अदेशकालचर्या** અયોગ્ય દેશ અને કાલમાં આચરણ અयोग्य देश तथा कालमें आचरण, न ન नहीं, **नरेन्द्रप्रकोपः न इति** તેમજ રાજાનો ગુસ્સો તજવા લાયક ન રહે एवं राजाका कोप त्याज्य न होगा, **एवम्-** એ इस, **आद्यः** પ્રકારના प्रकारके, **भावाः हि** ભાવો भाव, **सर्वस्य** સર્વનું सबकी, **आयुषः** આયુષ્ય आयुके, **नियत-** નિશ્ચિત निश्चित, **कालप्रमाणत्वात्** કાળના પ્રમાણવાળું હોવાથી कालप्रमाणवाली होनेसे, **अभाव-कराः** મૃત્યુ કરનાર मृत्युकारक, **न स्युः** બને નહિ न हों, **अनभ्यस्त- अकालमरण- भय- निवारकाणाम्** જેઓએ અકાલ મરણના ભયનું નિવારણ કરનારા ઉપાયોનો અભ્યાસ કર્યો ન હોય એવાં जिन्होंने अकाल मरणके भयके निवारण करनेवाले उपायोंका अभ्यास नहीं किया हो उन, **प्राणिनाम् च** પ્રાણીઓને प्राणियोंका, **अकाल-मरण-** અકાળ મરણનો अकाल मरणका, **भयम्** ભય भय, **न आगच्छेत्** આવે નહિ न आये, **रसायन-** તથા રસાયન तथा रसायन, **अधिकारे** અધિકારમાં अधिकारमें, **महर्षीणाम्** મહર્ષિઓનાં महर्षियोंके, **आरम्भ-** કર્મ कर्म, **कथा-** ઉપદેશ उपदेश, **प्रयोग-** પ્રયોગ प्रयोग, **बुद्धयः** અને જ્ઞાન और बुद्धि, **व्यर्थाः** વ્યર્થ व्यर्थ, **स्युः** બને हो जाये, **इन्द्रः अपि** ઇન્દ્ર પણ इन्द्र भी, **नियतायुषम्** નિશ્ચિત આયુષ્યવાળા निश्चित आयुवाले, **शत्रुम्** શત્રુને शत्रुको, **वज्रेण** વજ્રથી वज्रसे, **न अभिहन्यात्** મારી ન શકે मार नहीं सके, **अश्विनौ** અશ્વિનીકુમારો પણ अश्विनीकुमार भी, **आर्तम्** રોગીનો रोगीकी, **भेषजेन** ઔષધોપચાર औषधसे चिकित्सा, **न** ન न, **उपपादयेताम्** કરી શકે कर सकें, **महर्षयः** મહર્ષિઓ महर्षि, **यथेष्टम्** ઇચ્છાનુસાર यथेच्छ, **आयुः** આયુષ્ય आयु, **तपसा** તપથી तपसे, **न प्राप्नुयुः** ન મેળવે प्राप्त न करें, **विदित-** જાણ્યું છે जान लिया है, **वेदितव्याः च** સર્વ જાણવા યોગ્ય જેઓએ એવા सब ज्ञेय जिन्होंने ऐसे, **ससुरेशाः** ઇન્દ્રસહિત इन्द्रके समेत, **महर्षयः** મહર્ષિઓ महर्षियों, **न सम्यक् पश्येयुः** ખરી રીતે જુએ નહિ भली प्रकारसे न देखे, **उपदिशेयुः** ઉપદેશ કરે નહિ न उपदेश करें, **आचरेयुः वा** કે આચરણ કરે નહિ और न आचरण करें;

**36-(1). Since, thus, we see that life is of both kinds (predetermined** and unpredetermined ) it is not right to cleave to either side exclusively. On this point, we wish to advance the following illustrations. If the life-period in every case were predetermined, then none would be found to seek longevity by means of such acts as incantations, medicinal herbs, magical stones, propitiations, sacrifices, offerings, oblations, regimen, penances, fastings, auspicious rites, genuflexions, pilgrimages, and sacrificial rites; nor would there be any need to avoid rogue, fierce and capricious bulls, elephants, camels, donkeys, horses, buffaloes and the like, and abnoxious winds; as also cataracts, and rapid precipitous and unfordable currents of water in the mountains, men that are drunk, insane, vagrant, fierce, capricious and of excited minds owing to infatuation and greed, enemies, raging conflagrations, various kinds of venomous reptiles and serpents, rash acts, conduct that is out of season and out of place, and the displeasure of the king. For these and such like would hold no threat of destruction, all life being of predetermined duration. Again fear of premature death would not assail those who have not made use of prophylactic measures which ward off the threat of premature death. The introductory claims, the stories, the recipes and the theories as propounded by the sages, concerning the subject of

145. These six groups of drugs, which have been classified according to their difference in taste, are useful in all the preparations meant for corrective enema.

**सर्वशो हि प्रणिहिताः सर्वरोगेषु जानता ।**
**सर्वान्रोगान्नियच्छन्ति येभ्य आस्थापनं हितम् १४६**

हि કેમકે क्योंकि, **येभ्यः** જેઓને जिनको, **आस्थापनम्** આસ્થાપન आस्थापन, **हितम्** હિતકર છે हितकर है, **सर्वरोगेषु** તે સર્વ રોગમાં उन सब रोगोंमें, **जानता** જાણકાર વૈદ્યે अभिज्ञ वैद्यसे, **सर्वशः** સર્વ રીતે सब तरहसे, **प्रणिहिताः** પ્રયોજેલા તેઓ प्रयुक्त किये गये वे, **सर्वान्** સર્વ सब, **रोगान्** રોગોનો रोगोंको, **नियच्छन्ति** નાશ કરે છે नष्ट करते हैं ॥ १४६ ॥

146. The corrective enema prepared of all these groups of drugs and administered by an expert cures all the diseases wherein it is indicated.

**येषां येषां प्रशान्त्यर्थं ये ये न परिकीर्तिताः ।**
**द्रव्यवर्गा विकाराणां तेषां ते परिकोपकाः ॥१४७॥**

**येषाम् येषाम्** જે જે जिन जिन, **विकाराणाम्** વિકારોની रोगोंकी, **प्रशान्त्यर्थम्** શાન્તિ માટે शान्तिके लिए, **ये ये** જે જે जो जो, **द्रव्यवर्गाः** દ્રવ્યવર્ગો द्रव्योंके वर्ग, **न** નથી नहीं, **परिकीर्तिताः** કહ્યા कहे गये, **तेषाम्** તે તે રોગોના उन उन रोगोंके, **ते** તેઓ वे, **परिकोपकाः** પ્રકોપ કરનારા છે प्रकोपक हैं ॥ १४७ ॥

147. Those drugs which have not been indicated in any particular type of disorders, are to be inferred as being provocative of them.

**इत्येते षडास्थापनस्कन्धा रसतोऽनुविभज्य व्याख्याताः ॥ १४८ ॥**

**इति** આ પ્રમાણે इस प्रकार, **एते** આ યે, **षट्** છ छः, **आस्थापन-** આસ્થાપન आस्थापन, **स्कन्धाः** સ્કન્ધ स्कन्ध, **रसतः** રસ પ્રમાણે रसद्वारा, **अनुविभज्य** વિભાગ કરીને विभाग करके, **व्याख्याताः** કહેવામાં આવ્યા છે कह दिये गये हैं ॥ १४८ ॥

148. Thus the six groups of drugs used in corrective enema, classified according to their taste, have been expounded.

ऊहापोहसमर्थेन भिषजाऽत्रोक्तस्कन्धेष्वपकर्षप्रक्षेपावपि कार्यौ—

**तेभ्यो भिषग्बुद्धिमान् परिसंख्यातमपि यद्यद् द्रव्यमयौगिकं मन्येत, तत्तदपकर्षयेत्; यद्यच्चानुक्तमपि यौगिकं मन्येत, तत्तद्विदध्यात्; वर्गमपि वर्गेणोपसंसृजेदेकमेकेनानेकेन वा युक्तिं प्रमाणीकृत्य ।**

**बुद्धिमान्** બુદ્ધિમાન बुद्धिमान, **भिषक्** વૈદ્ય वैद्य, **परिसंख्यातम्** ગણાવેલું गिने हुए, **अपि** પણ भी, **यत् यत्** જે જે जिस जिस, **द्रव्यम्** દ્રવ્ય द्रव्यको, **अयौगिकम्** યૌગિક ન यौगिक नहीं, **मन्येत** માને समझे, **तत् तत्** તે તે उस उसको, **तेभ्यः** તેમાંથી उनमेंसे, **अपकर्षयेत्** કાઢી નાખવું निकाल देवे, **यत् यत्** અને જે જે और जिस जिस, **अनुक्तम्** ન કહેલું न कहे हुए, **अपि** પણ भी, **यौगिकम्** યૌગિક यौगिक, **मन्येत** માને समझे, **तत् तत्** તે તે उस उसकी, **विदध्यात्** યોજવું જોઈએ योजना करनी चाहिए, **युक्तिम्** યુક્તિના युक्तिके, **प्रमाणीकृत्य** આધાર પર आधार पर, **एकम्** એક एक, **वर्गम्** વર્ગને वर्गको, **अपि** પણ भी, **एकेन** બીજા એક વર્ગની સાથે दूसरे एक वर्गके साथ, **अनेकेन वा** અથવા બીજા અનેક अथवा दूसरे अनेक, **वर्गेण** વર્ગની સાથે वर्गके साथ, **उपसंसृजेत्** ભેળવવો मिला दे;

149 (1). The intelligent physician may discard, among these group of drugs, whichever he considers to be unfit for use in a given circumstance and add whatever drug he considers useful

१४६. सर्वशः—सर्वतः (ग.)
१४७. परिकोपकाः—परिकोपनाः (ग.)
१४९. तत्तद्विदध्यात्—तत्तद्दद्यात् (ग.)

though it may not have been mentioned as such. Being guided by reason, he may mix drugs of one group with those of another or many others.

**प्रचरणमिव भिक्षुकस्य वीजमिव कर्षकस्य सूत्रं बुद्धिमतामल्पमप्यनल्पज्ञानाय भवति; तस्माद्बुद्धिमतामूहापोहवितर्काः, मन्दबुद्धेस्तु यथोक्तानुगमनमेव श्रेयः।**

**प्रचरणम् भिक्षुकस्य इव** જેમ ભિક્ષા માટે ભમતું ભિક્ષુકના जैसे भिक्षार्थ अटन भिक्षुकके, **वीजम् कर्षकस्य इव** તથા જેમ બીજ ખેડુતના ઘણા જ્ઞાન માટે થાય છે और जैसे बीज किसानके बहुत ज्ञानके लिए होते हैं, **बुद्धिमताम्** તેમ બુદ્ધિમાનને वैसे बुद्धिमानके लिए, **अल्पम्** નાનું छोटा, **अपि** પણ भी, **सूत्रम्** સૂત્ર सूत्र, **अनल्प-** ઘણા बहुत, **ज्ञानाय** જ્ઞાનને માટે ज्ञानके लिए, **भवति** થાય છે होता है, **तस्मात्** તેથી इस लिए, **बुद्धिमताम्** બુદ્ધિમાનો માટે बुद्धिमानोंके लिए, **ऊहापोह-** ઊહાપોહ ऊहापोह, **वितर्काः** અને વિતર્ક છે और वितर्क हैं, **मन्दबुद्धेः** મન્દબુદ્ધિવાળાઓને मन्दबुद्धिवालोंके लिए, **तु** તો तो, **यथोक्त-** કહ્યા પ્રમાણે कथनानुसार, **अनुगमनम्** ચાલવું चलना, **एव** જ ही, **श्रेयः** શ્રેયસ્કર છે श्रेयस्कर है;

149-(2). Like the alms collected by the mendicant and the seeds in the hands of the sower, these aphorism, though small in measure, yields to the intelligent physician, abundant result i. e. complete knowledge of the subject. It is thus a guide to the intelligent physician in the use of his powers of imagination and logic. But, for the dullard, it is good to faithfully follow the method laid down.

**यथोक्तं हि मार्गमनुगच्छन् भिषक् संसाधयति कार्यमनतिमहत्त्वाद्वा विनिपातयत्यनतिह्रस्वत्वाकुदाहरणस्येति ॥ १४९ ॥**

**हि** કારણકે क्योंकि, **यथोक्तम्** યથોક્ત यथोक्त, **मार्गम्** માર્ગને मार्गको, **अनुगच्छन्** અનુસરતો अनुसरता हुआ, **भिषक्** મંદ બુદ્ધિવાળો વૈદ્ય मन्द बुद्धिवाला वैद्य, **कार्यम्** કાર્યને कार्यको, **संसाधयति** સાધે છે सिद्ध करता है, **उदाहरणस्य** ઉદાહરણના उदाहरणके, **अनतिह्रस्वत्वात्** વિસ્તૃતપણાને લીધે विस्तृत होनेके कारण, **अनतिमहत्त्वात् वा** અથવા ઉદાહરણના અતિ સંક્ષિપ્તપણાને લીધે अथवा उदाहरणके अति संक्षिप्त होनेसे, **विनिपातयति** કાર્યને બગાડે છે कार्यकी व्यापत्ति करता है ॥ १४९ ॥

149. Following the prescribed way, such a physician accomplishes his task; if the illustration be too elaborate or too succinct he will fail in his task.

अनुवासनद्रव्याणि—

**अतः परमनुवासनद्रव्याण्यनुव्याख्यास्यामः। अनुवासनं तु स्नेह एव। स्नेहस्तु द्विविधः—स्थावरात्मकः, जङ्गमात्मकश्च। तत्र स्थावरात्मकः स्नेहस्तैलमतैलं च। तद् द्वयं तैलमेव कृत्वोपदेक्ष्यामः, सर्वतस्तैलप्राधान्यात्। जङ्गमात्मकस्तु वसा, मज्जा, सर्पिरिति।**

**अतः** અહીંથી यहांसे, **परम्** આગળ आगे, **अनुवासन-** અનુવાસન अनुवासन, **द्रव्याणि** દ્રવ્યોનું द्रव्योंका, **अनुव्याख्यास्यामः** વ્યાખ્યાન કરશું व्याख्यान करेंगे, **अनुवासनम्** અનુવાસન अनुवासन, **तु** તો तो, **स्नेहः** સ્નેહ स्नेह, **एव** જ છે ही है, **स्नेहः** સ્નેહ स्नेह, **तु** તો तो, **द्विविधः** બે પ્રકારનો છે दो प्रकारका है, **स्थावरात्मकः**

१४९. कार्यमनतिमहत्त्वाद्वा विनिपातयत्यनतिह्रस्वत्वादुदाहरणस्येति- कार्यमनतिमहत्त्वादनतिह्रस्वत्वाच्चोदाहरणस्य (ध.)

१५०. अनुव्याख्यास्यामः – अनुव्याख्यास्यन्ते (ज.)

,, स्थावरात्मकः – स्थावरः (क.)

,, उपदेक्ष्यामः – उपदेक्ष्यते (ढ. त.)

સ્થાવરાત્મક स्थावरात्मक, जङ्गमात्मकः च અને જંગમાત્મક और जङ्गमात्मक, तत्र તેમાં उनमें, स्थावरात्मकः સ્થાવરાત્મક स्थावरात्मक, स्नेहः સ્નેહ स्नेह, तैलम् તલથી ઉત્પન્ન થયેલ तिलोद्भव, अतैलम् च અને તલથી નહિ ઉત્પન્ન થયેલ और अतिलोद्भव, सर्वतः સર્વ રીતે सब तरहसे, तैल- તેલની तैलकी, प्राधान्यात् પ્રધાનતાથી प्रधानतासे, तत् તે उन, द्वयम् બેઉને दोनोंको, तैलम् તેલ तैल, एव જ ही, कृत्वा કરાવીને मान कर, उपदेक्ष्यामः ઉપદેશ કરશું उपदेश करेंगे, जङ्गमात्मकः જંગમાત્મક जङ्गमात्मक, तु તો तो, वसा વસા वसा, मज्जा મજ્જા मज्जा, सर्पिः इति અને ઘી ये और घृत है;

150-(1). We shall hereafter describe the drugs that are used in unctuous enemata. Unctuous enema is unctuous substance. Unctuous substance is of two kinds—the vegetable and the animal. The vegetable kind is classified as oil of til and as oil of other than til. We shall refer to them both here as oil, taking oiliness as the primary sense of oil The animal variety is fat, marrow and ghee.

**तेषां तैलवसामज्जसर्पिषां यथापूर्वं श्रेष्ठं वातश्लेष्मविकारेष्वनुवासनीयेषु, यथोत्तरं तु पित्तविकारेषु, सर्व एव वा सर्वविकारेष्वपि योगमुपयान्ति संस्कारविधिविशेषादिति ॥ १५० ॥**

अनुवासनीयेषु અનુવાસનયોગ્ય अनुवासनयोग्य, वातश्लेष्म- વાત તથા કફના वात और कफके, विकारेषु વિકારોમાં रोगोंमें, तेषाम् તે उन, तैल- તેલ तैल, वसा- વસા वसा, मज्ज- મજ્જા मज्जा, सर्पिषाम् અને ઘીમાંનું और घृतमेंसे, यथापूर्वम् અનુક્રમમાં પૂર્વ यथापूर्व, श्रेष्ठम् શ્રેષ્ઠ છે श्रेष्ठ है, पित्तविकारेषु પિત્તના વિકારોમાં पित्तके विकारोंमें, तु તો तो, यथोत्तरम् ઉત્તરોત્તર શ્રેષ્ઠ છે उत्तरोत्तर श्रेष्ठ है, सर्वविकारेषु अपि અથવા સર્વ વિકારોમાં પણ अथवा सब विकारोंमें भी, सर्वे एव वा સર્વેય सभी, संस्कार- સંસ્કારના संस्कारकी, विधि- વિધિના विधिके, विशेषात् ભેદથી भेदसे, योगम् યોગ योग, उपयान्ति इति પામે છે पाते हैं ॥ १५० ॥

150. Of these, oil, fat, marrow and ghee, each substance is superior in quality to its succeeding one for usage in unctuous enema in disorders of vata and kapha. In the case of pitta disorders each substance is superior to its preceding one. But by virtue of preparation, all of them are fit to go into use in all disorders.

शिरोविरेचनद्रव्याणि—

**शिरोविरेचनद्रव्याणि पुनरपामार्गपिप्पलीमरिचविडङ्गशिग्रुशिरीषतुम्बुरुपील्वजाज्यजमोदावार्ताकीपृथ्वीकैलाहरेणुकाफलानि च, सुमुखसुरसकुठेरकगण्डीरकालमालकपर्णासक्षवकफणिज्झकहरिद्राशृङ्गवेरमूलकलशुनतर्कारीसर्षपपत्राणि च, अर्कालर्ककुष्ठनागदन्तीवचापामार्गश्वेताज्योतिष्मतीगवाक्षीगण्डीरपुष्प्यवाक्पुष्पीवृश्चिकालीवयस्थातिविषामूलानि च, हरिद्राशृङ्गवेरमूलकलशुनकन्दाश्च, लोध्रमदनसप्तपर्णनिम्बार्कपुष्पाणि च, देवदार्वगुरुसरलशल्लकीजिङ्गिन्यसनहिङ्गुनिर्यासाश्च, तेजोवतीवराङ्गेङ्गुदीशोभाञ्जनकबृहतीकण्टकारिकात्वचश्चेति ।**

शिरोविरेचन- શિરોવિરેચન शिरोविरेचन, द्रव्याणि દ્રવ્યો द्रव्य, पुनः તો तो, अपामार्ग- અઘેડો चिरचिटा, पिप्पली- પીપર पीपर, मरिच- મરી मरिच, विडङ्ग- વાવડિંગ विडंग, शिग्रु- સરગવો शोभांजन, शिरीष- શિરીષ सिरीष, तुम्बुरु- તેજફળ तेजबल, पीलु- પીલુ पीलु, अजाजी- જીરું जीरा, अजमोदा- બોડી અજમોદ अजमोद, वार्ताकी- વાર્તાકી वार्ताकी, पृथ्वीका- પૃથ્વીકા

१५०. उपयन्ति—आयान्ति (ध.)

१५१. अपामार्ग—मार्गी (ध. झ. ड.)

,, पिल्वजाजी—बिल्वाजाजी (ध. झ.)

,, शोभाञ्जनक—शोभाञ्जन (ध.)

पृथ्वीका, एला- નાની એલચી इलायची, हरेणुका- અને હરેણુકનાં और हरेणुकाके, फलानि च ફળો। फल, सुमुख- સુમુખ सुमुख, सुरस- સુરસ सुरस, कुठेरक કુઠેરક कुठेरक, गण्डीर- ગંડીર गण्डीरक, कालमालक- કાલમાલક कालमालक, पर्णास- પર્ણાસ पर्णास, क्षवक- નાકછીંકણી नाकछिकनी, फणिज्झक- મરવો मरवा, हरिद्रा- હળદર हल्दी, शृङ्गवेर- સૂંઠ सोंठ, मूलक- મૂળા मूली, लशुन- લસણ लहसुन, तर्कारी- તર્કારી तर्कारी, सर्षप- અને સરસવનાં और सरसोंके, पत्राणि च પાન पत्ते, अर्क- આકડો आक, अलर्क- સફેદ આકડો श्वेत आक, कुष्ठ- કઠ कुठ, नागदन्ती- નાગદન્તી हकूम, वचा- વજ वच, अपामार्ग- અઘેડો चिरचिटा, श्वेता- શ્વેતા श्वेता, ज्योतिष्मती- માલકાંગણી मालकंगनी, गवाक्षी- ઇન્દ્રવારૂણી इन्द्रायण, गण्डीरपुष्पी- ગંડીરપુષ્પી गंडीर- पुष्पी, अवाक्पुष्पी- ઊંધાફૂલી छोटागुल्पा, वृश्चिकाली- ખાજવણી बिच्छूबूटी, वयस्था- વયસ્થા वयस्था, अतिविषा- અને અતિવિષનાં और अतीसके, मूलानि च મૂળ मूल, हरिद्रा- હળદર हल्दी, शृङ्गवेर- સૂંઠ सोंठ, मूलक- મૂળા मूली, लशुन- અને લસણ એઓના और लहशुन इनके, कन्दाः કંદ कन्द, लोध्र- લોધર लोध, मदन- મીંઢળ मैनफल, सप्तपर्ण- સાતવિન सतवन, निम्ब- લીમડો नीम, अर्क- અને આકડાનાં और आकके, पुष्पाणि च ફૂલ फूल, देवदारु- દેવદાર देवदारु, अगुरु- અગર अगर, सरल- ચીડ धूपसरल, शल्लकी- શાલેડા कुंदरु, जिङ्गिनी- મવેડી जिंगन, असन- અસન खाज, हिङ्गु- અને હિંગના વૃક્ષના और हींगके वृक्षके, निर्यासाः ગુંદ गोंद, तेजोवती- તેજફળ तेजबल, वराङ्ग- તજ दालचीनी, इङ्गुदी- ઇંગોરિયું हिंगोट, शोभाञ्जनक- સરગવો सहजन, बृहती- ઊભી ભોરિંગણી बड़ी कटेरी, कण्टकारिका- અને બેઠી ભોરિંગણીની और कटेरीके, त्वचः च इति છાલ એ છે त्वचा ये हैं;

151-(1). The articles that go into the preparations of errhines are—(1) The fruits of rough chaff tree, long pepper, black pepper, embelia, drum-stick, siris, indian toothache tree, cumin, celery, brinjal, big cardamom, fragrant piper; (2) The leaves of deodar, holy basil, shrubby basil, gandira, kalamalaka, parnasa, sneeze-wort, sweet marjoram, turmeric, ginger, radish, garlic, wind killer and rape; (3) The roots of mudar, white mudar, costus, oblong leaved croton, sweet flag, rough chaff tree, sveta, staff-plant, colocynth, gandira-pushpi, indian borage, climbing nettle, mercury, brahmi and indian atees; (4) The bulbs of turmeric, ginger, radish and garlic; (5) The flowers of lodh, emetic nut, dita bark tree, neem and mudar; (6) The exudation of deodar, eagle wood, long-leaved pine, indian olibanum, indian ash tree, spinous kino tree, and asafetida; (7) The barks of indian tooth-ache tree, cinnamon, zachum oil plant, drumstick, indian nightshade and yellow-berried nightshade.

**शिरोविरेचनं सप्तविधं, फल-पत्र-मूल-कन्द-पुष्प-निर्यास-त्वगाश्रयभेदात् ।**

फल- ફળ फल, पत्र- પાન पत्र, मूल- મૂળ मूल, कन्द- કન્દ कन्द, पुष्प- ફૂલ पुष्प, निर्यास- ગુંદ निर्यास, त्वक्- અને છાલ और छाल, आश्रयभेदात् એ આશ્રયના ભેદથી इन आश्रयके भेदसे, शिरोविरेचनम् શિરોવિરેચન शिरोविरेचन, सप्तविधम् સાત પ્રકારનું છે सात प्रकारका है;

151-(2). Thus these are the seven varieties of articles used in errhines, classified according to their source, viz., fruits, leaves, roots, bulbs, flowers, exudations and barks of plants.

**लवणकटुतिक्तकषायाणि चेन्द्रियोपशयानि तथाऽपराण्यनुक्तान्यपि द्रव्याणि यथायोगविहि-**

तानि शिरोविरेचनार्थमुपदिश्यन्त इति ॥ १५१ ॥

इन्द्रिय- ઇન્દ્રિયોને માટે इन्द्रियोंके लिए, उपशयानि સુખકર सुखकर, लवण- લવણ लवण, कटु- કટુ कटु, तिक्त- તિક્ત तिक्त, कषायाणि च અને કષાય દ્રવ્યો और कषाय द्रव्य, तथा તથા तथा, यथायोग- યોગ અનુસાર योगके अनुसार, विहितानि તૈયાર કરેલાં तैयार किये हुए, अपराणि અને બીજાં और अन्य, अनुक्तानि ન કહેલાં अनुक्त, अपि પણ भी, द्रव्याणि દ્રવ્યોનો द्रव्यका, शिरोविरेचन-अर्थम् શિરોવિરેચન માટે शिरोविरेचनके लिए, उपदिश्यन्ते इति ઉપદેશ કરવામાં આવે છે उपदेश किया जाता है ॥ १५१ ॥

151. Those that are salt, pungent, bitter and astringent in taste and are beneficial to the senses, as well as even other drugs that are not mentioned here but that may be regarded as beneficial in the preparations, are recommended for use as errhines.

अध्यायोक्तविषयाः —

तत्र श्लोकाः—

लक्षणाचार्यशिष्याणां परीक्षा कारणं च यत् ।
अध्येयाध्यापनविधी संभाषाविधिरेव च ॥१५२॥
षड्भिरूनानि पञ्चाशद्वादमार्गपदानि च ।
पदानि दश चान्यानि कारणादीनि तत्त्वतः ॥१५३॥
संप्रश्नश्च परीक्षादेर्नवको वमनादिषु ।
भिषग्जितीये रोगाणां विमाने संप्रकाशितः ॥१५४॥

तत्र श्लोकाः તે વિષયમાં ઉપસંહારના શ્લોકો છે કે उस विषयमें उपसंहारके श्लोक हैं कि, लक्षण- શાસ્ત્ર शास्त्र, आचार्य- આચાર્ય आचार्य, शिष्याणाम् અને શિષ્યની और शिष्यकी, परीक्षा પરીક્ષા परीक्षा, यत् च જે जो, कारणम् કારણ कारण, अध्येय- અધ્યયન अध्ययन, अध्यापन- તથા અધ્યાપનના तथा अध्यापनकी, विधी વિધિ विधि, संभाषाविधिः एव च અને સંભાષાવિધિ और संभाषाविधि, षड्भिः છથી छःसे, ऊनानि पञ्चाशत् ઓછાં એવાં પચ્ચાસ અર્થાત્ ચુંમાલીસ कम ऐसे पचास अर्थात् चवालीस, वादमार्ग- વાદમાર્ગનાં वादमार्गके, पदानि च પદો पद, अन्यानि બીજાં अन्य, कारण-आदीनि કારણ વગેરે कारणादि, दश દશ दस, पदानि च પદો पद, वमनादिषु અને વમનાદિકમાં और वमन आदिमें, परीक्षादेः પરીક્ષા વગેરે परीक्षा आदि, नवकः નવ नौ, संप्रश्नः च પ્રશ્નો प्रश्न, रोगाणाम् भिषग्जितीये રોગભિષગ્જિતીય रोगभिषग्जितीय, विमाने વિમાનમાં विमानमें, तत्त्वतः તત્ત્વરૂપથી तत्त्वरूपसे, संप्रकाशितः પ્રકાશિત કર્યાં છે प्रकाशित किये हैं ॥ १५२-१५४ ॥

Here are the recapitulatory verses–

152-154. The test of the treatise, the teacher and the disciple, and its purpose, the method of study and of instruction, and the method of disputation; the forty-four technical terms pertaining to disputation, the ten other terms such as causes etc., the nine queries about examination etc., and the drugs that go into use in emesis and other procedures, have all been scientifically explained in this chapter on the specific determination of the measure of the science of healing.

बहुविधमिदमुक्तमर्थजातं
बहुविधवाक्यविचित्रमर्थकान्तम् ।
बहुविधशुभशब्दसन्धियुक्तं
बहुविधवादनिसूदनं परेषाम् ॥ १५५॥

बहुविध- બહુ પ્રકારનાં बहुत प्रकारके, वाक्य- વાક્યોથી वाक्योंसे, विचित्रम् વિચિત્ર विचित्र, अर्थ- અર્થોથી अर्थोंसे, कान्तम् સુંદર सुन्दर, बहुविध- બહુ પ્રકારના बहुत प्रकारके, शुभ- શુભ शुभ, शब्द-

१५३. षड्भिरूनानि–षडूनानि (च द.)
१५४. विमाने–अध्याये (च.)
,, संप्रकाशितः–संप्रदर्शितः (ग. च)
१५५. अर्थकान्तम्–अर्थजातम् (ग.)

शब्दोनी शब्दोंकी, सन्धि- संधिथी संधियोंसे, युक्तम् युक्त युक्त, परेषाम् अने प्रतिपक्षीओना और प्रतिवादियोंके, बहुविध- बहु प्रकारना बहुत प्रकारके, वाद- वादनुं वादका, निसूदनम् खंडन करनार खंडन करनेवाला, बहुविधम् बहु प्रकारनो बहुत प्रकारका, इदम् आ यह, अर्थजातम् विषयसमूह विषयसमूह, उक्तम् कह्यो छे कहा है ॥ १५५ ॥

155. Various modes of expressions with their varied import, many kinds of definitions of wondrous significance, various modes of speech characterised by exquisite phrasing and syntax, and calculated to annihilate the arguments of the opponents in debate, have all been described here.

**इमां मतिं बहुविधहेतुसंश्रयां**
**विजज्ञिवान् परमतवादसूदनीम् ।**
**न सज्जते परवचनावमर्दने**
**न शक्यते परवचनैश्च मर्दितुम् ॥१५६॥**

पर- प्रतिपक्षीना प्रतिवादियोंके, मत- संमत संमत, वाद- वादनुं वादका, सूदनीम् खंडन करनार खण्डन करनेवाली, बहुविध- बहु प्रकारना बहुत प्रकारके, हेतु- हेतुथी हेतुसे, संश्रयाम् युक्त युक्त, इमाम् आ इस, मतिम् बुद्धिने बुद्धिको, विजज्ञिवान् जाणनार जाननेवाला, परवचन- प्रतिपक्षीना वचनना प्रतिवादियोंके वचनके, अवमर्दने खंडनमां खंडनमें, न नथी नहीं, सज्जते खंचातो हिचकता, परवचनैः च अने प्रतिपक्षीओनां वचनथी और प्रतिवादियोंके वचनोंसे, मर्दितुम् हरावी हराया, न शक्यते शकातो नथी नहीं जा सकता ॥ १५६ ॥

156. One who is versed in this science of speech that is supported on varied reasoning and that disproves the opponent's view, is not afraid of an opponent's arguments; nor can he be defeated by such an opponent in debate.

**दोषादीनां तु भावानां सर्वेषामेव हेतुमत् ।**
**मानात् सम्यग्विमानानि निरुक्तानि विभागशः॥१५७**

सर्वेषाम् सर्वे सब, एव ज ही, दोष-आदीनाम् दोषादि दोष आदि, भावानाम् भावोनुं भावोंका, तु तो तो, हेतुमत् हेतुपूर्वक हेतुपूर्वक, सम्यक् सारी रीते भली प्रकार, मानात् ज्ञान आपवाने लीधे ज्ञान करानेसे, विभागशः भिन्न भिन्न पृथक् पृथक्, विमानानि विमानोने विमान, निरुक्तानि आ विमानस्थानमां निरुक्ति साथे कह्यां छे इस विमानस्थानमें निरुक्तिके साथ कहे हैं ॥ १५७ ॥

157. Thus the specific determination of morbid humors and all other things necessary for their knowledge, have been defined from the point of view of their cause and measure, and according to their proper classification.

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने रोगभिषग्जितीयविमानं नामाष्टमोऽध्यायः ॥८॥**

**(अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।**
**अनेनावधिना स्थानं विमानानां समर्थितम् ।)**

इति आ प्रमाणे इस प्रकार, अग्निवेशकृते अग्निवेशे रचेला अग्निवेशसे बनाये, चरकप्रतिसंस्कृते तन्त्रे अने चरकथी प्रतिसंस्कार पामेला आ शास्त्रमां और चरकके द्वारा प्रतिसंस्कृत इस शास्त्रके, विमानस्थाने विमानस्थानमां विमानस्थानमें, 'रोगभिषग्जितीयविमानम्' 'रोगभिषग्जितीय विमान' 'रोगभिषग्जितीय विमान', नाम नामनो नामका, अष्टमः आठमो आठवाँ, अध्यायः अध्याय संपूर्ण थयो अध्याय समाप्त हुआ ॥ ८ ॥

अग्निवेशकृते अग्निवेशे रचेला अग्निवेशसे बनाये, चरकप्रतिसंस्कृते अने चरकथी प्रतिसंस्कार पामेला आ शास्त्रमां और चरकके द्वारा संस्कृत इस शास्त्रमें, अनेन

१५६. न सज्जते परवचनावमर्दने—निलीयते परवचनावमर्दनैः (क. च. ञ. ड. द. ब. फ.)

१५७. हेतुमत्—हेतुना (च.)

अवधिना અહીં સુધી यहां तक, विमानानाम् स्थानम् વિમાનસ્થાન विमानस्थान, समर्थितम् કહ્યું છે कहा है।

8. Thus in the section on Specific Determination of Measure in the treatise complied by Agnivesa and revised by Caraka, the eighth chapter entitled "The Specific Determination of the Measure of the Science of Healing" is completed.

(Here ends the section on Specific Determination of Measure' in the treatise complied by Agnivesa and revised by Caraka.)

विमानस्थानं समाप्तम्।

॥ प्रथमः खंडः समाप्त ः ॥

